शिरःस्थितगङ्गेष्वेकादशसु रुद्रेपु त्रिपुष्करतदंकृतसंनिधानेपु सत्स्वहं जाने भूमौ चतुर्दशभ्यो मु(l 9)वनेभ्यः पवित्रता तत्र राशीभूता अन्यथा तत्रैव रुद्रा. किं वसेयु. . एकादश रुद्राः पुष्कराणि त्रीणि च(l 10) चतुर्दश भवन्तीत्यर्थच्छाया ॥ 62.

तथा शिरोजानपदेन शम्भोः
कामण्डलव्येन तथा ममापि .
ग्र(l 11)वेपि पाद्येन निजैस्तथोर्वी
यथा पवित्रामपि पुष्करैस्तैः ॥

शम्भोश्शिरसि जानपदैस्स्थिरस्थितै. पुष्करै.(l 12) जलैर्गाङ्गैरित्यर्थः मम कामण्डलव्यैः कमण्डलुस्थितैर्गाङ्गैरित्यर्थः त्वमपि भूमिं पवित्रा तथा निजैः पाद्यैः पुष्करैर्गाङ्गैः(l 13) न जानामि यथा तैस्त्रिपुष्करस्तैर्जानासि . गङ्गातोपि पुष्करं पवित्रमित्यर्थः .

पुष्करं करिहस्ताग्रे(l.14) वाद्यभाण्डमुखे जले .
व्योम्नि खड्गफले पद्मे तीर्थौषधिविशेषयो-

रित्यमरः ॥ 63.

तापत्रयं दर्श(l 15)नतो दहन्ति
मलत्रयं स्पर्शनतो नुदन्ति .
सन्ध्यात्रयं वन्दनतो जयन्ति
स्रोतस्त्रयं विस्मरयन्ति गाङ्गम् ॥ (l.16)

आध्यात्मिकाधिदैविकाधिभौतिकरूपं तापत्रयं दर्शनेन त्रीणि पुष्कराणि दहन्ति तथाणवमा(l 17)यीयकार्यरूपं मलत्रयं स्पर्शनेन निवारयन्ति तथा [वन्द]नेन सन्ध्यात्रयवन्दनादधिकं फलं(l 18) दिशन्ति तथात एव गङ्गाप्रवाहत्रितयं जयन्ति ॥ 64.

---

1 Ms. पिरम्पि°. 2 Ms. तट lc. under 18. 3 Ms. °नैनयेः°, निजै lc. on margin 4 Ms °ममि 5 Is it °दे° गिर स्थिते. ? 6 Amara, 3 1859-60. 7 Ms .ध्या°. 8 Ms. गङ्गां.

गर्भकुलकम् ॥

उपासते मां त्रिदिव(1.19)स्पृशोपि
यदर्थमेव त्रिदशांस्त्रिसन्ध्यम् .
त्रिविक्रम त्रीणि पदानि विष्णो-
स्तव प्रवृत्तानि यतस्त्रिलो(1.20)क्याम् ॥

यदर्थं मोक्षप्राप्त्यर्थं स्वर्गस्थिता देवा अपि मां नित्यं सेवन्ते तथा हे त्रिविक्रम विष्णोर्विश्वव्यापकत्तां(1.21) कुर्वतस्तव त्रीणि पदानि यतः प्रभावात्त्रिलोकव्यापीनि संपन्नानि ॥ 65.

न्यक्षत्त्रिशूलस्य शिखा(1.22)त्रयेपि
त्रिविष्टपं येन तृणाय मत्वा .
त्रिशङ्कुदिङ्नाथमुपांशुभूव
पुराणि च त्रीणि तृणीचकार ॥ (1.23)

त्रिशूलस्य धारात्रये सत्यपि येनैव महिम्ना स्वर्गं तृणायेव मत्वा अयमर्थः शक्त्युत्कर्षात्पुनरपि(1.24) स्वर्गं प्रसादयामीतीश्वरो मत्तवान्धर्माधर्मविवेचकत्वेन स्वर्गस्य रक्षितारं त्रिशङ्कुदिशो दक्षिण(1.25*)शाया नाथं स्वामिनं धर्मराजमुपांशुभूव स्वर्ग[3]·········तेतस्स्वर्गस्यापि दाहः प्रसज्यते तस्यापि दाहोस्तु किं तेनेति[2] त्रिपुराणि चाधाक्षीत् . उपांशुभूवेत्ति गुणाभावश्चिन्त्यः ॥ (1.1) 66.

किं भूयसा तीव्रुदयानवाप्य
शक्तीश्च सिद्धीश्च समेत्य तिस्रः .
संगृह्य मित्रत्रितयं निगृह्या-
मित्रत्रयं(1.2) चोज्ज्वलितप्रयत्नाः ॥ 67.

1. Ms. 'दिग्'. 2 Ms. स्वर्गस्थिता lc. on the margin. 3 Ms. स्व° to °नि lc. on top margin. 4. Pāṇini, 7.3.86.(also see 3.1.38.) 5 Ms. त्रिय°. 6 Ms. °गृह्य°.

त्रिकूटशैलावधिसिद्धयात्राः
क्ष्मापास्त्रयं राजचतुष्टयानाम् ‧
त्रिधा त्रिख(।3)ण्डामपि मेदिनीं च
जित्वा यदासादयितुं न योग्याः ॥ 68.

दिशन्ति तत्त्रीण्यपि पुष्कराणि
संदर्श(।4)नस्पर्शनसंनिधानैः ‧
युगत्रयीपर्यवसानकाले
दुःखैस्त्रिभिस्संप्रति दूषितानि ॥

भूयसा(।5) किं भवति बहुनोक्तेन किमित्यर्थः ‧ आत्मोदयादींस्त्रीनुदयान्प्रभुशक्त्यादींस्तिस्रश्शक्तीर्भूमिसि(।6)द्ध्यादीस्तिस्रस्सिद्धीर्मित्रत्रितयं मित्रमित्रमित्राधिमित्राणि प्राप्य तथा रिपुं[1] रिपुमित्रं रिपु(।7)मित्रमित्रं च जित्वा लब्धधर्मार्थकामास्त्रिकूटाद्रिपर्यन्तं जयन्तो राजानो राजचतुष्टयानां त्रयं(।8) द्वादशविधं राजचक्रं जित्वा तथा त्रिधा त्रिखण्डां भुवं च जित्वा यत्प्राप्तुं न योग्यास्तद्दर्शनादिभिर्दे(।9)शानानि त्रिपुष्कराणि कलिकालेच त्रिभिर्दुःखैराध्यात्मिकादिभिर्दूषितानि ॥ 69.

माप्तं न(।10) दिङ्नागकरस्थितेन
वाग्देवताश्रीकरवर्तिना वा ‧
सम्बन्धिना वार्णवसप्तकस्य
यत्सप्तसप्तेरपि(।11) वर्त्मना वा ॥ 70.

यद्वादनीयेन महानटस्य
नाट्यक्षणे नन्दिमुखैर्गणैर्वा ‧
यत्त्रिष्ठता वा तव नन्दके(।12)स्मि-
न्मेघेऽसुरस्त्रीस्मितचन्द्रिकायाः ॥ 71.

1 Ms. 'पु.  2 Ms. 'मित्रं'.

तीर्थेन तत्कस्य न पुष्कराक्ष
त्रिधा युगेषु त्रिषु पुष्करेण .(1.13)
बभूव चिन्तामणिकामधेनु-
कल्पद्रुमभ्राग्रहरेण साम्यम् ॥.

तिलकम् ॥

हे पुष्कराक्ष(1.14) दिङ्नागानां करस्थेन पुष्करेण कराग्रेण वाग्देवतायाः श्रियश्च करवर्त्तिना वा पुष्करेण पद्मेन सप्तसमु(1.15)द्राणां पुष्करेण जलेन सप्तसप्ते रवेर्वर्त्मना पुष्करेणाकाशेन महानटेश्वरस्य नाट्य(1.16)काले नन्दि-मुखैर्वादनीयेन पुष्करेण मुरजेन तथा दैत्यस्त्रीहासज्योत्स्नाया मेघे निवारके (1.17) इत्यर्थः तदास्मिन्नन्दकाख्ये खड्गे तिष्ठता पुष्करेणाग्रेण च यत्र प्राप्तं तत्त्रिषु युगेषु चिन्तार(1.18)त्नादिभ्यश्श्रेष्ठेन त्रिपुष्करेण साम्यं कस्य न बभूव ॥ 72.

स्वयं पयोधिं विरसं विदित्वा
त्वं पुण्ड(1.19)रीकाक्ष यदभ्यतिष्ठः .
शयालुतायास्तदयं न कालो
दयालुता सा समयानुयाता ॥(1.20)

हे पुण्डरीकाक्ष समुद्रं क्षारं मत्वेव त्वं स्वयमप्रार्थित एव तत्पुष्करमाश्रयः ततस्तव नायमव(1.21)लेप[कालस्तव क]रुणोचिता ॥. 73.

उत्तिष्ठमाने त्वयि माननीय
शङ्कास्पदं कस्य कलिर्वराकः .(1.22),
न हि त्रिलोकीभयभञ्जनार्थे
तवोद्यमे द्वापरमप्यवैमि ॥

हे माननीय त्वय्युत्तिष्ठमाने गृहीतो(1.23)द्यमे सति वराकः कलियुगं कलहश्च कस्य शङ्कास्थानं . न कश्चित्कलेश्शङ्कत इत्यर्थः . अत्र हेतुः(1.24)

---

1 Ms. श्रियश्च lc. under 1.14. 2 or °दभ्यतिष्ठः ? 3 Ms. °श्रेयः . 4 Add कलिः.

त्रिजगद्भीतिहरणार्थे तवोद्योगे द्वापरं युगं संदेहं च न मन्ये . प्रतिमल्ला-भावादिति भाव. . य(1 25**6[1])त्र द्वापराभावस्तत्र कथं कलिरित्युक्तिसङ्गतिः . सन्देहद्वापरौ चाथेत्यमरः ॥ 74.

व्याहृत्य वाक्यमिति पुष्कर(1 1)कारणेन
तूष्णीमभूयत च पुष्करकारणेन .
आसर्गसम्मतपिशाचजनार्दनस्य
भास्वत्यपत्यत दृ(1 2)शा च जनार्दनस्य ॥

पुष्करकारणेन पद्मजन्मना त्रिपुष्करहेतोर्वचनमुक्त्वा तूष्णीं भूतं च जनार्दनस्य(1 3) दृशा सूर्ये पतितं च. द्वौ चशब्दावेककालतां सूचयतः . यतस्सर्गादारभ्य संमतं पिशाचजनाना(1 4)मर्दनं मारणं यस्य ॥ 75.

तत्कालं रविमण्डलात्पुनरिव त्वष्टुर्गताद्गोचरं
दैत्यारेर्विपयीकृताद्रविम(1 5)येनैवेक्षणेनोदगात् .
गाढाकृष्टनभोवरोहसमयन्यञ्चन्मुखाश्वावली-
वल्गाहिश्रुटितापतत्फ(1 6)णमणिज्योतिस्सपत्नं महः ॥

विष्णो रविमयेन नेत्रेण स्थानीकृतान्नारायणेन दक्षिणदृशा वी(1.7)-क्षितावित्यर्थः सूर्यमण्डलात्तदा तेज उदगा[न्निर्ग]तम् अतस्संभाव्यते विश्व-कर्मणो गोचरमिव(1 8) गतात् . विश्वकर्मणा हि पूर्वं तक्षितात्सूर्यात्तेजः पति-तम् . गाढमाकृष्टाश्वं तेन नभसोवरोहस(1 9)मये न्यञ्चन्मुखा यातोश्वश्रेणि-स्तस्या वल्गाभूता येऽहयस्तेभ्यस्त्रुटिता अत एवापतन्तो ये फणमणयः(1.10) तेषां तेजस्सपत्नं समम् ॥ 76.

आकालाग्नेरशिवान्तं प्रथममजनि यत्तद्विपर्यासवृत्त्या
संभ(1.11)त्याग्नेयलिङ्गं किमिदमन्तरत्यन्यथेयत्क तेजः .

---

1 Ms पृ. रा. वि = vertically on margin 2 Amara, 1.142.
3 Ms. °दश 4 Is it °या भृणाण° ? 5 Ms. °दव°. 6 Ms °त्रिफणि°.

इत्यन्तः कान्तिजातं कमलजकमलाकान्तमेला(1.12)पवेला-
साक्षित्वेन स्थितानां किमपि दिविपदां विस्मयं तद्वितेने ॥

तत्कान्तिजातं स तेजःपुञ्जो नभ(1.13)श्चराणामाश्चर्यमुदपादयत् . कदाचित्तैः कश्चित्तेजःपुञ्जो न दृष्ट इत्याह . कमलजो ब्रह्मा क(1.14)मलाकान्तो विष्णुस्तयोस्संघटनदर्शिनाम् यद्वा तयोस्संघटनं पश्यतामिति वस्तुधर्मः . इति(1.15)र्हेतौ . कालाग्नेरारभ्य शिवपर्यन्तं पूर्वं यदजनि विपर्यासवृत्या-काशादधः प्रवृत्या तदाग्नेय(1.16)लिङ्गमिदं किमवतरति कि[मवतीर्ण]म् अन्यथा यदीदमाग्नेयलिङ्गं न भवति तदा इयत्ते(1.17)जः क भवतीति भद्रम् ॥ 77.

श्रीलोलराजसुतपण्डितभट्टनोन-
राजात्मजो विवरणं व्यधिता(1.18)द्यसर्गे .
आज्ञामवाप्य विदुषां किल जोनराजः
पृथ्वीमहेन्द्रविजयाभिधकाव्यराजे ॥(1.19)

पृथ्वीराजविजये प्रथमस्सर्गः ॥

---

# [ द्वितीयः सर्गः ]

अथांशुभिस्सूर्यमयस्य चक्षुष-
स्स सूर्यकान्ता(1.20)दिव सूर्यमण्डलात् .
जवादवारोहदखण्डचण्डिमा
वसुन्धरासंमुखमर्चिषां चयः ॥(1.21)

अथानन्तरं सूर्यसहितस्य(!) नेत्रस्य रश्मिभिः करणभूतैस्सूर्यबिम्बाज्ज-
वेन ज्वा(1 22)लापुञ्जोतितीक्ष्णो भुवमवतीर्णवान् यथार्कांशुभिस्सूर्यकान्ता-
दवरोहवि निष्कामति ॥(1.23) 1.

किमाहुतीः कर्थन शातमन्यवी-
र्निवेश्य बिम्बे द्युमणेर्हुताशनः .
समिद्धमूर्त्तिस्सुहृदान्तरिक्षतो(1 24)
निवृत्य भूयोप्यधितिष्ठति क्षितिम् ॥ 2.

किमेष रत्नाकर एव मूर्त्तिमा-
ननेन किं वा महितस्स वाडवः .(1 25°)
सुरापगातिप्रणयप्रकोपव-
त्पतङ्गकन्यानुनयार्थमागतः ॥ 3.

सुषुम्णनाम्नः किरणस्य चन्द्रमाः
प्रयाति(1 1) यस्य प्रतिदर्शमर्थितां .
तमेव सर्वं रविणा किमर्पितं
प्रदर्शयिष्यत्ययमोषधीः प्रति ॥ 4.

---

1 Ms. सूर्ये दृष्टे इत्यर्थ- crossed after °र. 2 Is it कथन ?. 3 Ms. °मर्यदा° 4 Ms °प्रमेव°.

किमुत्त(1.2)रस्यां दिशि वृद्धतेजसा
कृतोपचारो वसुभिर्विवस्वता .
उपेत्य रम्भाप्रणयात्त्रिविष्टपं
व्र(1.3)जत्यसावुत्तरदिक्पतेस्सुतः ॥ 5.

किमेष सत्यप्यमृतांशुसौहृदे
तिरस्कृतश्चन्द्रकिरीटतेजसा .(1.4)
विरागतस्सूत्रितमित्रसंग्रहो
जगज्जिगीषुर्मदनोवरोहति ॥ 6.

किमोषधीशस्य सहोदरो भिष-
क्कृ(1.5)तोपदेशाश्चिरकालमश्विनोः .
अनामयीकर्तुमदः क्षमातलं
त्विषां निधेर्मण्डलमेष मुञ्च(1.6)ति ॥ 7.

किमेष राशिस्थितिमेत्य भास्वता
वितीर्णदोषोपशमार्थवैभवः .
उपप्लवं म्लेच्छकृतं म(1.7)हीसुत-
स्स्वमातुरङ्कं विनिहन्तुमागतः ॥ 8.

अनूरुणा जातिरिति प्रवेशितो
निराकरिष्यंस्तिमि(1.8)रं रसातलात् .
गृहीतशिक्षः किमयं दिवाकरा-
दुरामनन्तः पुनरेति रक्षितुम् ॥ 9.

सहस्रपा(1.9)देन निकामसेवया
कृतप्रसादो द्वितयेन पादयोः .
किमेष पापाकुलितं नु पुष्करं
पवित्रयि(1.10)ष्यन्नरुणोवरोहति ॥ 10.

1 Ms. किमौष°.    2 Ms. °याज्ञा°.

चिराय नारायणपादसेवया
किमुज्झितः पाशवपार्श्वकृतैः .
भवान्तरे(l 11) शिक्षितराक्षसक्षयो-
न्यरूपतामेत्ययमर्कभूर्हरिः ॥ 11.

जनेन कानीनतया कदर्थितः
प्रविश्य युद्ध(l 12)क्रिययार्कमण्डलम् .
अयोनिजन्मत्वसमेधितश्रुतिः
किमेष कर्णः पुनरेति भूतलम् ॥ 12.

जग(l.13)त्प्रदीपादपरः प्रदीपितो
जगत्प्रदीपो नु किमीश्वरेच्छया .
किमेष वा द्वादशसूर्यतेजसा
कृ(l 14)तो भुवि द्वादशराजजित्वरः ॥ 13.

इति प्रतापायतनेन तेजसा
नभश्चराणां निचयेन चर्चितः .
जग(l 15)त्त्रयीपुण्यसमृद्धिसंगमः
पतत्रमध्यात्पुरुषो विनिर्ययौ ॥ 14.

कि॥ शातमन्यवीरिन्द्रार्थं प्रकल्पि(l.16)ताः कर्श्वनाहुतीस्सूर्यबिम्बे प्राप्याग्नौ प्रास्ताहुतिस्सम्य[गादित्य]मुपतिष्ठते इति वाक्यार्थात्(l.17) सुहृदा वायुना समिद्धमूर्त्तिर्दीपितज्वालोयमग्निः किमाकाशान्निवृत्य भूयोपि भूमिमवरोह(l.18)ति ॥

कि॥ अयं मूर्तो रत्नाकर एव किं भवति तथानेन नदीपतिना गङ्गानुरागक्रुध्यद्यमुनानुन(l 19)यार्थं विसृष्टः सम्प्रागतो वाडवः किं भवति ॥ पैतङ्गकन्येति साभिप्रायम् .

1 Is it कश्चना ? 2 Manu, 3.76 3 Ms. प° to °यम् le under l 21.

सु॥ यस्य सुषुम्णानाम्नः किरणस्य प्रत्यमावास्यं(1.20) चन्द्रो याचकत्वमेति तमेव सुषुम्णमशेषमोषधीः प्रत्यर्केण किं दत्तमयमोषधीपतिर्दर्शयि(1.21)ष्यति. संभावनायां लृट्॥

कि॥ उत्तरादिक्पतेस्सुतो नडकूबरो रम्भानुरागाद्दिवमागत्य किं व्या(1.22)वर्तते. दीप्तत्वे हेतुमाह. वसुभिस्तेजोभिर्धनैश्च सूर्येण कृतमानः. तस्य मानने हेतुमाह उत्तरस्यां(1.23) दिशि प्रवर्द्धमानतेजसा॥

कि॥ जगज्जेतुं किं कामोवरोहति. कुतोस्येयती दीप्तिरित्याह कुतो (1.24**?) मित्राणां मित्रस्यार्कस्य च संग्रहो येन. कुतो विरागतो वैराग्यात्. कुतोस्य वैराग्यं जा(1.1)तमित्याह चन्द्रेण कामस्य सुहृद्भावे सत्यपि शशिशेखरेण भस्मीकृतः. अय(1.2)मर्थः यदि मम चन्द्रो मित्रं स्यात्तन्महाहोद्यतं हरमेष निवर्तयेदिति वैराग्या(1.3)न्मित्रस्य रवेस्संग्रहं कृत्वा कामो भूमिमवतीर्णः॥

कि॥ ओषधीशस्य चन्द्रस्य(1.4) सहोदरो भिषग्धन्वन्तरिरिदं भूतलमरोगं कर्तुं सूर्यस्य मण्डलं किं मुञ्चति(1.5). स्वर्गे धन्वन्तरिः किं स्थितवानित्याह चिरकालमश्विनोः कृतोपदेशः. ओषधीश(1.6)स्य सहोदरो भिषगिति साभिप्रायम्॥

कि॥ महीसुतो भौ[मो] म्लेच्छैः कृतमुपद्रवं निवारयितुं(1.7) स्वमातुर्भूमेरङ्कं किमागतः. स कथमुपद्रवं वारयतीत्याह एकस्मिन्मेषा(1.8)दौ राशौ स्थितिमेत्य सूर्येण वितीर्णो दोषोपशमार्थं वैभवो यस्य. रविर्हि दोषो(1.9)शमं रात्रिनाशं करोति॥

अ॥ किमयमनन्तः शेषोर्कमण्डलात्पुनर्भुवमेति रक्षितुं(1.10) योद्धुमित्यर्थः भूतलादन्धकारं निवारयितुं. तत्रोपायमाह सूर्यादधीता(1.11)न्धकारहरण-

---

1 Ms. °स्यामावास्यं. 2 Ms. ११ रा. दि. ■ on margin. 3 Copyist's remark at the top of fol. 8. इदं पत्रं लेखकान्तरेण लिखितं स्यात्. 4 Ms. भो.° 5 Ms. महीं° to भौ° lc. on margin.

शिक्षः . अर्केण कुतो हेतोस्सोध्यापित इत्याह अरुणेन मातृस्व(l 12)स्नेय-त्वात्प्रवेशित· अथ · · र्था··· ·· धारितां भूमिं भूयो र·········
·· · · (l 13)[1].

स ॥ सहस्र[पादेन सूर्येण निकामसे]वनांद्धे[तोः पादद्वितये](l.14)न कृतप्रसादो दत्तपादद्वय. . सूर्यस्य सहस्रपादत्वात्पादद्वयदानोक्तिसङ्गतिः . (l.15)एपोरुणः किं नु म्लेच्छक्षोभितं पुष्करं पवित्रीकर्तुमवरूढः ॥

चि ॥ श्रीरामपा(l 16)दसेवया त्यक्तपशुजन्मपाशाविकारो जन्मान्तरे शि-क्षितराक्षसवधोयमपरं(l 17)

[*Lines 18 to end of page missing*](*)

ततो युद्धे मरणेनार्कमण्डलं प्रविश्य किमेप कर्णो भूतलमेति. कर्णः कथ-मियद्दी(l 1)त इत्याह अयोनिजत्वेन समेधिता द्युतिर्यस्य ॥

जग ॥ जगत्प्रदीपादर्कादी(l 2)श्वरेच्छया प्रदीपितो द्वितीयो जगत्प्रदीपः सूर्यः किमेप भवति. किं वा द्वादशानां(l 3) सूर्याणां तेजसा कृतः किमेप भवति . द्वादशाविधराजजैत्र इति हेतुः ॥

इति ॥ (l 4) प्रतापमूलस्थानेन तेजसा हेतुनैवं देवराजेन चर्चितः कृत-कल्पनः त्रिभुवन(l.5)पुण्यराशि· पुरुपोर्कमण्डलान्निर्गतः ॥

इतः प्रभृति स योपि रेवन्तं इत्यन्तं पु(l 6)रुपरूपवर्णनपरं कुलकम् ॥

यथा द्युसिन्धोस्सलिलाद्यथाग्नितः
तथैव पुण्या(l 7)दपि भानुमण्डलात् .
महेश्वरस्यैप तनोस्समुद्गतो
जगद्विपां संहृतये गुहः (l 8)पुनः ॥

---

1 Ms भत्तित्यन्वयः crossed at the beginning of line. 2 Ms. °नदे°.
3 Ms °द्यधि+l° 4 Ms °भत्प.° 5 Ms. रेवर्म°.
6 Ms °न्येव, °प written above °व.

आग्नेयो गाङ्गेयश्च कुमार इत्यागमः . अतः कविरूहति अष्टमूर्त्ति(l.9)-
मूर्त्यन्तरात्सूर्यमण्डलाच्छत्रच्छायार्थमेष कुमार इव निर्गत इत्युत्प्रेक्षा . पुरुषो
विषयो गु(l.10)हो विषयी . विषयित्वेन विषयस्य सम्भावनार्थं महातेज-
स्त्वमनया······स्समानो(l.11)··············· ॥ 15.

स्वभावसि[द्धाभरणादि] ‿ —
प्रभावलीलार्थगतावकाशया .
शनैर्ज(l.12)नन्या प्रतिमान्यतावशा-
न्निषिद्धयेव स्वयमेव नान्वितः ॥

देवानां छाया न भ(l.13)वतीति प्रसिद्धिः तदेव कविरुत्प्रेक्षापूर्वमुप-
न्यस्यति . शनैर्जनन्या च्छा(l.14)यया नान्वितः . छायाया अभावे हेतुं
संभावयति नैसर्गिकभूषणादी(l.15)-

[Lines 16 to end of page missing] (**8)

द्धेति[6] भावः ॥ 16.

पतङ्गवानायुजरोमकोमलै-
र्निकामकार्श्यैरपि कुन्तलोत्करैः .
गुणाननुज्झद्भि(l.1)रिवान्वयाश्रया-
न्विनिर्ममाणो रजनीपराभवम् ॥

पतंगस्य रवेर्वानायुजा येश्वास्तद्रोमवत्कोम(l.2)लैरत्यर्थमेचकैः केशै
रात्रेरप्यवमानं कुर्वन् . अत उत्प्रेक्ष्यते कारणानुगुणान्गुणानत्यजद्भि(l.3)रि-
वेति . तेषां कारणं दिवार्कमण्डलोत्थितः पुरुषः ॥ 17.

किरीटरत्नातपमण्डलच्छला-
द(l.4)वत्सुधांशोरपि सुन्दरं मुखम् .

1 Is it 'रत्न' ? 2 Ms. इव lc. under l. 10. 3 Ms. 'तार्थगा.'
4 Ms. ९. on margin. 5 Read छाया निषिद्धे'. 6 Ms. 'रसिद्ध'.

अनश्वरीकर्तुमिवाहिमत्विषा
सुधांशुजीवातुमिवांशुमर्पितम् ॥(l 5)

सुधांशोर्जीवातुर्जीवनौषधं सुषुम्णाख्यो रश्मिस्तमिव मौलिस्थरत्नरश्मिव्याजाद्दधत् कु(l 6)ल' प्राप्तमित्याह सूर्येणेन्दुसुन्दरं मुरत्नमविनाशीकर्तुमिव दत्तम्. चन्द्रः क्षीणस्सन्सुषुम्णाप्रवेशेन व(l 7)र्धते. अस्य च मुखं चन्द्रः तमेव सुषुम्णां प्रविशतु यथा न जातु क्षीयत इति भावः ॥ 18.

न मृष्य(l 8)ते कस्यचिदेष वक्रता-
मितीव मत्वा परमार्जवस्पृशा.
कदाचिदिन्दोः कलयेव भास्वता
वि(l 9)तीर्णया चन्दनलेखयान्वितः ॥

सूर्येण प्रसादीकृतया सरलया चन्द्रकलयेवे चन्दन(l 10)ललाटिकया युक्तः. चन्द्रकलायास्सरलत्वकल्पनायां हेतुमाह एष पुरुषः कस्यचि(l 11)द्वक्रतां कुटिलत्वं न सहत इति ॥ 19.

तवासुरान्पादतले करोम्यहं
न शुक्रबुद्ध्या व्यवहार्यमन्यथा.(l 12)
इतीव मुक्तामणिकुण्डलात्मना
शुभग्रहाभ्यामवलम्बितश्रुतिः ॥

इन्दो' कदाचित्क्षीणत्वेन त(l 13)था बुधस्य च जातुचित्पापसाहचर्येण पापात्मकत्वाच्छुभग्रहौ जीवशुक्रावेव ताभ्यां मुक्ता(l 14)कुण्डलव्याजादाधारीकृतकर्णः' अत्रोत्प्रेक्ष्यते तवासुरानित्यादि तत्र जीव आह अहं तव पादतलगानसुरा(l 15)न्करोमि भवता शुक्रप्रेरणया······[न्य]था मद्वचनपरित्यागेन न व्यवहर्तव्यम् शुक्र(l 16)स्यासुरपक्षपातित्वादिति

1 Ms 'वाचन्नि' 2 Ms 'त्रिंपतु 3 Ms चन्द्रक' 4 Read 'भ्या मुक्ता मुक्ताकु'. 5 Ms 'पात्रो'. 6 Ms त' to 'दि lc under l 15.

भावः शुक्र आह तव पादतलेसुरान्करोमि त्वया शुक्रोसुरगुरु(l.17)रिति मयि वैरिपक्षसंभावनयान्यथा मद्वचनत्यागेन न व्यवहर्त्तव्यम् ॥ 20.

महीतले कुत्र(l.18)चिदुज्झितासने
सरस्वती श्रीश्च भयाद्भविष्यतः .
इतीव पद्मौ दधदेतयोः कृते
दृशोश्च्छला(l.19)द ⏑ ⏑ – ⏑ – ⏑ – ॥

·····················सरे भूमौ भविष्यतः अस्माद्धेतोरिव(l.20) 21.

[Lines 21 to end of page missing] (*)

सरोजलक्ष्म्या सितरक्तया रवे-
रयं कुले रत्नमितीव चुम्बितम् ॥

अरुणांशुभिरिव कृतं स्मितकान्तिच्छु(l.1)रितमधरं दधत् . अत्रोत्प्रेक्ष्यते अयं पुरुषस्सूर्यवंशे रत्नभूत इत्यतो हेतोरिव पद्मिन्या शुभ्रारुणया लक्ष्म्या चुम्बितं . माता हि(l.2) पुत्रं चुम्बति ॥ 22.

विनिर्मितेनेव तमोभिराहृतै-
र्विवस्वतान्धङ्करणैर्जगद्द्रुहाम् .
विराजमानस्सह ते(l.3)न वर्मणा
नवाम्बुदेनेव नभोग्रसङ्गिना ॥

जगद्द्रुहां दैत्यानामन्धंकरणैरान्ध्यंकरैः तमोभिः करण(l.4)भूतैरादित्येनानीतैः कृतेन कवचेन शोभमानः तत्कवचदर्शनाद्धि दैत्यानां तमांसि(l.5) दर्पा गलन्ति नभोग्रात्सङ्गिना लग्नेन मेघेनेवेति[4] सम्भावनम् ॥ 23.

त्रिशन्निशाकान्तकला(l.6)सुधालवैः
कलिन्दकन्याजलशेषशुक्तिषु .

1 Ms. °गोन्छ°. 2 Ms. ष° to °या lc. at the top of page. 3 Ms. °रान्धक°.
4 Ms. मेवेवेति, °न° (sic.) lc. above °वे.

च्युतैरिवोत्पन्नमिनस्य मण्डले
मनोरमं मौक्तिक(l 7)दाम धारयन् ॥

यमुनाजलान्निर्गताच्छेपं तदेव शुक्तयस्तासु पतितैः प्रविशच्चन्द्रक(l 8)-लामृतकणैरर्कमण्डले उत्पन्नमिव मुक्ताहारं हारिणं धारयन् ॥ 24.

सुरद्विषां विघ्न(l 9)यितुं मनीषितं
गृहीतमभ्यर्थ्य रवेरिवान्तिकात् .
उदारगारुत्मतनायकच्छला-
त्समुद्वह(l 10)न्नङ्कतले शनैश्चरम् ॥

दीप्तगारुडमध्यमणिव्याजादुरमङ्के शनैश्चरमिव दधन् . कुतः प्रा(l 11)प्त इत्याह रविसमीपाद्याचित्वा गृहीतमिव . याचने हेतुमाह दैत्यानामभिप्रायं हन्तुम्(l 12) . शनैश्चरो हि सेवितश्शत्रून्हन्ति ॥ 25.

किरीटकेयूरयुगाङ्गदद्वयी-
वतंसरत्नप्रतिबिम्बितामरः(l 13) .
सुतान्विधातुर्दधदर्यमार्पिता-
न्स वालखिल्यानिव नानुयात्रिकान् ॥

किरीटकेयूरयुगे चा(l 14)ङ्गदद्वय्यां च यानि वतंसभूतानि रत्नानि तेषु प्रतिबिम्बिता अमरा यस्य सः अतसंभाव्यते(l 15) अनुयात्रिकाननुगमनोद्यतान्ब्रह्मात्मजान्वालखिल्यानिव न न दधदपि तु दधान. . वालखि-(l 16)ल्याः केन हेतुना तं सेवन्ते इत्याह अर्यम्णा दत्तान्. तथा सूर्यो विधय(?)······दिति भावः ॥ 26.

प्रदी[प्यमानो](l.17) रविमण्डलान्तरा-
दवाप्तकर्मारविधेयकर्मणा .

1 Ms 'मंत्रो'. 2 Ms वा'.

कलिन्दकन्यासलिलानुजन्मना
स्वकीर्त्तिग(1.18)ङ्गासहवासिनासिना ॥

कर्मारं शाणं. शाणशाणघर्षणेनेत्यर्थः यमुनायाः यामुनजन्मना सोद-
रेण स(1.19)··············गङ्गया सहवासि[ना खड्गे]न भ्राज-
मानः ॥ 27.

न चक्रमेकं भवति प्रयो(1.20)—— 28.

[ Lines 21 to end of page missing; last 3 letters of line 21 are
मकरे ](**9)

रीं समर्पिताम् ॥

सूर्येण दत्तां मालां कण्ठे धारयन्. अत्र संभाव्यते हरस्य तृतीयनेत्रं
विशतः कामस्य(1.1) हस्तस्रस्तां धनुर्लतां हरस्य दक्षिणनेत्रस्थेनार्केण हरस्य
सकाशात्प्राप्तामद्य सूर्येण दत्तां ॥ 29.

द्वितीय(1.2)वैवस्वतवद्विरोधिनां
हठात्पदं मूर्ध्नि निधातुमुद्यतः.
विनीलगुल्फाभरणांशुमण्डल-
च्छलेन पादौ(1.3) दधदायसाविव ॥

द्वितीयो यम इव शत्रूणां शिरसि बलात्पदं धर्तुं प्रवृत्तो नीलानां
गु(1.4)ल्फाभरणानामंशुराशिव्याजेन लोहमयौ पादाविव दधत्. यमो हि
लोहमयपादः ॥ 30.

स(1.5)पक्षपाते दिनपत्यपत्यमि-
त्यशेषभूमण्डलवन्द्यताकृते.
चकासदङ्गुष्ठनखप्रभामिषा-
त्स्थितेन स(1.6)न्ध्याद्वितयेन पादयोः ॥

1 Ms. कन्दारं. 2 Is it यामुनानुजन्मना ? 3 Ms. स्पद्वासि°. 4 Ms. °निभा°.

अयं दिनपतेरपत्यमित्यतो हेतोस्समस्तजनैर्वन्दनीयत्वार्थं सानुरागं(। 7) स्थितेन सन्ध्याद्वयेन चकासच्छोभमानोऽङ्गुष्ठांशुव्याजात् ॥ 31.

मनोरपि प्रस्तुतधर्मशासन-
श्शनैश्च(। 8)रादप्यलसः कुपद्धतौ ·
हरीश्वराद्प्यतिमित्रवत्सलो
यथोचितं दण्डधरो यमादपि ॥

मनोर(। 9)पि सकाशादारब्धधर्मव्यवहारस्तथा कुपद्धतौ कुत्सितमार्गे भूमिमार्गे च शनेरप्यलसः सु(। 10)ग्रीवादप्यतिशयेन मित्रप्रिय. यमादपि यथोचितदण्ड. . सूर्योत्पत्त्या मन्वादिभ्यो भ्रातृभ्योऽति(। 11)रेको दर्शितः ॥ 32.

यदर्थ्यते किंचन येन केन चि-
त्तदस्य कर्णादपि दातुमीश्वरः .
मनो दधानस्सु(। 12)मनोरुजात्त्ये
विधातुमुज्जागरमश्विनोरपि ॥

येन केनचिद्गुणिना निर्गुणेन वा यत्किंचन दे(। 13)यमदेयं वा स याच्यते तदप्यर्थिने दातुं कर्णादप्युत्साहवान् . अश्विनोरपि सतोरश्विनाव-ना(। 14)दत्येरयर्थः सुमनसां देवानां साधूनां च रुजात्त्ये सावधानं मनो दधत् ॥ 33.

स योपि रेवन्त इ(।.15)ति प्रसिद्धिमा-
नपत्यरत्नं नलिनीविलासिनः .
तुरङ्गविद्याचतुरस्ततोऽप्यसौ
मधुद्विषः पाद(। 16)समीपमासदत् ॥

विंशत्या कुलकर्म् ॥

1 Ms. °वन्ः ‡ Of these 20 verses, beginning with यथा दर्शसन्ध्या°, three are incomplete, but none is entirely lost.

स योऽपि रेवन्तनामा प्रसिद्धस्सूर्यस्य श्रेष्ठः पु(l.17)त्रस्तस्मादप्यश्वविद्याकुशलो विष्णोः पादतलं प्रापत् ॥ 34.

स पुष्कराशेषसमुद्रपूरि(l.18)तैः
कुलापगानां पयसा भृतैरपि .
निधानकुम्भैरपि रत्नसंकर-
प्रभाधनैरुत्पलदामहारि(l.19)भिः ॥ 35.

असर्जयद्भुजगीविभूषितै-
र्भृशं प्रमोदाश्रुभरेण निर्भरैः[1] .
महात्मनष्षोडशभिर्विलोचनै-
र्महाभिषेकं विधिना सहाच्युतः ॥
युगलकम् ॥ (l.20)

सोऽच्युतोऽस्य महात्मनो विधिना ब्रह्मणा सह महाभिषेकं षोडशभिर्नेत्रैरारब्धवान् यत आन(l.21)न्दाश्रुपूरितैर्निधानकुम्भैरिव . तेऽपि भुजङ्गीकृता भवन्ति . अभिषेके षोडश कुम्भा योज्या इ(l.22)त्याचारः . यद्वा पुष्करादीनां च षोडशसंख्यात्वं कुम्भानां षोडशत्वम् ॥ 36.

प्रणामकाले विधिवासुदेवयोः
करैश्चतुर्भिश्च करद्वयेन च .
धृतोत्तमाङ्गस्स(l.23*) षडन्तरानपि
द्विपः प्रतिक्षेप्तुमिवाप्तवान्बलम् ॥

ब्रह्मणः करद्वयेनाच्युतस्य (l.1)करचतुष्टयेन प्रणामावसरे धृतशिरास्सन्कामादीन्षड्शत्रूञ्जेतुं बलं प्रा(l.2)पत् . हस्तानां षट्त्वादिव प्रतीयमानोत्प्रेक्षा च ॥ 37.

अशेषगात्रोदरगर्भवर्तिनां
त(l.3)रङ्गिणीसागरपाथसां लवैः .

---

1 Ms. °वन्द°. 2 Ms. °रे. 3 Ms. महात्म° to °हाच्युतः lc. on margin.
4 Ms. यज्ञ to °त्वम् lc. under l. 23. 5 Copyist's remark at top of p. 2 of fol. 10—अस्मिन्पत्रे लेखकान्तरप्रवृत्तिः.

निरित्वरैर्नेत्रपथेन शार्ङ्गिण-
स्समस्ततीर्थैरिव सो(14)भ्यषिच्यत ॥

नद्यस्सर्वाङ्गसन्धिषु कुक्षौ समुद्रश्च इति दृष्टं हरेस्समस्ताङ्गेषु वर्ति(15)-
नीनां नदीनां तथोदरे स्थितानां समुद्राणां जलकणैर्दृङ्मार्गतो हर्षवशान्निर्ग-
च्छद्भिरशेषतीर्थैरि(16)व सोभिषिक्तः ॥ 38.

निसर्गपूर्णं कलशं दधद्विधि-
र्हरिश्च शङ्खं तत एव पूरयन्. (17)
धराधिपत्ये प्रमदाश्रुणा स्वतः
कृताभिषेकं पुनरभ्यषिञ्चताम् ॥

ब्रह्मा कलशं स्वभावजलपूर्णं दधद्धरिश्च सरित्समुद्रेभ्यश्शङ्खं पूरयन्नु-
भौ ब्रह्माच्युतौ प्रथममानन्दबाष्पेण कृताभि(1)षेकं तं चक्रवर्तित्वे पुनर-
भ्यषिञ्चताम् ॥ (1) 39.

कलौ युगे(18) बुद्धतया स्थितो हरि-
र्ददाति यत्कारुणिको जनान्प्रति .
तदापदस्मादनुभावस(19)प्तकं
स सप्तलोकीविजयस्य साधनम् ॥

कलिकाले बुद्धरूपो हरिर्दयालुर्जनान्प्रति(110) यद्ददाति तदनुभावानां
वक्ष्यमाणानां प्रभावाणां सप्तकं विष्णुसकाशात्प्राप्त(111) सप्तभुवनजय-
स्योपायम् ॥ 40.

महाप्रभावानुपलभ्य सप्त ता-
नवाप्तवान्सप्तम(112)चक्रवर्तिताम् .

---

1 Ms. 'नसा' 2. Mahābhārata, Shānti, 46 63, 'मुद्राश्चत्वारस्तस्मै तोयात्मने नमः', see note 2, p 18 3 Sic Is it दर्शनात्? 4 Ms. 'गंजद'. 5 Ms. 'ज' to 'श' lc. on margin 6 Ms ॥ ७ after 'न्' 7 Ms. the whole of the Comm. on this verse is lc. on margin.

यदस्ति किंचित्करणीयमुच्यतां
तदित्यभूत्प्राञ्जलिरग्रतस्तयोः ॥ (1.13)

सम महतः प्रभावानवाप्य सप्तमचक्रवर्तिभावं लभमानस्स कर्तव्यमाज्ञाप्य(1.14)तामिति वदंस्तयोः पुरो बद्धाञ्जलिरभूत् ॥ 41.

सुदर्शनस्य प्रतिपादकं प्रति(1.15)
त्रिनेत्रमुत्तानितपूर्वमेकदा ॰
पुरोस्य विश्वाभयदक्षिणाकृते
प्रसारयामा(1.16)स करं जनार्दनः ॥

सुदर्शनस्य चक्रस्य दातारं त्रिनेत्रं प्रति हरिणा कदाचि(1.17)त्पूर्वमुत्तानितं हस्तं हरिरस्याग्रे जगदभयदक्षिणार्थं प्रसारयामासोत्तानं(1.18) कृतवान् ॥ 42.

ततो नियुक्तस्स यथोदिते विधौ
विधौ च देवे च विधौ तिरोहिते ॰
यश(1.19)स्यमर्त्यारि– – ⏑ –विधौ
विधौतपाप्मा भरवन्धमग्रहीत् ॥

विधौ ब्रह्मणि वि(1.20**10)धौ विष्णौ च देवेन्तर्भूते सति ताभ्यामसुरवधे प्रेरितो विधौतपाप्मानुचितपापस्स पुरुषोसुरप(1.1)ध्मानां संकोचकत्वाच्चन्द्रसमे यशसि भरवन्धसभिनिवेशं गृहीतवान् ॥ 43.

करेण चापस्य ह(1.2)रेर्मनीषया
बलेन मानस्य नयस्य मन्त्रिभिः ॰
धृतस्य नामाग्रिमवर्णनिर्मितां
स चाहमानोय(1.3)मिति प्रथां ययौ ॥

---

1 Ms. °ससो°. 2 Is it °रिसरोजिनोविधो ? 3 Ms. पृ॰ रा॰ त्रि॰ on margin.
4 Ms. चन्दस°. 5 Ms. निन्दितां.

स पुरुषश्चाहमान इति प्रथां प्राप्त. नाम्नामभिमाक्षरैः कृतां . केषां ना-
(l 4)मानीत्याह . करेण धृतस्य चापस्य तथा मनीषया धृतस्य हरेस्तथा ब-
लेन धृतस्य मानस्य(l 5) तथा मन्त्रिभिर्धृतस्य नयस्य. चापादीनां नामा-
द्यक्षरैरिव कृतां चाहमान इति संज्ञां स लब्ध(l 6)वानित्यर्थः ॥ 44.

कदाचिदुत्कण्ठित एष मा स्म गा-
द्विलोकयन्नर्कमितीव विष्णुना .
विरिञ्चसा(l 7)मान्यमवेत्य लम्भितं
स्वनाभिपङ्केरुहमातपत्रताम् ॥

एष सूर्यपुत्रः पितर्युत्कण्ठितस्सूर्य(l 8) विलोकयन्सूर्यदर्शनहेतोरस्सूर्य मा
गादितीव माहात्म्यविषये ब्रह्मणस्साद्दश्यमवेत्य विष्णु(l 9)नास्य स्वनाभि-
पद्मं छत्रतां नीतम् . छत्रत्वेन नाभिपद्मं हरिरदादित्यर्थः . विलोकयन्निति
हे(l.10)तौ शतृप्रत्ययः . अयमर्थः ब्रह्मा मम नाभिपद्माश्रयः अयं च ब्रह्म-
णस्सदृशः अस्याप्यहं(l 11) निजपद्मं ददामीति . यद्वा विरिञ्चसामान्यं
साधारणमिति नाभिपद्मस्य विशेषणम् . त(l.12)स्यातपत्रतामवेत्य लम्भि-
तम् . उपेत्येति पाठ आर्ष ॥ 45.

विष्टद्धिमानीय दिनानि कानिचि-
त्पु(l 13)नः पिता ते तनुतां तनोति मे .
यशोनिधे तद्विभृहि त्वमेव मा-
मितीव सेवापरमिन्दुमण्ड(l 14)लम् ॥ 46.

तथा न विश्रान्तिपदं रिपुर्मधो-
रवैति मां मानद पुष्करं यथा .
उपप्लवस्तद्द्रुतमे(l 15)व वार्यता-
मितीव दुग्धार्णवमेव सेवकम् ॥

1 Ms. °श्चि°. 2 Pāṇini 3.2.126. 3 Ms. °श्च्यया°. 4 Ms. °न्द्र°.

तव पिता सूर्यो मां कंचित्कालं संवर्ध्य मम हानिं करोति(l.16) तस्माद्धेतोर्हे यशस्विस्त्वमेव मां रक्षेतीव सेवायां सक्तं चन्द्रमण्डलम् ॥ तथा ॥ मधो रि(l.17)पुर्विष्णुः पुष्करं यथा विश्रामस्थानं जानाति तथा न मां जानाति तस्माद्धेतोर्म्लेच्छोपद्रवश्शीघ्रमे(l.18)व वार्यतामित्यतो हेतोस्सेवकं क्षीरसमुद्रमिव ॥ 47.

हिरण्यगर्भस्य कमण्डलूदरे
यमेव सं(l.19)स्थानविशेषमश्नुते .
तमेव धृत्वेव महेश्वरभ्रमा-
त्स्थितं ह्रदं मूर्धनि सौरसैन्धवम् ॥

ब्रह्म(l.20)णः कमण्डलुमध्ये गङ्गाजलं यमेव संनिवेशनं प्राप्नोति तमेव संनिवेशं गृहीत्वायं महे(l.21)श्वर इति भ्रमाच्छिरसि स्थितं गङ्गाप्रवाहमिति रूपकम् . अयमपि हि महान्भूमेरीश्वरः ॥(l.22) 48.

नभस्सरस्सारसयोर्वलद्विषा
हिमाचलस्य स्फटिकाचलस्य च .
ध्रुवं कृतं पक्षतिभिर्नभश्चरै(l.23)-
रमित्रशान्त्यर्थमुपायनीकृतम् ॥

नभ एव सरस्तत्र सारसयोर्हंसयोर्हिमाद्रिकैलाशयोः(l.24*) संबन्धिभिः पक्षतिभिः पक्षैरिन्द्रेण नूनं कृतं सच्छत्रुक्षयार्थं देवैर्ढौकनीकृतम् ॥ 49.

अदृश्यमूर्तिस्स्वयमुष्णवा(l.1)रणं
रथाङ्गपाणेस्सहधर्मचारिणी .
समुन्नतिं सूर्यकुले करिष्यतो
रघोरिवास्यापि बभार मूर्धनि ॥

जनै(l.2)रदृश्या श्रीस्सूर्यकुले माहात्म्यं करिष्यतोस्य रघोरिव शिरसि धृतवती छत्रम् ॥ कुलकम् ॥ 50.

1 Ms. ह्रदं. 2 Ms. देवै॰ le. above l.1.

अयं यथा(1 3) मे तनयस्तथा कृती
न कश्चिदन्योपि कदाचिदप्यभूत् ·
इति स्वकं विम्बमिवोष्णरश्मिना
प्रतापवृद्धयै कृ(1 4)तमानुयात्रिकम् ॥ 51.

अचिन्तयद्यो मनसापि विप्रियं
तमप्युपस्याथ विहन्तुमीश्वरम् ·
सुदर्शनाद(1.5)प्यधिकप्रभावभा-
गुपास्त चक्रं विजयेषु तं दिशाम् ॥

युगलकम् ॥

अयं मम पुत्रो यथा कृती भ(1 6)वति तथा कोपि नान्यो मत्पुत्रोभूद्वि-
ष्यतो हेतोस्सूर्येण प्रतापवर्धनार्थमानुयात्रिकं कृतं निजं बिम्बमिव तथा(1.7)
यो मनुष्यो देवो वा चित्तेनाप्यनिष्टं चिन्तयति तमप्येत्य निहन्तुं समर्थं
यतो हरिचक्रादपि सप्रभावं चक्रं(1 8) विजयकालेषु तं सिषेवे ॥ 52.

प्रजापतेस्सृष्टिरिवात्तविग्रहा
स्थितिक्रिया मूर्तिमतीव वैष्णवी ·
किम(1.9)न्यदध्यापितदेहडम्बरा
स्वयं न वा संहृतिशक्तिरैश्वरी ॥ 53.

दधत्यशेषैरपि लक्षणैस्तनू-
मलङ्कृतां र(1 10)त्नमरीचिमालिनीम् ·
अभून्नदीभर्तुरिवाधिदेवता
पुरोस्य ताम्बूलकरङ्कवाहिनी ॥

मूर्तिमती ब्रह्म(1 11)णस्सृष्टिरिव तथा मूर्ता विष्णुसम्बन्धिनी स्थिति-
रिव तथा किमन्यद्वर्णयाम इति शेषः अध्यापि(1 12)तशिशदितो देहड-

1 Ms. °सूद°. 2 Ms. मत्पुत्रो° lc. under 1.6. 3 Ms. यतो lc. under 1 7.
4 Ms. °जल्पका°. 5 Ms. °तार°.

न्धरो मूर्त्तिग्रहणं यया सा हरस्य संहारशक्तिरिव सर्वैरुत्तमस्त्रीलक्षणैर्भूपि-
(l.13)तं नानारत्नधारकं शरीरं दधती अत एव रत्नाकरस्याधिदेवतेव ता-
म्बूलकरङ्कवाहिनी पुरोस्याभवत् ॥(l.14) 54.

इदं ममोन्मूलयति स्म यश्छला-
दमुष्य वक्त्राणि यथैव सन्ति पट्,
तथैव दन्तान्दनुजक्षयक्षमा-
नहं(l.15) न गृह्णामि किमित्यसूयया ॥ 55.

गृहीतवानभ्यधिकं प्रभावतः
पतिर्गणानामिव दन्तपञ्चकम् ।
मुखा(l.16)नुरूपीकृतसर्वविग्रह-
स्तमन्वगादाजिषु गन्धसिन्धुरः ॥

युगलकम् ॥

यो मम दन्तं छलादुन्मू(l.17)लितवांस्तस्य कुमारस्य यथा षण्मुखानि
संन्ति तथैव षट्संख्यान्दानवदलनदक्षान्दशनान(l.18)हं किं न दधामी-
त्यसूयया प्रभाववशाद्दन्तपञ्चकमाददानो मुखसदृशीकृतसमस्तशरीर(l.19)
एकदन्त इव गन्धहस्ती समरेषु तमन्वगात् ॥ 56.

दिगष्टकं जेतुमशेषमंशुमा-
नवश्यमष्टैव(l.20) बभार वाजिनः ।
इमं त्वमुष्मै प्रतिपाद्य सूनवे
ध्रुवं गतस्संप्रति सप्तसप्तिताम् ॥ 57.

⏑–⏑––⏑⏑–⏑–⏑–
⏑–⏑––⏑⏑–⏑–⏑–.
[विलङ्घनीयेन]⏑–[3]द्विहायसा
स्वकान्तिसर्वस्व[2][मिवार्पितं दधत्] ॥

---

1 Is it °नित्य° ?     2 Ms. °रोप°.     3 Ms. द्वि° to °स्व lc. under l.25.

एकेनैके(1 21)नैक एको जीयत इति युक्तम् अतोष्टौ दिशो जेतुं सूर्योष्टे-
वाश्वानयहत् अथ पुनस्तेपामश्वानां(1 22) मध्यादेकमश्वं दत्वा सप्ताश्वतां सूर्यो
गत इत्येवं कवीनां स्तुतौ योग्यो हयस्तमन्वगात् ॥ मयूरकण्ठ(1 23)सम-
वर्णत्वात्संभाव्यते विलङ्घनीयेनाक्रमणीयेन व्योम्ना दत्तं निजद्युतिसर्वस्व-
मिव दधत् ॥ 58.

विमुच्य(1 24)[ति दातुममुष्य?] —⏑—
⏑—⏑——⏑दधेः सुता मम ।
इतीव बुध्या परिवर्ज्य कौस्तुभं
स्यमन्तकश्शा(1 25**11)र्ङ्गभृता समर्पितः ॥ 59.

निपीथमार्तण्ड इति क्षमातले
प्रसिद्धनामा सकलेपि तं मणिः ।
मृगा(1 1)ङ्कमौलेस्समभीर्ष्यया धृतः
पितेव चूडाभरणं व्यभूषयत् ॥

अस्य दातुं लक्ष्मीसहोदरः(1 2) मणिः कौस्तुभो मया यद्यपसार्यते तर्हि
कौस्तुभसोदरी मह्यं कुप्यतीतीव बुद्धया कौस्तुभमदत्वा शार्ङ्गि(1 3)णा स्य-
मन्तको दत्तः रात्रिरविरिति भूतले प्रसिद्धो मौलिभूषणभूतस्तथा चन्द्रमौलेः
स्पर्धया हेतुभूतया(1 4) तेन पिता सूर्य इ[व] धृत हरश्चन्द्रमौलिः अहं सूर्य-
मौलिर्भवामीति स्पर्धया धृतः । स्यम(1 5)न्तकस्सुवर्णस्रावी जाम्बवज्जयप्राप्तो
मणिः ॥ 60.

पतिर्धनानामजगन्धवासिना
शिवेन दत्तस्त्व इ(1 6)व स्वतस्सखा ।
उपागतो वा स्वयमेव रक्षितुं
प्रतार्यमाणो नडकूवरभ्रमात् ॥ 61.

1 Ms एके॰. 2 Ms ॰लक्ष्य॰. 3 Ms. दत्त lc. under l.23. 4 Ms. पु ए त्रि. on margin. 5 Sic, for spelling, cf. Rigveda, X 72.8-9. 6 Ms ॰स्समभीर्ष्य॰ काप्यत. 7 Ms. मौ॰ to ॰त lc at top of page.

धनेन कोशाधिपति(1.7)र्मृधे मृधे
व्ययीकृतेनाप्यसमाप्तसंग्रहः .
सुमेरुरत्नाकररोहणाचल-
प्रभावजेत्रो वरिवस्य(1.8)ति स्म तम् ॥ २ ॥[2]

अजगन्धाख्यप्रदेशे निवसता शिवेन स्वसमीपादत्तस्वस्वसखा वैश्रव-(1.9)ण इवोपागतः अथवा तस्मिन्नडकूवरभ्रान्त्या रक्षितुं स्वयमेव धनपतिरागतः इवेत्युत्प्रे(1.10)क्षा. युद्धे युद्धे व्ययीकृतेनापि भाण्डागारेणासमाप्तस्संग्रहो यस्य स कोशपतिर्हेमाद्रिरत्नाक(1.11)ररत्नाचलेभ्योधिकस्तं सेवितवान् ॥ 62.

भरक्षमो राक्षससंक्षयं प्रति
त्वयानुजोसावनुगम्यतां मृ(1.12)धे .
इतीव वाक्यं सवितुर्यमस्स्वयं
नरात्मना राम इवानुपालयन् ॥ 63.

अतीव यो दुर्बल एव सर्वथा(1.13)
तमप्यधिष्ठाय बलिष्ठतां नयन् .
समाप्तशस्त्रास्त्रविधौ धनंजयो
बभूव सेनापतिरस्य शाश्वतः ॥ २ ॥[3](1.14)

राक्षसक्षयप्रवृत्तोसौ कनिष्ठो भ्राता भवतानुगम्यतामित्येतत्सूर्यस्य वचोनुपालयन्मनुष्यरूपेण(1.15) यम इत्यारोपः तथा राम इवेति . स हि सवितुः पितुर्दशरथस्याज्ञामपालयत् . तथात्यर्थं(1.16) यो दुर्बलस्तमप्यधिष्ठाय स्ववशीकृत्यातिबलवत्त्वं नयन् शास्त्रकर्मण्यस्त्रकर्मणि चास्य ध(1.17)नञ्जयोर्जुनश्शाश्वतः सेनापतिरभूत् . धनञ्जयाख्यो वायुश्च बलप्रदः ॥ 64.

1 Ms. °रोदि°. 2 So Ms. 3 Ms. °चत्र°. 4 Ms. रक्षस°. 5 Ms. द्रमा°.
6 Ms. नगास्म°. 7 Ms. °मित्येत्°. 8 Ms. °कृता°. 9 Ms. °तसे°.

स सप्तसप्तेरपि विस्म(1 18)यप्रदा-
निति प्रभावानुदवाप सप्त यत् .
तदन्वशात्सप्त सरित्पतीनपि
त्रिपुष्करं नाम किमस्य(1.19) दुर्जेयम् ॥

सप्तसप्तेस्सूर्यस्याप्याश्चर्योत्पादकान्पूर्वोक्तान्सप्त प्रभावान्स यत्प्रापत्त-
तो हेतोः(1 20) सप्त समुद्रानपि स चाहमानो जितवान् अस्य त्रिपुष्करं किं
कथं दुर्जेयम् . त्रिभ्यस्सप्तानाम(1.21)धिकत्वादिति च ॥ 65.

स सप्तभिर्वारिधिभिः पुरस्कृतं
विजीयमानैरिव रत्नसप्तकम् .
हरिप्रभा(1 22)वार्जितमूर्जितं दध-
न्न चक्षमे द्वीपपतीनपि प्रति ॥

विष्णुप्रसादप्राप्तं पूर्वोक्तं रत्नसप्तकं दधत् (1 23) अतस्संभाव्यते जितै-
स्सप्तभिस्समुद्रैर्दत्तमिवेति स द्वीपाधिपानपि नासहिष्ट ॥ 66.

स पूर्वरङ्गार्थमि(1 24)व क्षमातले
मधुद्विषा स्थापकतामनीयत .
प्रयित्सतानेन विहाय शुद्धतां
समुद्धतां म्लेच्छचिकि(1.25*)त्सिनीं तनुम् ॥

शान्तं प्रक्षरूपं त्यक्त्वा म्लेच्छच्छेदकं रूपं प्रपत्तुमिच्छता दैत्यारिणा
स च.ह(...)मानः पूर्वरङ्गार्थं स्थापकतामिव नीतः . स्थापकस्सूत्रधारः नटेन
च प्रथमाभिनीतं रूपं त्यक्त्वा रूपान्तरं कर्तुकामेन सूत्रधारः क्रियते . 67.

विकण्टकीकृत्य स सर्वतो ध(1 2)रां
प्रतापपुंष्टांश्च विधाय भूभृतः .

1 Ms. °किकित्सि°. 2 Copyist's note at top of p.2 of fol.12–अत्रापि देखकान्त-
रत्वन्. 3 Is it शुद्ध? 4 Ms. नटेन to °यन lc. at top of page. 5 Comm °धृमान्,
°स्तुवन् would give the correct sense but would offend against metre.

क्रमेण दावाग्निरिवोदपीपद्-
द्धनं प्रजातापस(1.3)मापनं कुलम् ॥

समस्तां भूमिं निष्कण्टकां कृत्वा भूभृतो राज्ञश्च प्रतापेन धू(1.4)म्रां-
न्कृत्वा स धनमसंख्यं मेघं च प्रजातापनिवारकं कुलमजनयत्. अत ए(1.5)व
दावाग्निरित्युपमा ॥ 68.

सयागतः पुष्करतीर्थयात्रां-
प्रसङ्गतः कञ्चन काल(1.6)मुर्वराम् .
परीत्य सर्वामपि योगिनां गुरु-
र्यथागतं भास्करमण्डलं ययौ ॥(1.7)

त्रिपुष्करे तीर्थे तीर्थयात्रया हेतुभूतया भूमिमागतः प्रसङ्गेन महीं प-
रीत्य परिपा(1.8)ल्य स महायोगी यथागतं सूर्यमण्डलं प्रति गतवान् .योगी
च सूर्यमण्डलं(1.9) प्रविशतीत्यर्थच्छाया ॥ 69.

अचाहमानापि रराज मेदिनी
विगाहमाना रुचिरं(1.10) तदन्वयम् .
न वंशगुल्मेन तथा वनस्थली
यथा हि भग्नेन विभाति मौक्तिकैः ॥(1.11)

चाहमानरहितापि भूमिश्शुशुभे रुचिरमधिकं यतः तत्कुलं धारयन्ती.
अ(1.12)त्र दृष्टान्तमाह अत्र वंशगुल्मे भग्ने सति मुक्ताफलैर्वनभूमिर्यथा
शोभते(1.13) तथा वंशगुल्मेन न शोभते वनभूमिः ॥ 70.

काकुत्स्थमिक्ष्वाकुरघू च यद्व-
त्पुराभ(1.14)वत्रिप्रवरं रघोः कुलम् .
कलावपि प्राप्य सचाहमानतां
प्ररूढतुर्यप्रव(1.15)रं बभूव तत् ॥

1 Text पुष्पम्. 2 Is it यात्रया प्र° ? So comm. 3 Ms. पर्यत्य twice.
4 Ms. उद°. 5 Ms. काकुत्स्°. 6. Ms. °वनू°.

श्रीराममिक्ष्वाकुं रघुं च धारयद्रघोः कुलं यत्त्रयः प्रवरा (1.16) यस्य तत्कृतयुगेभूत्तत्कुलं चाहमानभावं प्राप्य प्ररूढचतुर्थप्रवरं कलावभू(1 17)त्. प्रवराणां वैपम्यमेव भवति तत्कुलं तु प्रवरचतुष्टयसहितमभूदिति ॥(1.18) 71.

इत प्रभृति ब्रह्मेत्यन्तं कुलकम् ॥

आदित्यरश्मिदुरतिक्रमपारियात्र-
पार्श्वान्तरं(1.19**12)प्रतिदिनाध्वगकीर्तिकायाः .
सप्तार्णवीविपयशाश्वतवाडवाग्नि-
व्यापारपारगमनम(1 1)गुणप्रभावाः ॥

प्रवीरा. चाहमानस्य कुलमभूपयन्नित्यन्वय . आदित्यरश्मिभि(1 2)-र्दुरतिक्रमं दुर्लङ्घ्यं यत्पारियात्रकपार्श्वान्तरं तत्र प्रतिदिनं पथिकः कीर्तिः कायो येपां(1.3) ते तथा सप्तसमुद्रविपयश्शाश्वतो नित्यो वाडवाग्नेर्यो व्यापारः ज्वलनं(1 4)तस्य पारगमने पराभवे प्रगुणस्समर्थः प्रतापो येपाम् ॥ 72.

दृष्टस्वपूर्वपुरुषो(1 5)दयभूप्रदेश-
सेनारजोभिभवखिन्नसहस्रनेत्राः .
अश्रान्तयज्ञशततर्पितहव्य(1 6)वाह-
शुद्धान्तगीतभुजसाहससंप्रदायाः ॥

स्वपूर्वपुरुषस्यादित्यस्योदयभू(1 7)प्रदेश उदयपर्वतो दृष्टो येन तस्य सेनारजसोभिभवेन खिन्नः खेदितस्सह(1 8)स्रनेत्रो यैस्ते. सहस्रनेत्र इति साकूतम्. तथा अश्रान्तं नित्यं कृत्वा यज्ञशतेपु तर्पि(1 9)तो यो हव्यवाहोग्निस्तस्य शुद्धान्तस्स्वाहा तया गीतो भुजसाहससंप्रदायो येपां ते ॥(1 10) 73.

वैवस्वतायुधभुजङ्गमसह्यमान-
निश्श्वोत्रतानधिगतोर्ध्वचभूनिनादाः .

---

1 Ms पार्न°. 2 Ms. °प्रस्र°. 3 Ms. पृ. ग. वि. १४ on margin 4 Copyist's remark नेर्नत ०खत्र ग्रोण भिरान्तसिः संपूर्ण पत्रम्. 5 Ms. °दंह्° 6 Ms. °स्यो यो. 7 Ms. °वाहाशु°. 8 Ms °तमूज°. 9 Ms. °प्रशया. 10 Ms. °तोद°.

ल(1.11)ब्धाधिपत्यभयदानमयापदान-
वार्ताश्रुतिक्षपितनैर्ऋतचित्तदौस्स्थ्याः ॥(1.12)

वैवस्वतस्य यमस्यायुधैः पाशैर्भुजंगमैस्सह्यमानो यतो निष्कर्णतयान-
धिग(1.13)त उद्भूसंघर्षान्द्दो येषां ते तथा विभीषणस्याभयदानरूपं यदपदा-
नं साह(1.14)सं तद्वार्ताश्रवणेन क्षपितं निवारितं[3] चित्तदौस्थ्यं चित्ते क्षोभो
येस्ते[4]. अयमर्थः(1.15) अस्मद्वंश्येन श्रीरामेणास्मै राज्यं दत्तमिति तैर्जि-
ष्णुभिर्विभीषणस्याभयं दत्त(1.16)मतस्तत्पक्षभूतस्यापि नैर्ऋतस्याभयं गलि-
तमिति ··················(1.17)················ ॥ 74.

प्राचेतसप्रियतमासुरतान्तखेद-
निर्भेदवे(1.18)दिकटकद्विपकर्णवात्याः.
पूर्णोदरज्वलननिर्वृतिनिर्विकार-
सारथ्यमुक्त(1.19*)मरुदीरितसाधुवादाः ॥

प्राचेतसीनां प्रियतमानां वरुणस्त्रीनां सुरतान्तखेदस्य(1.1) निर्भेदं
विदन्ति कुर्वन्ति. खेदहारिण्य इत्यर्थः. एवंविधाः कटकद्विपानां कर्णवात्या
ये(1.2)षाम् तथा यक्षेषु पूर्णोदरो यो ज्वलनस्तस्य निर्वृतिस्सुखं तया निर्वि-
कारो यतस्सा(1.3)रथ्यमुक्तो यो मरुत्तेनेरितस्साधुवादो येषाम् ॥ 75.

कैलासशैलशिखराश्रयकि(1.4)न्नरेन्द्र-
कर्णामृतहृदपराक्रमगीतशब्दाः.
ईशानचन्द्रसहवासमहाविदग्ध-
दोर्द(1.5)ण्डकीर्त्यधरितद्युसरित्प्रवाहाः ॥

कैलासनिवासिनां सम्बन्धी कर्णयोस्सुधाप्रवाह(1.6)सदृशः पुरुषकार-

1 Ms. चान्ता°. 2 Ms. °नैम°. 3 Ms. दौस्स्थ्याः. 4 Ms. °द्भूसंगश°.
5 Add नैर्ऋतस्य. 6 Ms. येषां ते. 7 Is it मिथ्वितमिति ?. 8 Ms. साप्रवा°.
9 Ms. प्राचेत°. 10 Ms. सुतान्तु°. 11 Ms. ये येषाम्. 12 Ms. स्साम°. 13 Ms. °यब्द्र,

गीतशब्दो येषां ते तथा ईशानचन्द्रेण सहवासे महाविदग्धो दोर्द(। 7)एडकीर्त्या भुजयशसाधरितो जितो गङ्गौघो यैस्ते ॥ 76.

सेनाहयोद्गमितधूलिल(। 8)घूभवन्द्रं-
धृत्यल्पयत्नफणिशायितवासुदेवाः ।
लक्ष्मीमुखोचरर्णलग्न(। 9)सुधासधर्म-
माधुर्यकीर्तिसुखितीकृतसप्तलोकाः ॥

एवमष्टदिक्पालप(। 10)राजयध्यननमुक्त्वा हरिसेवामाह सेनाश्वैरुत्थापिता या धूलिस्तया लघूभ(।.11)वन्ती या भूस्तस्या धृत्यर्थं धारणार्थमल्पयत्ने फणिनि शेषे शायितो वासुदेवो यैस्ते(। 12) तथा अत एव लक्ष्म्या मुखोचरणेनेव लग्नं सुधासधर्मामृतसमं माधुर्यं यस्याः(। 13) तया कीर्त्या सुखीकृतास्सप्त लोका यैस्ते ॥ 77.

ब्रह्मारविन्दमकरन्दकणान्तरङ्ग(।.14)-
तौरङ्गधूलिविरसीकृतदिव्यभृङ्गाः ।
श्रीचाहमानकुलयुज्ज्वलयांबभूवु-
र्दोर्म(। 15)एडनाभरणभूवलयाः प्रवीराः ॥

ब्रह्मकमलव्यापिवाजिरजोभिर(। 16)कालिकुलाः तथा दोर्मण्डलस्याभरणं भूवलयो येषां ते ॥ 78.

रिक्थक्रमादुप(। 17)[नतं] नलिनीयुजङ्गा-
दारभ्य यद्वसु ददुश्शरणागतेभ्यः ।
वाणिज्यवर्जितमिवानुदि(। 18)नं तदेषां
प्रापोचरोत्तरविशिष्टदशाप्रवेशम् ॥

1 Ms. दार्दण्ड. 2 Ms °वन्भू° 3 Ms. °देव. 4 Ms. °णोक्षण°.
5 Ms. °न्मया crossed 6 Ms. प्रायोमुत्तरो°.

सूर्यजाद्रिक्थक्रमादुपनतं प्रा(1.19**13)प्तं वसु तेजो धनं च ते शर-णागतेभ्यो यद्ददुस्तद्वाणिज्येन व्यवहारेण वर्धितमिव तद्वसु उत्तरो(1.1)त्तरं विशिष्टदशाया अनुप्रवेशं प्रापत् ॥ 79.

वास्तोप्पतेस्समरपर्वसहायतार्थ-
मायासितैस्स(1.2)ततमूर्ध्वगतागताभ्याम् .
प्रेतप्रभोरसृशकैरपि नेतुमुर्व्या-
स्तैस्स्वेच्छयैव विदधे त्रिदिवे निवासः ॥(1.3)

वास्तोष्पतेरिन्द्रस्य सङ्ग्रामेषु साहाय्यकार्थमूर्ध्वगतेनाकाशगमनेन तथा आगतेन आकाशाद्भूमाव(1.4)वरोहणेन च नित्यं खिन्नैः तथा यमस्यापि भूमे-स्सकाशान्नेतुमशक्यैस्तैस्स्वेच्छयैव स्वयमेव स्वेर्न निवा(1.5)सः कृतः ॥ 80.

अष्टासु दिक्पतिपुरेषु यथेष्टमेषां
रक्षःक्षयोपकृतये कृतिनां स्थितानाम् .
भूः स्तम्भि(1.6)ताष्टगिरिमण्डपदिग्द्विपेन्द्र-
स्तम्भाष्टकेन समपद्यत राजधानी ॥

अष्टसु लोकपालनगरेषु(1.7) रक्षसां विनाशेनोपकारार्थं स्वेच्छया रा-क्षसविनाशार्थं स्थितानामेषां चाहमानवंश्यानां राज्ञां भूमिः राज(1.8)धानी नगरी संपन्ना स्तम्भितान्यष्ट गिरय एव मण्डपानि येन तद्दिग्द्विपेन्द्राणा-मेव स्तम्भानामष्ट(1.9)कं यस्याः. राजधान्याश्च मण्डपधारणार्थं स्तम्भा अष्टौ भवन्ति ॥ 81.

वंशे तेषामशेषप्रथमनृपभुजां(1.10) कीर्तिसम्पद्धलाका-
मेमारम्भानुकूलच्छविसदसिपदाम्भोदविश्रान्तिशैलः .

---

1 Ms. सूर्यजायरि°. 2 Ms. has रा. वि. २४ on margin. 3 Ms. °सुगठर°.
4 Ms. °रिन्दस्य. 5 Ms. °भावरो°. 6 Ms. °स्तैस्तैस्स्वे° 7 Is it स्वर्गे ?
8 Ms. रक्षस°. 9 Ms. °पक्त°. 10 Ms. रक्षाम°. 11 Ms. °नो° to °ग° le. on margin.
12 Ms. रक्षर°. 13 Ms. °मष्टकं. 14 Ms. °भुजा°. Is it क्षितिभुजां ? 15 Ms. °टच्छेद°.

कैलासोत्सङ्गस(l 11)ङ्गीतकसभिकशिवादिष्टगन्धर्वरामा-
गातव्योद्दामकर्मा समजनि वसुधावासवो वासुदेवः ॥(l.12)

तेषां कुले वासुदेवनामा राजा जातः . समस्तानामादिराज्ञानां या कीर्तिसंपत्सैव बलाका(l 13) तस्याः प्रेमारम्भे सन्सांघुर्योसिपटस्स एवाम्भोदस्तस्य विश्रान्त्यर्थं शैलः पूर्वेषां कीर्त्तिवर्धक(l.14) इत्यर्थः [तथा च] कैलासोत्सङ्गे सभिकेन शिवेनादिष्टाभिर्गन्धर्वरामाभिर्गातव्यान्युंद्दामक(l.15)र्माणि साहसानि यस्येति भद्रम् ॥ 82.

श्रीलोलराजसुतपण्डितभट्टनोन-
राजात्मजो वि(l.16)वरणेन सुबोधमाधात् .
सर्गं द्वितीयमशनैरिह जोनराजः
पृथ्वीमहेन्द्रविजयाभिधका(l 17)व्यराजे ॥

पृथ्वीराजविजयविवरणे द्वितीयस्सर्गः ॥

---

1 Ms °तम°. 2 Ms सन्माधु°. 3 Ms. °व्यान्नु°. 4 Ms. °राजविवरणे.

# [ तृतीयः सर्गः ]

समभूव[दा स खलु दा](1.18)ननिधि-
र्ववृपुस्तदा सुमनसो जलदाः .
परिकम्पतां यशसि हानिभया-
त्सुरशाखिनां स्वय(1.19)मिव स्खलिताः ॥

यदा वासुदेवो जातस्तदा मेघाः कल्पवृक्षाणां पुष्पाणि ववृपुः . अत्र सम्भाव्यते य(1.20)तो दानेन निधिरसौ यशोविषये हानिभयात्कम्पमानानां कल्पवृक्षाणां स्वयं पतितानीव(1.21) . कल्पवृक्षेभ्योप्यधिकं दातेत्यर्थः ॥ 1.

ननृतुर्दिनं सकलमप्सरसः
परिदध्वनुर्विजयदु(1.22)न्दुभयः .
प्रमदं दधुर्यममृतोद्धरणा-
त्पुनरेव तं सुमनसोन्वभवन् ॥

अप्सरसो ननृतुः [पट](1.23*)हा दध्वनुः . सकलं दिनमित्यनेनोभयोर्वाक्ययोस्संबंधः . अमृतलाभेन देवा यं हर्षं प्रापुस्तज्जन्मना(1.1) पुनरेव प्रापुः ॥ 2.

द्युनदीहृतैः कनकतामरसै-
र्मरुतो ववुर्विरचिताभरणाः .
गगनात्मना शशिशिरो(1.2)मणिना
प्रकटीकृता कनकवृष्टिरिव ॥

गङ्गाहेमपद्मैः कृतभूषणा वायवो ववुः अतस्संभाव्यते(1.3) आकाशरूपेण शशिशेखरेण सुवर्णवृष्टिरिव मुक्ता ॥ 3.

---

1 Ms. °कम्पितां. 2 Ms. क° to °णां le. under 1-19. 3 Ms. °ष्पानि.
4 Ms. °हद°. 5 Ms. स्वन°.

दिवमुच्चकैरभृत तस्य यशो
जल(l 4)दैर्विना जलकणैः पतितम् .
परिपीडितादमृतदीधितितो
विनिरित्वरैरिव सुधापृषतैः ॥

तस्य(l 5) यशो द्यामपूरयत् मेघैर्विना जलकणैः पतितम् यद्यशसा पीडिताचन्द्रान्निर्गच्छद्भिरमृतकणै(l 6)रिव . इत्वरैरिति सृंजीअशां प्करप् ॥ 4.

सवितुः कुले कति न भूपतयो
भुजशालिनः समभवन्नपरे .
स(l 7) पुनर्यथा व्यवजहार तथा
न भगीरथो न सगरो न रघुः ॥

सूर्यस्य कुले परे कति न राजानो भुजाभ्यां शो(l 8)भमानाः प्राग्जाताः स वासुदेवस्तु यथा व्यवहारमकरोन्न तथा भगीरथादयः ॥ 5.

न स पर्वतो न त(l 9)दरण्यमभू-
न्नगरी न सा मरुमही न च सा .
स विनिर्ममे न खलु यत्र नृप-
स्सरसीः प्रपास्सुरगृ(l 10)हाणि मठान् ॥

स राजा सरस्यादीन्यत्र नाकरोत्ते पर्वतादयो नाभवन् . सर्वेषु पर्वतादिषु सर(l.11)स्यादीन्कृतवानित्यर्थः ॥ 6.

न शिखण्डिनो जलधरं प्रथमं
न चकोरकारशुचिनिशाशशिनम् .
न पिका(l.12)स्तथा तरुणमाम्रवनं
जहृपुः प्रजास्तमवलोक्य यथा ॥

---

1 Sic. cf. Pāṇini, 3 2 163 इण्नश्जिसर्तिभ्य क्वरप् Katantra, 4.4 48 सृजीण्नशां क्वरप्. 2 Ms. 'स' lc. under l 11. 3 Read 'वध (Pāṇini, 8 4 5.)

यथा तं दृष्ट्वा जनास्तुतुपुस्तथा न म(l.13)यूरादयो मेघादीन्दृष्ट्वा तुष्यन्ति. मेघादिभिरिव मयूरादयस्तेन प्रजा दत्तवृत्तय इत्यर्थः ॥(l.14) 7.

न हिमाद्रिणा मलयजेन तथा
शिशिराभवच्चिरमनेन यथा.
न सुमेरुणा न मणिभूमिभृ(l.15)ता
वसुमत्यपि क्षितिरनेन यथा ॥

यथानेन राज्ञा हततापा भूरभून्न तथा हिमाचलचन्द(l.16)नाभ्याम्. यथामुना भूर्धनवत्यभून्न तथा सुमेरुरोह[णाभ्याम्] ॥ 8.

[कमलालया]⌣⌣वती क(l.17)[मला]
[प्रविहाय] यागतवती नृपतीन्.
कमलोपमादपि तदङ्घ्रियुगा-
त्प्रणिपत्य तां पुनरवापु(l.18)रमी ॥

या लक्ष्मी राज्ञस्त्यक्त्वागतवती ताममी अपि राजानस्तत्पादपद्मद्वयं प्रणम्य ततः प्रापुः. अ(l.19)त एव कमलालयेति विशेषणमर्थवत्. तत्सेवकानामेव राज्ञां श्रीरासीन्नान्येषामिति भावः ॥(l.20) 9.

मखभूमिगैश्शतमखप्रमुखै-
ररुदन्यतो दिगधिपप्रमदाः.
मखधूम्यया निरपवादमतः(l.21)
परिवभ्रमे हि ततदिक्तटया ॥

अस्य यज्ञगतैरिन्द्रादिभिर्हेतुभिस्तद्रामा अरुदन्नुदन्तीति य(l.22)ज्ज्ञातमिति शेषः अतस्तन्मखधूमजालेन च्छादिततदिगन्तेन निरपवादं कृत्वा भ्रान्तम्. अयमर्थः(l.23) मख[धूमेनैव] लोकपालस्त्रीणां वाष्पनिर्गलनमभूत्

1 Ms. रोहि°.   2 Ms. °मवतो.   3 Ms. °मगा°.   4 Ms. अपि lc. under l. 18.
5 Ms. °मतोः.   6 Ms. °हितदि°.

लोकास्त्वजानन् चिरं पतिप्रवासो वाप्प(1 24**14)[1]हेतुरिति न [illegible] स तासाम-
भूत् तद्यज्ञेषु इन्द्रादीनां पोपलाभात् अतो यज्ञधूमेन दूषणं न प्राप्तम् ॥(1 1); 10.

सुरसद्मनामविरतापचितौ
द्रुममस्तके न कुसुमं ददृशे .
अपरागिणं विदधिरे पवनं
नभसा गतं क्वचन नोपवनम् .

अपरागवानपि वहन्नशनैः
पवनोभवत्क(1 2)चन नोपवने ॥

देवाना नित्यपूजायां सत्यां तरुविटपेपु पुष्पं न दृष्टम् ततो हेतो. क्वा-
प्युद्याने जना वायुम(1.3)परागिणं सदोषं न विदधु॰. परागाभावेप्यपरा-
गिणं न विदधुरिति विभावना क्वचित्

अपरागवान(1.4)पि वहन्नशनै. पवनोभवत्क्वचन नोपवने

इति पाठः ॥ 11.

चरणैस्त्रिभिस्त्रुटितसंघटितै-
र्व्यहरत्सु(1 5)खं स्मरहरस्य वृषः .
पदमुद्रिता नियतमस्य सदा
न हिरण्मयी न समपादि मही ॥

स्मरहरस्य(1 6) वृषो धर्म्मस्सुखेन व्यहरत . अत्र हेतुः त्रिभि॰ पादैः पूर्वं
विच्छिन्नैरद्य संघटितैश्चतुष्पाद् धर्मोभूदित्य(1 7)र्थः नूनमस्य वृषस्य चतुर्भिः
पादैः कृतमुद्रत्वाद्भूस्सुवर्णमयी संपन्ना . संनिस्थानेपु भूस्सुवर्णमजी(1 8)ज-
नदित्यर्थः . हरस्तूपो यत्र संचरति तत्र जातरूपं जायत इत्यागमः ॥ 12.

---

1 Ms. १ रा त्रि ११ vertically on margin [illegible] Ms अप॰ to ॰वनम्, lc on margin, this reading is commented upon, and the next one, though in Ms, [illegible] mentioned by comm as *var. lect.* 3 Ms ॰गिण्यं. 4 Ms. ॰देपू॰. 5 Ms ॰ख॰.

यशसा भृता जलधिवि(l.9)ष्णुपदे
शशिमण्डलं न न बभूव मही.
न कलङ्कवन्न च विधुन्तुदव-
त्कलिना पुनः क्वचिद्वापि पदम् ॥(l.10)

तदीयेन यशसा भृता भूस्समुद्राकाशे चन्द्रमण्डलं न नाभूत् अपि त्वभूदेवेत्यर्थः. कलङ्केन राहुणा य(l.11)था पदमवापि तथा कलिकालेन क्वापि न स्थानं लब्धम्. अयमर्थः समुद्र एवाकाशं तत्र यशश्शुभ्रा भूमि-(l.12)रेव चन्द्रोभूत् चन्द्रस्य कलङ्कोस्ति राहुश्च बाधते यशश्शुभ्रभूमण्ड-लस्य तु कलिः कलङ्कराहुरूपो(l.13) नासीदित्यर्थः ॥ 13.

सुरमन्दिरैर्दिशि विदिश्युदितं
मरुतां पतिर्मखमहीष्ववसत्.
अमरावती किम(l.14)पि कालवशा-
द्व्यथिताभवत्पथिकयोषिदिव ॥

देवगृहैस्सर्वदिक्षूल्लसितम् यज्ञभूमिष्विन्द्रोवसत्(l.15) कालबला[दम-रावती] पथिकस्त्रीव व्यथिताभवत् ॥ 14.

उपनिन्यिरे शिखरिणो लघुतां
पृथुना नतां न च(l.16)⏑–⏑–⏑–.
⏑⏑–⏑–⏑⏑–⏑–⏑–
⏑⏑–⏑–⏑⏑⏑–⏑ कृते ॥

पृथुनाम्ना राज्ञो इ[न्द्रे]ण (l.17) 15.

[Line 18 missing]

रणं
क्षितिमित्यगात्क इव न क्षितिभृत् ॥

1 Ms. राजा.

देवगृहकृते पर्वतानां शिला· खण्डिताः समिदर्थे च वृ(1 19)त्ता दारिता· चित्रार्थं गैरिकादय उद्धृतास्ततस्सर्वे पर्वताः क्षितिभल्पप्रमाणत्वं प्रापु· ॥ 16.

मुहुरीत(1 20)यः प्रविविशुर्न भुवं
भुवनान्तरे कचिद्विवात्तपदाः ·
यदि वा क तां विरचयन्तु पदं
परिपूरितास्सुकृतिभि(1 21)र्हि दिशः ॥

ईतयोतिवृष्ट्यादयो भुवनं न प्राविशन् अतस्संभाव्यते काप्यन्यस्मिन्भुवने कृतास्पदा. अथ(1.22) वा नैतत् कस्मिन्भुवने ईतय. पदं कुर्वन्तु . हिर्यस्मादर्थे. तदीयाभिस्सुकृतिभिरशोभनैः कर्मभिर्दि[शः पूरि](1 23)ताः ॥(*) 17.

अतिवृष्टयो ववृधिरे सजलै-
र्नयनैः परं रिपुकुरङ्गदृशाम् ·
अनवग्रहं खमपि सत्पुरुषाः
प्रतिपेदि(1.1)रे सततभाग्यमयाः ॥

रिपुस्त्रीणां सवाष्पैर्नेत्रैरतिवृष्टयः पुष्टाः···नित्यभाग्यमयास्सत्पुरुषाः खमाकाशम(1 2)नवग्रहमवृष्टिप्रतिबन्धं प्रतिपन्नाः अविद्यमानो नवो ग्रहो नैयत्येन विसर्गो यत्र तत्खं संवित्स्वभावं प्रतिपन्नाः(1 3) नवग्रहरहितं खमिति विरोधः ॥ 18.

क्षितिरग्रहीत्कमपि दार्ढ्यगुणं
कचिदाखवो न खलु चक्नुरमूम् .(1 4)
अत एव तां परमनिर्विवरां
विपदां गणा न परितस्तरिरे ॥

---

1 Ms. °रु le. under 1 20. 2 Ms. न le. under l. 21. 3 Ms. °या पुत्र (?) 4 Ms. °स्पृ°.

वक्तुमशक्यं दार्ढ्यगुणं भूर्लेभे मूषका भू(l.5)मिं न खनितवन्तः अत इव विच्छिद्रां भूमिमापदां गणा नैवाच्छादयन् ॥ 19.

शुकवाहने सततत्तृप्तिमये(l.6)
न दधुश्शुकाः क्वचन शालिभयम् .
क्रतुधूमतो दिशि दिशि प्रसृता-
दुपलेभिरे न विषयं शलभाः ॥(l.7)

शुका वह्निवाहा इत्यागमः . शुकवाहनेनले नित्यतृप्ते इवं शुकाश्शालीनां भयं न दत्तवन्तः . तेषां पावकतृप्तौ(l.8) सत्यां तृप्तत्वात्. सर्वदिक्षु विसारिणो यज्ञधूमाद्धेतोरिव शलभा आश्रयं न लब्धवन्तः ॥ 20.

न निवेशितैर्गि(l.9)रिगुहासु तथा
न तथा पुरं पितृपतेः महितैः .
चरणाग्रगैर्नृपतिभिर्नृपति-
स्स यथा प्रजास्सुख(l.10)वतीरकरोत् ॥

प्रणमितै राजभिस्स राजा प्रजास्सुखिता यथाकरोत्तथाद्रिगुहासु प्रवेशितैः(l.11) तैर्नाकरोत्तथा न च यमपुरं विसृष्टै राजभिरकरोत् . पलायितानां पुनरुदयाशङ्कया मारितानां(l.12) ये मुक्तास्तेषामुदयाशङ्कयेति भावः॥ 21.

उपयोगवान्यदि रणार्थमभू-
स्स्वयमेव तन्मखमहीष्व(l.13)वसत् .
भुजयोर्बलादभयदानपतिं
दनुजागमे तमनयन्मघवा ॥

इन्द्रो वासुदेवस्य रणार्थमुपयोगी(l.14) यद्यासीत्तदा इन्द्रस्तदीययज्ञ-

---

1 Ms. °त्रिभये.  2 Ms. इव lc. under l. 7.  3 Ms. °रिव lc. under l. 8.
4 Ms. °गुहनु.

भूमिषु स्वयमेवावसत् दानवयुद्धागमे तमिन्द्रो भुज(l 15)बलेनाभयदाता-
रमनयत् ॥ 22.

व्यसनैरसावतितरां मलिनै-
रपि सप्तभिस्स्वयमथो विहितैः . (l.16)
⏑ ⏑ – ⏑ –स[क]लादिग्विजयं
[तु]रगैरिव ⏑ भल – ⏑ ⏑ मान् ॥

. . . . . . . . [म]प्रभिः. . .(l 17) . 23.

[Lines 18, 19 missing]

त्र ⏑ –नेन सा वसुमती विदधे ॥

स राजा भुजबलेन यद्भूमिं धृतवांस्ततो हे[तो]............(l.20)
...... ..सत्यार्थोभूत्. क्षितिं बिभ्रतीति व्युत्पत्तिर्मृषाभूत् भूर्वसुधा
सत्यार्थतामधात् यतोनेन राज्ञा भूर्व(l 21)सुन्धरा वसुमती सतेजास्सधना
च कृता . स राजैव भूमेर्वसुभृत आसीदित्यर्थः ॥ 24.

नृहरिस्स्वयं(l 22) [स वसुधां यदधा-
दजंहुम]ढं तदिति दिकरिणः .
अनहंकृतिं [फणि]पतिं व्यदधा-
स्कलिपन्नगे(l 23) ⏑ ⏑ ⏑ – ⏑ ⏑ –[6] ॥

[नराणां]मध्ये हरिस्सिंहो ना चासौ हरिस्तरुणसिंहश्च स भूमिं यद-
धात्त(l 24).......................मुद्वहनाधिकारहरणादिति भावः सिंहे
च सति गजा मदं त्य(l.25**15)जन्ति स भूमिं यदधात्तत एवं शेषमनहङ्कृतिं
निरहङ्कारमकरोत् कलिसर्पे गरुत्मता(l 1) राजा यदि वहतीं भुवो दुरित-

1 Ms °नन°. Is it बलेन ? 2 Ms °निभृ°. 3 Ms °आह°. 4 Ms °नर्हृति°.
5 Ms °मनि. 6 Is it द्विजपतिर्विदधे ? 7 Ms. has पृ नि १७ vertically on margin.
8 Ms. स to °व crossed. 9 Ms °निहत्रा° 10 Is it वहद्भु° or वहन्तु° ?

भारं यन्न्यवर्धयदलघूर्भवर्त्ता भूमिं वहञ्शेपो नि(1.2)रहङ्कारो जात इत्यर्थः ·········································· (1.3) ······ फणिमारणात्फणिपतिस्तुष्यतीति चित्रम् ॥ 25.

भुवमुद्धरन्नजनयेन्नरकं
ममाथ तं मधुरिपु(1.4)श्च पुनः ·
स पुनस्तथा त्रिदिवमर्जितवा-
न्क्रतुभिश्च तं सुवसतामनयत् ॥

भूमिमुद्धरन्मधुरिपुर्नरकमु(1.5)दपादयत् ततस्स एव नरकं हतवान् स राजा पुनर्भूमिमुद्धरन्निरुपद्रवां कुर्वंस्तथा स्वर्गमर्जि(1.6)तवान्स तं स्वर्गं यज्ञैस्सुवसतां यथानयत् . यज्ञतृप्ता देवास्स्वर्गे सुखमासन्नित्यर्थः ॥ 26.

अतिसं(1.7)कुचन्नवयवैस्सकलै-
र्यमधस्स्थितो वहति कूर्मपतिः .
उपरि स्थितस्सकलभूमिभृतां
स विकस्वरः (1.8)क्षितिभरं तमधात् ॥

भूमेरधस्स्थितः कूर्मराजोऽङ्गैस्सङ्कुचन्यं वहति तमेवायं राजा राज्ञामुपरि स्थि(1.9)तस्स राज्याङ्गैर्विकसितोवहत् ॥ 27.

अवहेलया यदकरोत्स किम-
प्यतिदुष्करं किमपि येन विधेः(1.10) .
तत एव न ध्रुवमपत्रपया
तदधिष्ठितां स वसुधामरिशत् ॥ 28.

यदि वा शुचेरजनि यस्य कुले
स विधे(1.11)र्गतिः परिभवेष्वभवत् .

---

1 Is it °न्यवसयदभूम° ?.  2 Ms. °र्भर्ता.  3 Ms. °स्वत्°.  4 Ms. °नमृ°.
5 Ms. °मया.  6 Ms. °मजिग°. See Comm.  7 Ms. °ये: ग°.

भगवान्स्मरन्नुपकृतिं न तत-
स्तदलङ्कृताः परिबभूव दिशः ॥

मोयत्नेन यत्मम(। 12)पाटयत्तांद्विधिनापि कर्त्तुं यद्दुष्करम् अत एव ल-
ज्जया . ध्रुवं संभावनायां . स विधिस्तदाश्रितां भुवं(। 13) नारिशाद्धिंसित-
वान् . रिश हिंसार्थस्तौदादिकः . अविशदिति पाठश्चिन्त्यः अनुकूलस्य विधे.
प्रवे(। 14)शस्य विवक्षितत्वात् वक्ष्यमाणपद्यान्तरस्यान्वयाभावाच्च ॥

यदि वेति पूर्वसम्भावनायाः पक्षा(। 15)न्तरमाह . यस्य कुले जातस्स
चाहमानो विधेरसुखे परिभवे शरणमभूत तस्माद्धेतोरुपकारं स्म(। 16)र-
न्भगवान्विधिस्तद्भूषिता दिशो नाव्यथयन् . 29.

सोध्वैर इत्यन्तं कुलकम् ॥

चरणेपि यो मदनुगं व्य(। 17)थये-
न्मुखभञ्जनं सुकरमस्य मया .
इति ते कथां स्मरति धर्मपरां
न कलिर्मुखं क्वचन दर्शयते ॥(। 18)

यो मत्सेवकं पादेपि व्यथयेत्तस्य मुखभङ्गो मया क्रियते इमां धर्मनि-
ष्ठां तव प्रतिज्ञां यत्स्मरति ततो नू(। 19)नं कलिर्मुखं क्वापि न दर्शयते .
कलिना हि त्वदाश्रितो धर्मः पादगण्डिथि(?) इति भावः ॥ 30.

तव पा(। 20)दयोरपमृतास्सविधा-
द्व्यविह्वलाः [पुनर]भाग्यशतैः .
अतिरोहिताः कमलया क्षितिपाः
प्रति(। 21)जज्ञिरे तदनु पस्पशिरे ॥

---

1 Ms °स्मदह्न° 2 Ms °पादन°. 3 Dhatupatha, Tudadi,140. 4 Ms यस्य स तु°. 5 Ms °ना दिरिशो 6 Sic Evidently verse 38 is meant, but metre does not allow that to begin with मो°. 7 Ms. °ईयन. 8 Ms °येट°. 9 Ms. °हस्न°.

तव पादयोस्समीपात्रष्टा अत एव भीता अभाग्यशतैर्लब्ध्यात्प्राच्छा-दि(1.22)ता राजानो नूनं परिज्ञाताः [ज्ञानस]मनन्तरमेव पस्पशिरे बाधि-ताः··················अपसृतैः(1.23) भयविह्वलैरिति तृतीयाबहुवच-नान्तः पाठश्चिन्त्यः. पस्पृशिरे स्पृशेश्च पाठो विमृश्यः. पस्पशिरे (1.24*) [इति स्पश बा]धने इत्यस्य लिटि रूपं. राजद्रुहं परिज्ञाय लोका बाधन्ते ॥ 31.

भविता पुरस्सहचरैर्द्विषतां(1.1)
वरिवस्यतां नृप भवन्नखरणौ.
इति सूचितं खलु तवैव नखै-
र्यदर्शयन्प्रतिनिधीननुगान् ॥

हे नृप त्वत्पा(1.2)दौ शरणीकुर्वतां शत्रूणां सहचरैः पुरो भविता भ-विष्यते इत्येतत्त्वन्नखैरेव सूचितम्. अत्र साध्ये साधन(1.3)माह. भवन्न-खाश्शत्रूणां प्रतिनिधीन्प्रतिबिम्बाञ्छत्रूणामनुगानदर्शयन् भवन्नखेषु निर्म-लत्वा(1.4)न्नमन्तो भवद्द्विषः प्रतिबिम्बिताः ते प्रतिबिम्बा भवच्छत्रूणां सहचरा पुरो वर्तन्ते इत्यर्थः. त्वत्पादसेवका(1.5)नां सहचरसामग्री भवतीति भावः ॥ 32.

न हिमालयो न हिमवत्तनया
न हिमद्युतिर्न हिमशैलनदी.(1.6)
हिमवत्सखो न च हिमाद्रिवृषो
हरहृष्टये तव यशांसि यथा ॥

यथा त्वद्यशांसि हरस्य हर्षाय तथा(1.7) न हिमालयाद्याः. भवद्यशो-भिर्विश्वस्य पालनादिति भावः. 33.

हृदयङ्गमं न जलजन्म विधे-
[र्न] म(1.8)[धु]द्विषो भुजगतल्परुचिः.

1 Ms. नूनं. 2 Ms. °ज्ञात°. 3 Ms. पस्पशि°. 4 Dhātupātha, Bhū-adi, 912.
5 See note 4,p.71. 6 Ms. भावि°. 7 Ms. °न्नमन्तो°. 8 Ms. भवद्वि°.
9 Ms. °त्सेल°. 10 Ms. नद्दि°. 11 Ms. °मेन.

स्फटिकाचले न च शिवो रमते
तव कीर्त्तिभिस्स यदि सर्वगतः ॥

विधेर्ब्र(l 9)ह्मणं पुण्डरीकं हृद्य तथा ध्रुवंन्न भवति विष्णोश्च तथा शेपशय्याभिलाषो न भवति कैलासशैले च तथा हरो न भवति(l 10) यदि यस्मादर्थे स ब्रह्मा हरिर्हरो वा तव कीर्त्तिभिर्हेतुभिस्सर्वगतो रमते त्वत्कीर्त्ति सर्वगतां द्रष्टुं(l 11) स भ्रमतीति पुण्डरीकादौ न रमतीति भाव. ॥ 34.

पृथिवी त्वया फलवती विहिता
ऋतुभिर्हि ते जल(l 12)मुचो जलदाः .
उपतिष्ठते हविरिनं ज्वलना-
त्परिपूर्यते द्विजपतिश्च ततः ॥

त्वया भूर्यहुफला सम्पा(l.13)दिता यतो यज्ञैर्हेतुभिर्मेघा वृष्टिममुचन् हविराहुतिरिनमादित्यमुपतिष्ठते. अग्नौ प्रास्ताहुति(l.14)स्सम्यगादित्यमुपतिष्ठते इत्यागमात्. ततश्चन्द्रश्च पूर्णो भवति. 35.

[उ]दरंभरिस्तव शिखी यजनैः(l.15)
[सु]हृदस्सुखा ◡ भुवहत्यनिलः .
न विभाति खं न निगमध्वनिना
य[जमा]नतां न भवता न धृता ॥

त्वत्कर्तृ(l 16)............[उ]दरं विभर्त्ति पोपयति.............
मेरुसुखाद्.........[निग]मशब्देन खं(l 17) न [न शो]भतेपि तु शोभते भवता यजमानभावो न न धृतः ॥ 36.

इ◡—◡—◡◡◡—◡◡ती[12]-
र्जगदु[र्हि या](l.18)स्त्रिजगतीमकृतीः .

---

1 Ms. °यपु°. 2 Ms त° to °व lc under l 9 3 Ms. तया lc. under l.9.
4 Ms. तया lc under. l-10. 5 Ms. °ति रमर्त°. 6 Ms. °परिष्ट°. 7 Manu, 3.76.
8 Ms. °भना. 9 Ms. °मेरुः°. 10 Ms °मित्रे°. 11 Ms. °तीम°.

यदि ता भवानुपकरोति सदा
तदलं सुरैर्भवत एव [न]मः ॥

त्रिजगत्याः प्रकृती(l.19)रुपादानकारणानि सतीर्विभोः परमेश्वरस्य मूर्त्तीर्भूम्यादिका या जगदुक्ता इ··············(l.20)भवान्नित्यं यदुपकरोति तत्किं सुरैः न तान्नमस्यामः तुभ्यमेव नमः ॥ 37.

⏑ ⏑ – ⏑ – ⏑ ⏑ ⏑ –(l.21)⏑रितै-
र्विनमन्मुखश्चिरमभूद्वचनैः .
न परीक्ष्यतां कथमसौ पृथिवी-
परिपा[ल]– ⏑ ⏑ ⏑ –(l.22)⏑ ⏑कम् ॥

ब्रह्मप्रोक्तैः पू[र्वोक्तै]र्वचनैस्स्तवै·····················(l.23**16) 38.

* * * * * * * * * * *

1. Ms. पृ. ए. वि. vertically on margin.

** Copyist's remark—इत ऊर्ध्वं द्वित्राणि पत्राणि प्रायो गलितानि.

# [ चतुर्थः सर्गः ]

* * * * * * *[1]

हंामदभृतोप्यवमन्यमाने .
देवस्स तार्क्ष्ये इव वाजिनि वासुदेवो
हन्तव्यंमृत्युमुखसंमु[खदुष्टसत्वः].(।1)

स वासुदेवस्तेन भ्रात्रान्वितो निरगान् कीदृशा सुखा सुखावहा गति- र्यस्य तस्मिन्नश्वे निपण्ण[ःमत्तह](।.2)स्तिनो जितवति हन्तव्यानि मृत्युमुखा- नि संमुखं दुष्टसत्वानि येन मः मृत्युमुखानीति दुष्टसत्व ········(।3)- प.. यथा तार्क्ष्ये गरुडे निविष्टो वासुदेवो नारायणो निरगात् नागां भुजगाः दुष्टसत्वा दैत्याः शोभना [ग](।4)तिर्यस्येति च ॥ 1.

एतच्च कौतुकविधायकमादिदेवो
यदद्रिवासरुचिरेति किरातलीलाम् .
चित्रीयते त्व(।5)भ्रनधीरपि वासुदेवो
लीलाकिरातसरणिं स यदालम्बे ॥

अद्रिवासे रुचिर्यस्य स आदिदेवो गिरि[शो](।6)यत्किरातरूपमवहत्त- आश्चर्यम् अद्रिस्थानां किरातग्रहणोपपत्तेः इदं तु चित्रीयते आश्चर्यं भव-

---

1 Copyist's remark at the top of the page—अस्य पत्रस्य स्थानं सम्यक् निश्चेतु न शक्यते. 2 Restore भ्रात्रान्वित मुखगन्यो निरगाभिसयथो नागान्मदा°. 3 Ms. हतं°. 4 Ms. नाना°. 5 Read किरातरूपम°.

[ति] (l.7)यन्नवनंधीर्यस्य अर्वने रक्षणे धीर्यस्येति च स राजा लीलया किरा-
तत्वमग्रहीत् . चित्रङे आश्चर्ये इति क्यच् ॥ 2.

सर्वा[भिरेव]-(l.8)मृगजातिभिरेकमत्यं
निर्माय मानमवधीर्य पशुत्ववृत्त्या .
अग्रे विसृष्टमभयार्थितयेव रंहः-[3]
स[र्वस्वभूत](l.9)महरन्नृपतेस्तुरङ्गः ॥

पशुभावेन मानं त्यक्त्वा साम्मत्यं कृत्वा सर्वाभिर्मृगजातिभिरभया[र्थि-
तया] (l.10)प्रहितं सर्वस्वभूतवेगं राजाश्वोहरदित्युत्प्रेक्षा . अयमर्थः राजाश्वं
दृष्ट्वा मृगाणां वेगो नष्टः·········(l.11)हृते अभयाभिलापाद्राजाश्वस्य मृगै-
स्स्ववेगो दत्त इत्यर्थः[6] ॥ 3.

स प्राविशद्वन[भुवं वनदेवतानां]
[संगीत](l.12)केषु दधतीं सुखितोपविष्टम् .
उन्मालकाय परिपूर्णफलैर्विमुक्तैः
प्रा[णैरिव]⏑⏑⏑–⏑⏑–⏑(l.13) यूथम् ॥

वनदेवतानां सङ्गीतेषु सत्सु निश्चलं सुखितयोपविष्टं मृगकु[लं]······
·········(l.14)ष्टः अतस्संभाव्यते प्राणानां संपूर्णफलत्वादुन्मालकाय
प्रसादृदे···र्थी[7] त्यक्तैः प्र[ाणैस्त्यक्त](l.15)प्राणो हि निश्चलो भवति ॥ 4.

आकस्मिकं निपतितं परमान्नपात्रे
पाषाणखण्डमिव–⏑⏑–⏑–– .(l.16)

---

1 Ms. धीर्य° to °ने lc. on margin. 2 Ms. धीय°. 3 Ms. °त्रस्.
4 Ms. क्यस् cf. Patanjali's Mahabhashya on Panini, 3.1.19 ( नमोवरिवश्चित्रङः क्यच् )-क्यजादिषु प्रत्ययार्थनिर्देशः कर्तव्यः । नमसः पूजायाम् । वरिवसः परिचर्यायाम् । चित्रङ आश्चर्ये । etc. This sūtra is quoted by Jonarāja in his comm. on Shrikanthacharita,16.48, as नमस्तपो(sic)वरिवश्चित्रङः क्यच्, thus doing away with Vartika तपसः परस्मैपदं च on Panini,3.1.15. वरिवसः परिचर्यायामिति क्यच् occurs in the same at 19.38. 5 Ms. रंह°. 6 Ms. lc. mark but no lc. 7 Is it दात्रार्थी?

——⏑——⏑⏑णविघ्नमवाप्य वाजि-
कोलाहलं मृगकुलानि मुखान्यधुन्वन्.
... ... (l.17) 5.

[Lines 18 to the end of page missing](*)

सां मृगाणां प्रमाद इव कृत इत्यर्थः ॥ 6.

नीलोत्पलभ्रमवशाद्भ्रमतामलीना-
मारादनूदितगताग(1)[त]या दृशैव.
उत्थानविघ्नजननीं श्रवणामृतौघे
मङ्क्षा स्थितां श्रवणशक्तिमिवोद्धरन्तः ॥

दृष्टौ नीलोत्प(2)लमिति भ्रमतां भ्रमराणां गतागतानुवादिन्या. गीतप्रियत्वादितिभावः. दृष्ट्यैव श्रुतिशक्तिमिवोद्धरन्तः(3) श्रवणामृतप्रवाहे निमज्ज्य स्थितामुत्थाने विघ्नं कुर्वतीम् आकर्णनामृते मग्नां श्रुतिशक्तिमुद्धर्तुमिवं द(4)ष्टिं व्यापारयन्तीत्यर्थः. यश्च घटादिकं कूपादिकादुद्धरति स गतागतानि करोति ॥ 7.

तालोद्गमैः खुरपुटा(5)हननेन भूमे-
र्ग्रैवेयगुञ्जितगुणेन च वाहनानाम्.
वीक्ष्यास्यमात्रमपि किंपुरुषभ्रमेण
गन्तुं व्यलम्बिप(6)त मन्दधियः कुरङ्गाः ॥

भुवः खुरघातेन तालोच्चारणैरश्वानां ग्रीवालङ्करणशब्देन चाश्वानां मुखमात्रद(7)र्शने गीतप्रियत्वेन. दृशोनन्यव्यापारत्वं हेतुः. गायतां मुखानि लोकाः पश्यन्तीति वस्तुस्थितिः. मुखमात्रद(8)र्शनेन किन्नरभ्रान्त्या मन्दभया इव मृगाः ॥ 8.

---

1 Is it भ्रत्रा? 2 Ms °दत्नुभि°. 3 Ms °श्यनी°. 4 Add गन्तुं
व्यलम्बिषत

नानाविधश्रुतिसुखाहृतशब्दसार-
सारङ्गमांसरसनाभ्यस(l.9)नानुभावात् .
संक्रान्तगीतसमया इव सर्वगात्रे-
ष्वारेभिरे किमपि कर्णसुखं शवर्यः ॥

शवर्यः किरातव(l.10)ध्वः कर्णसुखं प्रारब्धवत्यः . नानाविधश्रुतिसुख-कारी आहृतश्श्रुतश्शब्दसारो यैस्ते सारङ्गा मृगास्तेषां मांसस्य(l.11) रसनं प्रसनं तदभ्यासातिशयात्संक्रान्तः परिणतो गीतसमयो यासां ता इत्यु-त्प्रेक्षा ॥ 9,

व्याधाङ्गनाभिर(l.12)थवा वनदेवताभि-
र्यद्गीयते किमपि तच्चरितं मदीयं .
किं हेतु कर्तृपदवीमिदमेति मृत्यो-
रित्यप भूप(l.13)[तिरदाद]भयं मृगेभ्यः ॥

किरातस्त्रीभिर्वनदेवताभिश्च किमपि लोकोत्तरं तत्प्रसिद्धं मदीयं च-(l.14)[रितं गीयते] तन्मृत्योर्हेतु कर्तृत्वं किमेतीति स मृगेभ्योऽदादभयम् . मद्गीतश्रवणश्रद्धयानपसरतां(l.15)............[म]रणद्वारं माभूदित्यभयं ददावित्यर्थः ॥ 10,

प्राणावसानसमयेप्यपतिप्यमाने
दृ्त्ता(l.16)

[Lines 17 to the end of page missing](''17) 11,

[3]द्धर्या रदैः कमलपत्रधिया च जिह्वाम् .
दूरावनम्रवदनोन्नमनः क्रमाच्च-
मातुस्तनाच्च स जघान वराहशावान् ॥ (l.1)

---

1 Ms. °म्रु°. 2 Ms. °सभ्र°. 3 Copyist's remark at the top of the page—अस्य पत्रस्य स्थानं सम्यक् निश्चेतुं न शक्यते. 4 Restore स्पर्धा रद्गुरुत्रसनया लिहतो मृणालबुद्ध्या.

दर्भाङ्कुरेषु मृणालभ्रान्त्या हेतुभूतया दर्भाङ्कुराञ्जिह्वया लिहतो जिह्वायां पद्मपत्रभ्रान्त्या जिह्वां दशनैर्लिह(1.2)त: दूरावनम्रैर्वदनैरुन्नमनाक्रमेणात्ता. पीता मातृस्तना यैस्तान्वराहपोतान्स नावधीत ॥ 12.

नैसर्गिकाविच(1.3)चलवर्णगुणस्य यत्न-
निष्पन्नवर्णगुणसङ्गमसुन्यजेन ।
दिग्वाससेव कृशशास्त्रमुखेन देवो
बाधां द्विज(1.4)स्य शिखिनो विशिखेन नैच्छत् ॥

स्वाभाविकोऽविचल: स्थिरो वर्णगुणो नीलपीतादिर्यस्य द्विजस्य मयूर(1.5)स्य: पक्षिणो राजा बाधां नाकरोत् केन यत्नेन निष्पन्नो निष्पादितो यो वर्णो गुणस्तंगमसन्नेन हेतुना सुत्यजेन विशिखेन । वि(1.6)गलिता लुञ्चिता शिखा केशा यस्य तेन शिखिनश्चूडावतो द्विजस्य कस्यचिद्बाधां नेच्छति अविचलो वर्णो (1.7)ब्राह्मणत्वं गुण: पाठादिश्च यस्य यत्नेन निष्पन्नो वर्णगुणो ब्राह्मणगुण: पाठादिस्तेन सुत्यज: । कृशं शा(1.8)स्त्रं यस्य तन्मुखं यस्य अल्पशास्त्रज्ञेनेत्यर्थ: ॥ 13.

यत्पुण्डरीकमवधीत्तत एव चन्द्रा-
पीडोयमित्यधिजगाम यश(1.9)स्स राजा ।
दूरं गतस्तु मृगयाव्यसनेन चित्रं
कादम्बरीं न मनसापि कदाप्यपश्यत् ॥

स राजा पुण्डरीकं व्याघ्रं(1.10)मुनिपुत्रं च यदहिंसीत्ततोयं राजा चन्द्रापीड इति प्रसिद्धिं प्राप्तवान् । चन्द्रापीडो राजा पुण्डरीकं मुनिपुत्रं हतवान्(1.11) अयं च पुण्डरीकं व्याघ्रं हतवान् इति चन्द्रापीड इति प्रसिद्धिं प्राप्त् । आखेटकव्यसनेन तु दूरगतोपि मनसापि(1.12) कादम्बरीं मदिरां

1 Ms. °न्तत्. 2 Add स्व. 3 Ms. °गुणो°, ग being lc. under 13.
4 Ms. °स्तं°. 5 Ms. °र

कादम्बरीं नाम स्त्रियं च न लब्धवान्. चन्द्रापीडेन राज्ञा कादम्बरी लब्धा अयं पुनश्चन्द्रापी(1.13)डोपि भवन्कादम्बरीं न लब्धवानित्यर्थः ॥ 14.

सुप्तो हरिः क्वचन भूपतिना गुहां[यां]
—◡—◡◡◡◡◡◡—(1.14)बभूवे .
दंष्ट्रानखप्रकरकेसरचन्द्रिकाया-
मूष्माणमात्मन इवा◡◡——◡—(?) .

············[सु](1.15)प्तस्सिंहो धनुर्गुणटाङ्कारैराहूतः दंष्ट्रा च नखप्रकरश्च·················(1.16)·················जहुवांबभूवे इति चिन्त्यम्·················(1.17) 15.

[Lines 18 to end of page missing](5)

[प्र]माथ्थ्यम् ॥

स्वतन्त्रैस्स्वेच्छाकल्पितैर्वचनैस्स्वैरात्मीयैस्तन्त्रवचनैः कर्तृभिर्दुष्टसत्त्वसिंहादिरल्पसत्त्वश्च(1.1) [क्षुपु]पो महतां साम्यं यदि यन्त्रीयेत . समर्थनायां लिङ्. तेन साम्यनयनेन हेतुना स दुष्टसत्त्वो महद्भयो(1.2)[मरणं] सहते . लभते इति वा पाठः . तथा हि माणवकत्वेन रूढससंस्साम्यमेव मतं निवारयितुं सिं(1.3)हं सोवधीत् . सिंहो माणवक इति लक्षणाया उदाहरणं प्रसिद्धम् . ततो राजैवमिवाचिन्तयत् अ(1.4)हमपि बाल्ये माणवक एवासम् अतो मम च सिंहेन साम्यं जातं तन्मम मलमतस्तन्मार्ष्टुमहं(1.5) [सिंहमेव हन्]मीति सिंहो राज्ञा हतः सिंहे हते सिंहसाम्यं न केचित्कथयन्तीत्यर्थः ॥ 16.

प्राप्नोति साधु(1.6)[रुपमानतया] स्थितापि
प्राणप्रयाणसमयेप्युपकारकत्वम् .

---

1 Ms. 'द्रावां'. 2 Ms. 'र'. 3 Is इत्याहूयांबभूवे ? 4 Ms. 'कुमा'.
5 Restore—साम्यं स्वतन्त्रस्वैरोक्तैः दुष्टसत्त्वो [illegible] तेन साम्ये मरणं महत्त्वः । सिंहं निहन्मि स [illegible] ॥ 6 Ms. 'रिद'.

श्रुत्वा कदाचन नृपेण हि गौरिवेति(17)
मासः पुरोपि गवयो घृणया न जघ्ने ॥

उपमीयते येन तदुपमानम् तद्भावेनापि स्थितम्साधुर्म(I 8)रणावसरे-
प्युपकारं करोति तथा हि यथा गौस्तथा गवय इति पूर्वं श्रुत्वा पुरः प्राप्तोपि
गवयो रा(I.9)ज्ञा न हतः कारुण्यात् ॥ 17.

पञ्चाननोहमभवं न ममाधुनास्ति
तत्पञ्चमं मुखमितीव भयाद्विधात्रा .(I 10)
दिङ्नागचक्रमपि पादतले विधातुं
पादाष्टकमकटनात्परिपूरितेच्छम् . 18.

भित्त्वा गते शरभमस्य(I 11) शरे सुदूरं
पुष्पाञ्जलिर्गगनतो भुवि यः पपात .
मन्ये स निर्वृतधिया दिवि राशिचक्र-
मध्यस्थितं(I 12)[न हरिणा?]⌣ ⌣ — ⌣ — —[1]

............अहं पञ्चाननः पञ्चसंख्यमुखस्मिहश्च प्रागभवमद्य [illegible] मम
(I 13)..................पञ्चममुखस्य च्छेदात् अतः पञ्चाननत्वमनेन
गोपितमिति भ(I.14)..................हन्तुमिच्छा पूरिता यस्य तं कुतः
पादाष्टकनिर्माणाम् तं शर(I.15)[भं]............[ध्याकाशा]द्यः पुष्पाञ्ज-
लिः पपात स नूनं हरिणा·· [रा]शि···धि(I 16) 19.

[Lines 17 to end of page missing](**18)

[3]शून्यं स्वेच्छया गृहीतं वरं वारणानां चक्रवालं यत्र तत् स्वच्छन्दं
चारिणश्शिखिनो मयूरा बहनयश्च(I.1) यत्र विहरन्तो मृगा यत्र राज्ञाम-
भयदानादिति भावः ॥ 20.

---

1 Restore हरिदेव ममन्यते स्म. 2 Copyist's remark at the top of the page-प्रस्तावि पत्रस्य स्थानं न मम्यक् लिखेतु शक्यते । 3 Restore ·····इत्यन् । स्वेच्छा-गृहीतवरवारणचक्रवालं स्वच्छन्दचारिशिखि हरिणपूर्णं च (?) ॥

आखेटिकाव्यसनिनो नृपतेर्विशेषा-
दायासि(l.2)ता इति गतैरतिमान्यभावम् .
अश्वैरवापि यवसावसरश्चिरेण
सर्पैस्त्वरण्यसुलभैः करभा ननन्दुः ॥

अश्वा(l.3) मया खेदिता इत्याखेटिकासक्तस्य राज्ञोत्यर्थं मान्यतां गतै-रश्वैर्यवसेशनेवसरश्चिरेण प्राप्तः वनसु(l.4)लभैस्सर्पैर्हेतुभिरुष्ट्रा ननन्दुः. उष्ट्राणां सर्पाशनत्वात् ॥ 21.

नित्यानिमेषनयनत्वमयं विपाकं
दुष्कर्मणां(l.5) करभदर्शनतो विदित्वा .
पाणी पिधानपदवीमुपनीय काश्चि-
द्द्रष्टुं नरेन्द्रमपि नापुररण्यदेव्यः ॥

नित्यं(l.6) यदनिमेषात्त्वं तद्रूपं पापमुष्ट्रदर्शनान्मत्वा प्रथममस्माभिः करभो नूनं दृष्टो यतो निर्निमेपत्व(l.7)मक्ष्णां जातमन्यथाक्षि निमेषसुखं लभेत . उष्ट्रोदर्शनीय इति प्रसिद्धिः . अतो हस्तौ दृष्टेः पिधानत्वं(l.8) नीत्वा वनदेवता राजानमपि द्रष्टुं न प्रापुः ॥ 22.

वामेतरेण नयनेन च बाहुना च
कृत्वैकमत्यमिव नित्यमपि(l.9) स्फुरद्भ्याम् .
राजा निरुद्धनगरीगमनोद्यमोथ
प्रासादमुन्नतमकारयदप्यरण्ये ॥

सांमत्यमिव कृ(l.10)त्वानवरतमेव कम्पमानाभ्यां दक्षिणाभ्यां बाहु-नेत्राभ्यामिव निरुद्धो नगरीगमनोद्यमो यस्य स राजा वने प्रासादम(l.11)-कारयत् . सुनिमित्तदर्शनात्तेन वने प्रासादः कृत इत्यर्थः ॥ 23.

---

1 Ms. °सावर°.	2 Ms. °सुरभैः.	3 Ms. °रण्यं.

इन्द्रः करोति मम किं सति वासुदेवे
मुञ्चा(1.12) ⏑ — ⏑ तमवश्यममुष्य भाग्यैः .
भावी वनेपि लवणाम्बुनिधिर्ममेति
प्रालेयशैलसुतमास्पद(1.13)तामिवाप्तम् ॥ 24.

आत्ता मया हरिणजात्यभयप्रतिज्ञा
क्रीडाकिरातभयमप्यपसारयामि .
—(1.14)त्रस्यं तेद्विधुमृगस्य नभोवनेस्मि-
न्दत्त्वेति निर्मितमिवातिशयेन तुङ्गम् ॥

वासुदेवे राज्ञि नाराय[णे] (1.15)········ तिं········ ·किं करोत्य-
····················[भू]पवासुदेवस्य भाग्यैर्वनमध्ये·········(1.16) 25.

[Lines 17 to end of page missing](*)

र्हि कम्पते. स्यात्प्रासादो वैजयन्त इत्यमरः ॥ 26.

स्थानस्य तस्य महिमानमसौ विदित्वा
तत्र प्रवेशमपरस्य नि(1.1)पिध्य देवः .
द्विप्राण्यहान्यनुबभूव महेभरामा-
वैधव्यभीतिभिषजं मृगयाविनोदम् ॥

तस्य प्रासादस्य मा(1.2)हात्म्यं ज्ञात्वान्यस्य तत्र प्रवेशं रुद्ध्वा स राजा महेभरामाणां हस्तिनीनां वैधव्यभीतेर्भिषजं निवारकमाखे(1.3)टकं व्यधात्. एकाक्येव वनेसाववसदित्यर्थः ॥ 27.

मध्याह्नमालमतिवाह्य मृगेन्द्रमुक्त-
मुक्तावलीसिकति(1.4)तासु वनस्थलीपु .

---

1 Ms °मनुष्य. 2 Is it °मनन्य°? 3 i.e. अभय 4 Amara, 1 40.
5 Ms. °षय. 6 Ms °सावमदि°.

स प्राविशद्धवलवेश्म तुषारशैल-
भ्रान्त्येव शीतलतया विहिताधिवासं ॥

सिं(1.5)हमुक्तमुक्तासहितासु वनभूमिषु मध्याह्नमतिवाह्य स धवलप्रासादं प्रविष्टवान् हिमाद्रिरियिति भ्रान्त्येव(1.6) शैत्येन कृतस्थानम् ॥ 28.

द्वारान्त एव विनिवारितवारणौघं
घर्माम्बुशीकरकरम्बितहारदामा .
स्वाम्यन्तराश्रय(1.7)णदूषणहीनभाग्य-
मात्रानुगस्स शयनीयगृहं विवेश ॥

घर्माम्बुमिश्रितहारमौक्तिकस्स द्वारान्त एव(1.8) निरुद्धहास्तिकं शय्यागृहं प्राविशत् स्वाम्यन्तराश्रयणेन दूषणं निन्दा तेन हीनानि भाग्यमात्रा(1.9)ण्येवानुगा यस्य सः ॥ 29.

इतः प्रभृति तं वीक्ष्य भूपतिरित्यन्तं कुलकम् ॥

उद्विग्नमप्यवनताद्वनमध्यत(1.10)ल्पा-
दारुह्य तुङ्गतममास्पदमाप्तनिद्रम् .
नारायणं स्वयमिवैक्षत सेव्यमानं
गूढं श्रिया स्वशयनीयग(1.11)तं कथञ्चित् ॥

अब्धिवासेनोद्विग्नमतोप्यवनताज्जलमध्यशयनात्प्रासादमारुह्य लब्धनिद्रं स्वयं नाराय(1.12)णं गूढमलक्ष्यया लक्ष्म्या सेव्यमानमिवेत्युत्प्रेक्ष्यां कंचित्पुरुषं स दृष्टवान् ॥ 30.

आसूत्रिताम्बुधरजङ्गम(1.13)चन्द्रशाला-
वातायनक्षणिकशक्रशरासनाभिः .

1 Ms. °म्बुशे°. 2 Ms. °हस्ति°. 3 Ms. °तल्पात्°. 4 Ms. °ध्वनि°. 5 Ms. °मिवेत्युत्प्रेक्ष्या° crossed after °ण. 6 Ms. मि° to °ला lc. under l. 12.

दत्तद्युयानपरिखिन्ननिपण्णशङ्क-
शङ्कां[भिरा(। 14)भरणदी]धितिभिर्विभान्तम् ॥

अम्बुधरा एव जङ्गमचन्द्रशाला वातायनानि तेपु चाणिकमिन्द्रचा-
पमासूत्रि(। 15) ...... .. ..तथा द्युयानेनाकाशगमनेन..............स्य
श[ङ्का] दत्ता याभिस्ताभिर्भूपणदीप्तिभिरशोभ(। 16) 31.

[Lines 17 to end of page missing](**19)

द्वंरं मुक्ताहारं धारयन्तम् अतस्संभाव्यते कान्त्यतिशयानुरक्तया ना-
कलक्ष्म्या निजकण्ठा(। 1)दवरुह्य दत्तताराभयभूपणम् ॥ 32.

हारान्तरालगतनायकपद्मराग-
व्याजेन विभ्रतमि(। 2)वानुगतं ग्रहौघैः .
केनापि कारणलवेन गतं द्युवीथीं
भूमेरुपायनकृते [स्व]तनूजमेव ॥ (। 3)

हारमध्यस्थितस्य नायकभूतस्य पद्मरागस्य व्याजेन भूमेरस्वतनुजमेव
भौममेव विभ्र(। 4)न्तम् . कीदृशं समहगणं भूमेर्मातुस्सकाशाद्द्युमार्गमारूढं ,
कुत इत्याह केनापि का(। 5)रणांशेनोपायनार्थम् . भूम्या दिवो दर्पणार्थं भौम
एव विसृष्ट इत्यर्थः ॥ 33.

केयूर(। 6)योः कटकयोश्च निवेशितानां
ज्योतिर्भरैरुभयपार्श्वगतमणीनाम् .
निर्विघ्नमर्म्यरगतागत(।.7)सिद्धिहेतोः
सन्दर्भयन्तामिव चित्रशिखण्डिभावम् ॥

1 Ms "ग्रजाद". 2 Copyist's remark at the top of the page पत्रेस्मिन् क्षेसकान्तरप्रतीति 3 Ms "न्स्वानि". 4 Sic अवरोप्य. 5 Ms "त्तता" 6 Ms. "रुपान". 7 Ms. "तनुज". 8 Ms "भैम". 9 Ms "भ्रत". 10 Ms "पाशार्य". 11 Ms. "मो. च". 12 Ms. "मम्बर".

अंगदयोर्वलययोर्विषययोः(1.8) स्थापितानां रत्नानां पार्श्वद्वयगै रश्मिभिर्हेतुभिर्निर्निरोधगाकाशगतागतार्थं चित्रस्य शि(1.9)खण्डिनां मयूरस्य सर्पीणां च भावं प्रकाशयन्तम् ॥ 34.

संवर्धमानमृगदावरतेर्न(1.10)रेन्द्रा-
दुन्मोचनीयमखिलं भवता कुलं मे ।
भूत्वा द्विधाभमिव कुण्डलकान्तिभङ्ग्या
कर्णद्व(1.11)ये गुहशिखण्डभृतोच्यमानम् ॥

अतिमृगयाव्यसनाद्राज्ञो मद्वंशस्त्वया रक्ष्य [इति] (1.12) कुण्डलद्वयस्य व्याजाद्रूपद्वयं कृ[त्वा]······[म]यूरकलाद्व(?)······नम् ॥ 35.

व्यो[मभया](1.13)णसुलभश्रमया मुखेन्दुं
संस्पृश्य लब्धरसया च सलज्जया च ।
चूडामणेरमितया नि(1.14)शयेव भासा
संबध्यमानदृढनिद्रमुपर्मुखेपि ॥

प्रभातेपि··············संबध्यमाना(1.15) दृढा निद्रा यस्मिंस्तमित्युत्प्रेक्षा. विपर्ययया निशायाः संभावने विषयमाह चूडाम(1.16)णेरमितया दीप्त्येति. निशायाः कथं तत्र निद्रेत्याह व्योम्नि प्रयाणे सुलभः श्रमः खेदो यया(1.17) दर्पया मुखचन्द्रं स्पृष्ट्वा लब्धशृङ्गाररसया च संलज्जया च. उपर्मुखेपीत्युपरशब्दो रेफा(1.18)न्तः प्रायो न दृष्टः ॥ 36.

पुष्पस्रजाममरलोकभुवामु[पास्ति]-
मारब्धवद्भिरलिभिर्मधुरं(1.19) ध्वनद्भिः ।
विद्याधरोयमिति कैश्चन मूर्तिमद्भि-
र्वि[द्याधरै]रिव [समा]श्रितयामिक[त्वम्]॥(1.20*)

1 Ms. °काशयितुम्. 2 Is it °मृगयाभिरतेः ! 3 Ms. द्विधेत्रमि° 4 Ms. °द्राज्ञा.
5 Ms. °नमो. 6 Ms. °भश्रस°. 7 Ms. °खेन्द्रं. 8 Ms. भामा.
9 Ms. °दपित°. 10 Ms. उपमु°. 11 Sic. 12 Ms. °धनीय°.

नाकोत्पन्नानां पुष्पमालानां सेवां कुर्वद्भिर्यतो मधुरं ध्वनद्भिर्भ्रमरैर्हेतुभिरेष विद्याधरो(11) भवतीति हेतुना मूर्तैर्विद्याक्षरैरिवाश्रितं यौमिफलं यस्य ॥ 37.

द्रष्टव्यदर्शनमयं फलमा(12)प्तकाल-
माहर्तुमीक्षणयुगं मनुजेश्वरस्य ।
आनन्दबाष्पजलनाम्नि सिद्धतीर्थे(13)
शुद्धिं नयन्तमिव तत्समयावतीर्णे ॥

प्राप्तकालं द्रष्टव्यस्य दर्शनरूपं फलं नि(14)र्षयितुं तत्कालजाते हर्षाश्रुतीर्थे राज्ञो नेत्रद्वयं शुद्धिं प्रापयन्तम् । तीर्थजशुद्धिप्राप्तव्यं(?) लभ्यते ॥(15) 38.

तं वीक्ष्य भूपतिरचिन्तयदेष ताव-
दस्वप्नतां व्यभिचरत्यथ शेषशायी ।
देवोयमेतदपि(16) नास्ति स दृश्यते यै-
स्तेषां भवन्ति नहि दिव्यदृशां विकल्पाः ॥

राजैयमचिन्तयत् एष पु(17)रुषोस्वप्नतां देवत्वं व्यभिचरति । देवा हि निद्रारहिताः । अस्वप्नतां व्यभिचरति सु(18)प्त इवि च । [दे]वोपि हरिस्स्वपतीत्याह अथ शेषशायी देवो हरिरयमित्येतदपि नास्ति यतो यैस्स हरिर्दृश्यते(19) तेषां दिव्यदृशां सवां विकल्प. कुतः । सुप्तत्वाच्छेषशायीति विकल्पः ॥ 39.

गन्धर्वसिद्ध(110)गणकिन्नरलक्षणानि
नात्रासते न च मनुष्यविशेषणेनम् ।
संभावयामि न(111) च वैश्रवणस्य योपि
ध[र्ता] नरः स्पृशति सोपि ममोपवानम् ॥

1 Ms. °र्वि°. 2 Ms °मो° crossed after नि°. 3 Ms. निप्र°. 4 Ms. राज्ञ. 5 Is it 'सुप्तस्य स्व°'? 6 Ms दै. वे°. 7 Ms. °कप्र. 8 Ms °जैवं चि°. 9 Ms. °वो° to °रे is on margin.

गन्धर्वादीनां लक्ष(1.12)णानि नास्मिन्वर्तन्ते न चैनं विशिष्टं मनुष्यं संभावयाम्यहम् कुबेरस्य यो वहन(1.13)मूतो नरस्सोपि मम प्रतीतिं (?). 40.

नागोपि नाय[मुरग]त्वविभिन्नयापि
मूर्त्या न हि व्य(1.14)[भिच]रन्त्यहयः फणित्वम् .
लोभस्वभावमलिना खलु जातिरेषा
रत्नं वराकधनव(1.15)द्विजहाति नाङ्गात् ॥

उरगत्वात्पुच्छादिमत्वाद्विभिन्नयापि मूर्त्या मूर्त्यन्तरेणाप्ययं(1.16) न नागः तथा हि नागाः फणान्न त्यजन्ति. हेत्वन्तरमप्याह एषा जातिर्नागं-जाति(1.17)र्लुब्धा स्वाङ्गाद्रत्नं न त्यजति अतो वराकधनवदित्युपमा॥ 41.

विद्याधरत्वमपि यद्दिज(1.18)पादलेप-
कौक्षेयकाञ्जनमलत्रयकल्मषं स्यात् .
तन्तावदस्य न भवत्यथ यः प्र(1.19)कार-
स्तुर्यस्तमस्य मुखदर्शनतो विधास्ये ॥

पादलेपखड्गाञ्जनमलत्रयेण क(1.20··20)ल्मषं यद्विद्याधरत्वमपि स्यात्तदप्यस्य न तावद्भविष्यति अथ यो विद्याधराणां चतुर्थः प्रकार(1.1)-स्तमप्यस्य मुखदर्शनात्करिष्यामि ॥ 42.

ध्यात्वेति सान्द्रशतपत्रसगोत्रमास्यं
व्यात्तं मनागवलुलो(1.2)कयिषोस्तदीयम् .
उर्वीपतेर्गगनसागरकेलिनावा
लीनं तले गुलिकया चरणाङ्गुली(1.3)नाम् ॥

1 Ms. a le. mark after °र्ति, but no le. 2 Ms. रेखे. 3 Ms. °चरम crossed after °स्य. 4 Ms. °सुखं°. 5 Ms. has पृ. रा. च. १ vertically on margin. 6 Ms. कल्मषं. 7 Ms. °केड्गुलि°.

सान्ध्य किंचिद्विकसित यच्छतपत्रं पद्मं तस्य सगोत्रं सदृशं मनाग्व्यात्तं विकसित तदीयमा(1.4)स्यं द्रष्टुकामस्य गाङ्गः पादतले गुलिकया लीनं. भावे क्त . गगनमेव सागरस्तत्र केल्य(1.5)र्थे नावा . गुलिकाविद्याधरा गुलिका- प्रभावाद् व्योमन्युद्गच्छन्ते ॥ 43.

संस्पृष्टमात्रचरणश्च तया(1.6) स दध्यौ
भूयोपि शेखरमणिः प्रविभावनानां .
त्वं संदिहानमिव मानस मा स्म भूर्मे
विद्या(1.7)धरोयमिति तेस्तु दृढा प्रतीतिः ॥

तया गुलिकया स्पृष्टपाद एव स प्राज्ञानामग्रणीः. पु(1.8)नरपि चिन्तितवान् हे मानस त्वं कर्तृ संदिहानं संदेहयन्मा स्म भूः यतोयं पुरुषो विद्याध(1.9)र एवेति निश्चयस्तवास्तु ॥ 44.

इन्द्रादिपूजितगरिम्णदृढप्रभाव-
बाणावलीप्रसवनर्म(1.10)दया मदीये .
अस्मादवश्यमनया वदनेन्दुबिम्बा-
न्निर्गत्य विन्ध्य इव केलिगृहे निपेते ॥(1.11)

इन्द्रादिभि' पूजिता गरिम्णा दृढा ये प्रभावास्त एव बाणास्तत्पङ्क्त्याः प्रसव उत्पादस्तेन नर्मदया(1.12) नद्या विन्ध्यपातिन्या . नर्मदाया हि बाणाः प्रभवन्तीति प्रसिद्धिः . अनया गुलिकयास्य विद्या(1.13)धरस्य मुखचन्द्रान्निर्गत्य विन्ध्यसमे मदीये लीलावासे पतितम् ॥ 45.

एवं विकल्पयति(1.14) भूभुजि भूभुजिष्या-
स्त्वेच्छाप्रकाश्यरमणीयपदार्थसार्थे .
विद्याधरस्स बुबुधे [च मदीय]व(1.15)क्त्रा-
द्भ्रंश सिद्धगुलिकेति समभ्रमीच ॥

1 Ms इन्द्रांकाण°. 2 Ms भन्मे 3 Ms. °मतो° 4 Ms °िरष्ट°.
5 Ms इन्दा° . 6 Ms °िरा. 7 Ms समभ्रमीथ.

भूरेव भुजिष्या दासी तया स्वेच्छया यथेच्छं प्र(1.16)काश्या रमणीयाः पदार्थसार्था यस्य तस्मिन्नाजनि एवं विकल्पान्कुर्वति सति विद्याधरः(1.17) प्रबुद्धः मन्मुखाद्गुलिका पतितेति च ज्ञातवान् संभ्रान्तश्चाभूत् ॥ 46.

भूपालतिग्मरु(1.18)चिपादतिरोहितायां
तस्यां मनःकुमुदशाश्वतचन्द्रिकायाम् ।
कष्टं नभश्चरशशी स्फुट(1.19)लक्ष्यमाण-
शङ्काकलङ्कमतिपाण्डुमुखं बभार ॥

नभश्चरो विद्याधर एव शशी सुतरां स्फुटं(1.20) लक्ष्यमाणश्शङ्काकलङ्को यस्य तदवहत् यतोऽतिपाण्डुरम् कदा तन्मन एव कुमुदं तस्य नि(1.21*)त्यज्योत्स्नायां गुलिकायां राजपाद एव सूर्यस्तेन च्छादितायां सत्यां, रविपादच्छादितायां ज्योत्स्ना(1.1)यां सत्यां चन्द्रो दृश्यकलङ्कं मुखमग्निमभागं वहति ॥ 47.

शून्याशयस्य वहतो वदनं विरूपं
सन्त्येव(1.2) तस्थुरिव नास्य विभूषणानि ।
विच्छायतामुपगते तुहिनांशुबिम्बे
व्योम्नि स्थितान्यपि हि नैव विभान्त्युडू(1.3)नि ॥

शून्यहृदयत्वाद्विच्छायं मुखं दधतोऽस्य वर्तमानान्यपि भूषणानि न तस्थुरिव चन्द्रे म्लाने व्यो(1.4)मस्थान्यप्युडूनि नैव शोभन्ते ॥ 48.

उत्तिष्ठता धरणिपालमनेन दृष्ट्वा
व्रीडाभरादवनताननता(1.5)वाप्य ।
ऊर्ध्वे गतेरवसरस्सकलस्समाप्त
इत्याशयेन वसुधेव परीक्ष्यते स्म ॥

शयनादुत्थितवता(1.6) विद्याधरेण राजानं दृष्ट्वा लज्जाभरान्नतमुखत्वं प्राप्याकाशगमनार्थं सकलः कालो गत इति(1.7) भावेनेव भूरीक्षिता ॥ 49.

---

1 Ms. सन्तः°. 2 Ms. राजपा°. 3 Ms. °शयस्य.

कार्पण्यगी(1.19)रमृतदीधितिबिम्बमध्या-
दुल्केव निष्पतदिति त्वरितं बभाषे ॥

अवमानश्रवणाभावमुदा(1.20)हरति. यदस्मात्तं विद्याधरं नम्रमुखं वक्तुकामं दृष्ट्वा स राजा भीत इव विद्याधरस्य मुखादमुष्मादृन(1.21)र्हाल्क-पणवाक् चन्द्रमण्डलादुल्केव मा स्म पतदित्यतस्तूर्णं भाषितवान् ॥ 53.

मान्येन धर्मवित्र(1.22--21)र्शनं तथान्तरिक्षा-
देत्यान्वभूयत सुपुत्रदशाप्रवेशः .
एषा यथा सकलमङ्गलकोश(1.1)मुद्रा
याता न सिद्धगुलिकेव न यामिकत्वम् ॥

मान्येन विद्याधरेण तापाकुलेनाकाशादेत्य(1.2) स्वापस्तथानुभूतः यथा मङ्गलमेव कोशस्तस्य मुद्रेयं सिद्धगुलिकेव यामिकत्वं न न प्रापद(1.3)पि तु प्रापत्. एवं राज्ञा गुलिकायाः प्रकाशनं कृतम् ॥ 54.

एतावतेव नृपतेर्वचनामृतेन
संपू(1.4)र्णकर्णकुहरस्य नभश्चरस्य .
राहोर्मुखादिव विनिर्गतमिन्दुबिम्बं
तत्कालमेव ददृशे मुखम(1.5)न्यदेव ॥

इयन्मात्रेणैव राज्ञो वाक्यामृतेन पूरितकर्णस्य विद्याधरस्य मुखमन्य-देव तत्काल(1.6)मेव दृष्टम् अतो राहुमुखान्निर्गतं चन्द्रबिम्बमिव ॥ 55.

आदाय तां क्षितिपतेश्च सुधांशुले(1.7)खा-
मम्भोनिधेरिव स खेचरचक्रवर्ती .
प्रारम्भचर्वितविषादविपात्रतीर्णा
पीडां विधूय(1.8) परमेश्वरतामवाप ॥

1 Ms. has पृ. त्रि. २६ vertically on margin. 2 Ms. वित्रिवित्रे°. 3 Ms. °मिन्द्र°.

मसुद्रादिव राज्ञश्चन्द्रलेखामिव तां गुलिकां गृहीत्वा प्रथमम(1.9)नुभूताद्विपादादवतीर्णा प्रथमदुःखजातां पीडां त्यक्त्वा स दिविपदग्रणीः परमेश्वरभा(1.10)वं विद्याधरत्वं प्रापन्. विपपीडां त्यक्त्वा परमेश्वरश्च समुद्रादिन्दुलेखामग्रहीत् ॥ 56.

राजान(1.11)मित्थमवदच्च महानुभाव
भावत्कमध्यवसितं मुनयो न विदुः .
विद्याधराधिपतितां पतितां(1.12) पुरस्ता-
द्यत्पादयोरपि तृणाय न मन्यसे स्म ॥

स राजानमित्यवदत् हे महानुभाव मुनयो निरद्(1.13)हा अपि त्वदीयमध्यवसितमौदार्यं न जानीयुः त्वत्पादयोरग्रे पतितामपि विद्याधरचक्रवर्ति(1.14)तां त्वं तृणायापि नामंस्था. ॥ 57.

दग्धोपि लोचनमुखेन महेश्वरस्य
कामं विवेश हृदयं पुनरेव(1.15) कामः .
एकं तु तस्य भवदाशयमात्रमेव
मन्ये महीमिहिर दुर्ग्रहमेकदुर्गम् ॥

दृष्टि(1.16)पथेन दग्धोपि कामो मन्मथो लोभश्च महेश्वरस्य चित्तं पुनरविशत् हे महीमिहिर भूमिसू(1.17)र्य कामस्यैकमेव त्वच्चित्तमात्रमेव दुर्ग्रहं दुर्गमस्ति. भवच्चित्ते एव कामो न वर्तते इत्यर्थः ॥ (1.18) 58.

कामानुयातमरिपंचकमन्यदाहु-
स्तस्मिञ्जिते तदपि ते पुरतो वराकम् ;
प्राणाहुतीकृतव(1.19)तो जलधिं महर्षे-
र्नक्रादयः क्व गणनास्पदतामवापुः ॥

जना अन्यदरिपञ्चकं क्रोधादिकं(1.20) कामानुयातं काममनुसरदाहुः.

1 Ms °तीर्य. 2 Ms °चित्रमा°.

क्रोधादीनामग्रणीः काम इत्यर्थः . तस्मिन्कामेभिलाषे जिते(1.21) सति ते तव पुरतस्तत्क्रोधादिपञ्चकं वराकमकिञ्चित्करम् . अगस्त्यस्य समुद्रं पिबतो नक्रादयः(1.22) जलजन्तवः क गणनीयाः ॥ 59.

तत्किं ब्रवीम्युपचिकीर्षति मानसं मे
त्वां प्रत्यपीति धिगनीतिविदु(1.23*)क्तिरेषा .
प्राप्योपमन्युमुनिना किल दुग्धसिन्धुं
क्षीराभिषेककलशेन मुनिः प्रसाद्यः ॥

त्वं यतो(1.1) जितलोभस्तत्किं ब्रवीमि जल्पितुमहमशक्त इत्यर्थः मम चित्तं तवोपकर्त्तुमिच्छतीत्येषानी(1.2)तिज्ञानामुक्तिः . शिवात्क्षीरसमुद्रं प्राप्योपमन्युना मुनिना कर्त्रा शिवः क्षीरकलशेन किं प्रसाद्यः ॥(1.3) यद्वा यत्त्वां प्रत्युपचिकीर्षति मे चित्तमित्येषानीतिवदुक्तिः वक्तुं नोचितमित्यर्थः प्रत्युपकारं मह्यं(1.1) न करोतीत्याशङ्कायामाह उपमन्युमुनिना क्षीराब्धिदोपि शिवः क्षीरकलशेन किल प्रसादनीयः(1.2). 60.

चिन्तामणेः कनकमध्यनिवेशनं य-
त्कल्पद्रुमस्य यदि वा जलसेकचिन्ता .
यत्प्रवृत्तिरुत वा सु(1.4)रभेस्तृणानां
या स्यादुदात्तहृदयानुपकर्तुमिच्छा ॥

यदुदारचेतसामुपकर्तुमिच्छा त(1.5)च्चिन्तारत्नस्य सुवर्णमध्ये स्थापनं तथा तत्कल्पवृक्षस्य जलसेकः तथा कामधेनोस्तृणानां प्रवर्तने यत्तार(1.6)-म्भः . वाक्यार्थरूपकम् ॥ 61.

सद्भिस्तदप्युपकृतादपि कश्चिदंश-
स्स्वीकार्य एव लघुताशम(1.7)नाय तस्य .

---

1 Ms. °वीम्यु°. 2 Is it गिरः ? or better, मृडः ? 3 Ms. कत्रा. 4 Ms. यद्वा to °नीयः lc. at the top of page in two lines. 5 Ms. °सुप°. 6 Ms. प्रवर्तने lc. on margin.

नाग्राहि विश्वभयदे किल कालकूट-
व्याधौ हृते शशिकलाप्युदधेर्मृडेन ॥

यद्यप्यु(l 8)दाराश्रयाणा प्रत्युपकारार्थमसामर्थ्यं तथापि तस्योपकृतस्यो-ऽलाघवार्थं कश्चिद्भाग. कृतोप(l 9)कारात्स्वीकार्यो ग्राह्यः . विश्वभयघायिनि कालकूटव्याधौ वारिते सति शिवेन समुद्राच्चन्द्रस्य क(l 10)लापि न किं गृहीता ॥ 62.

एवं स्थिते किमपि यत्कथयामि नाम
तत्कार्यमेव भवता मदनुग्रहाय(l 11) .
धामत्रयीनयनभासितसर्वलोकः
किं चन्द्रमौलिरपि नेच्छति दीपदानम् ॥

कृतोपकारात्प्रत्यु(l 12)पकारो ग्राह्य एवं स्थिते मति यदहं वदामि सन्मतप्रसादार्थं त्वया कार्यमेव . धामत्रयीयुक्तैर्नयनै.(l 13) प्रकाशितसमस्त-भुवनश्चन्द्रमौलिरपि दीपदानं किं न काङ्क्षति ॥ :63.

आकर्णयेदमनवद्य(l.14)मते मदुक्तं
विद्याधरः प्रसवितास्ति शाकम्भरो मे .
अस्यामरण्यभुवि तस्य ययौ तपोभि-
र्देवी(l 15) हिमाद्रितनया नयनातिथित्वम् ॥

हेनवद्य[मते] निरहंकारबुद्धे इदं मद्वचश्शृणु त्वम(l 16) शाकम्भराख्यो मम पितात्रारण्यभूमावस्ति तस्य तपोभिर्हेतुभिरत्र देवी गौरी दृग्गोचर-(l.17)त्वं प्रापत् ॥ 64.

शाकम्भरीति च पितुर्मम कीर्तिहेतो-
र्नाम स्वयं वरदया सदयं तयात्तम्(l 18) .
भागीरथीति हि पदं सुरनिर्झरिण्याः
पुण्यानि शंसति पृथूनि भगीरथस्य ॥

1 Ms 'पकर्नैयस्या'. Is it तस्योपकृतस्या' ?

सदयं मम(1.19) पितुः कीर्तिहेतोर्वरदया गौर्या स्वयमेव शाकम्भरीति नाम गृहीतम् गङ्गायां भागीरथी(1.20)ति नाम भगीरथस्य पुण्यानि वहूनि सूचयति ॥ 65.

किं भूयसा सततसंनिहितामरण्ये
ताम(1.21)त्र मज्जनयितुर्निदधुस्तपांसि ।
विद्याधरेन्द्रनगरादतिसर्वकालं
तद्दर्शनाय करवा(1.22)णि गतागतानि ॥

बहुनोक्तेन किम्, मत्पितुस्तपांसि देवीमत्रारण्ये नित्यसन्निहितां चक्रुः(1.23**22°) अतिसर्वकालं जातु जातु तस्या दर्शनाय विद्याधरनगराद्गमनान्यागमनानि च करवाणि ॥(1.1) 66.

देवीप्रसादफलमंद्य मयानवद्यं
पर्याप्तमाप्तमनवाप्तचरं पुरस्तात् ।
नानुग्रहानभिमु(1.2)खीषु हि देवतासु
युष्मादृशो नयनगोचरमापतन्ति ॥

पूर्वमनवाप्तचरं देवीप्रसादफ(1.3)लं निर्दोषं संपूर्णं पुरः प्राप्तम्, त्वद्दर्शनप्राप्तिरेव देवीप्रसाद इत्यर्थः, देवतास्वेव प्रसादपरा(1.4)सु त्वादृशां दर्शनं लभ्यत इत्यर्थः ॥ 67.

तद्वाहिनीं प्रहिणु यामवतीक्षणेऽत्र
कुन्तं निवेश्य भुवि(1.5) पृष्ठमवीक्षमाणः ।
आरुह्य वाजिनमथ व्रज राजधानी-
मेतावतीमुपकृतिं कुरु मे द्वितीयाम् ॥(1.6)

तत्तस्माद्धेतोस्त्वं सेनां विसृज त्वं रात्रिक्षणे भूमौ कुन्तमायुधविशेषं

1 Ms. गतया. 2 Ms. °ण्ये°. 3 Ms. has पृ. ग्र. २७ vertically on margin.
4 Ms. °द्मवम°. °फल° written above °मय°. 5 Ms. पुरः lc. under 1.8.
6 Ms. °मवेश°.

निधायाश्वमारुह्य प(l 7)श्चात्प्रदेशमपश्यच्चाजधानीं गच्छेत्येतावतीमप्रतिमश्लाघ्यामुपकृतिं कुरु मे ॥ 68.

उक्त्वेत्यदृश्य(l 8)पदवीमुपयाति तस्मि-
न्विश्वम्भरापरिवृढः प्रणिधाय सैन्यम् ।
दृष्ट्वा कुलस्य परमभ्यु(l 9)दयं कृतार्थो
देवस्स्वयं द्युमणिरस्तमयं प्रपेदे ॥

एवमुक्त्वा तस्मिंस्तिरोहिते सति स भूप(l 10)तिस्सेनां व्यसृजत् स्वकुलस्य महान्तमुदयं दृष्ट्वा कृतार्थस्सन्निव सूर्यो लोकान्तरमगात् ॥(l.11) 69.

भूमिं प्रविष्टवति कुन्त इवाथ भास्व-
त्युच्चैस्तरां लवणसिन्धुरुदच्छलयत् ।
तत्रास्ति कारण(l.12)लवो न हि कश्चिदन्यो
राज्ञः प्रभावमहिमा स समस्त एव ॥

यथा कुन्ते तथा भास्वति(l 13) भूमिं प्रविष्टवति सति उच्चैस्तरां क्षारसमुद्रो यदुच्छलितवांस्तत्रान्यो हेत्वंशो न विद्यते स स(l 14)र्व एव राज्ञो [भूपतेश्चन्द्रम]सश्च प्रभावः ॥ 70.

अत्यद्भुतं किमपि कुन्तमुखेन कर्म
निर्मातुमु(l.15)त्कलिकयावतरद्वितस्य ।
वा⏑⏑⏑⏑ पृथिवीपुरुहूतबाहो-
रन्यैव काचिदुदपादि तदा(l 16) स्फुरत्ता ॥

कुन्तेन किमप्यद्भुतं कर्म निर्मातुमुत्कण्ठयेव व्याप्तस्य············
·······(l 17)लोकोत्तरा स्फुरत्ता कम्पो जातः । उदपादीति कर्तरि लुङ् ॥ 71.

---

1 Ms "चेहर्नीना" 2 Comm. right if the text is taken to be मेऽद्विर्नीया, but मे द्विर्नीना is better as the पयना उपकृति is the restoration of the गुटिका.
3 Sic. Read प्रविश्याय 4 Ms माहा°. 5 Ms. चन्द्रस्य Ic. on margin.
6 Restore बाधेनास्य पृ°.

वातायनादवततार ततस्तता(1.18)चि-
स्तत्काल आभरणदीप्तिभिरुक्तमार्गः .
स्वैरेव लक्षणगणैर्निज एव तेज-
स्युद्दीपिता(1.19)भिरिव मङ्गलदीपिकाभिः ॥

ततस्स राजा वातायनादवतीर्णस्तस्मिन्काले आभरणदी(1.20)प्तिभि-दर्शितमार्गः राजा निजैरेव लक्षणैर्निज एव तेजसि ज्वलिताभिर्मङ्गलदी-पिका(1.21)भिरिवेत्युत्प्रेक्षा ॥ 72.

आयानरत्नकिरणैः कचदाननाग्रं
द्वाराग्रतो झटिति वाडवमारुरोह .(1.22*)
सप्तार्णवीप्रसभपानपरेण धाम्ना
कामं तले लवणसिन्धुरिपुं गृहीतम् ॥

आयाने(1.1) वल्गायां रत्नांशुभिर्दीप्यमानमुखं हयं स द्वारादारोहत् ॥ सप्तसमुद्राणां प्रसभं पाने(1.2) परेण तेजसा हेतुना राज्ञा तले गृहीतं नूनं लवणार्णवारिं वडवाग्निम् ॥ 73.

किं भूरिभिः(1.3) किमिति नात्र निधिं प्रसूषे
लावण्यसारमसि धात्रि तमेकमेव .
इच्छापि येन न भवत्य(1.4)परेष्वितीव
कुन्तेन भूमिमथ भूमिधरो बिभेद ॥

बहुभिः किं हे धात्रि येन करणभूतेना(1.5)न्येषु निधिषु इच्छापि न भवति तमेकमेव लावण्येन चारेण च प्रधानं निधिं किमिति न प्रकाशय-सीती(1.6)व राजा कुन्तेन भूमिं भिन्नवान् ॥ 74.

---

1 Ms. राजा lc. under l.2. 2 'कचि दीप्तिबन्धनयोः' (Dhātupāṭha, Bhū-adi,196), See Notes. 3 Ms. राज्ञा lc. under l.3. 4 Ms. लवार्ण°. 5 Ms. इच्छामि. 6 Ms. लाण्ये°. 7 Ms. चारेण च lc. under l.5.

नासापुटाननभुवो भुवनत्रयस्य
संबन्धिनस्सममिव(1.7) भ्रमतस्समीरान्.
स्पर्धावशादनुगतेन ततो हयेन
प्रातिष्ठत प्रजविना नरलोकपा(1.8)लः ॥

नासापुटाभ्यामाननाच भूर्येषां तांस्त्रिभुवनस्य सम्बन्धिन इव समं भ्रमतो वायून्स्प(1.9)र्धावशादिवानुगच्छता वेगवताश्वेन स राजा प्रस्थानमकरोत ॥ 75.

मध्येतमो रजसि दू(1.10)रमुदस्यमाने
रत्नांशुभिर्हरिरराजत सत्वराशिः.
दृष्टा विमुक्तविकृतिप्रकृतिर्विशुद्धं (1.11)
स्वं पौरुषं दधदशोभत वासुदेवः ॥

तस्मो मध्ये मध्येतमः अन्धकारमध्ये रजस्युदस्य(1.12)माने उत्थाप्यमाने रत्नरश्मिभिर्हयोशोभत सत्वस्य बलस्य राशिः तथा वासुदेवोशो-(1.13)भत. कीदृक् द्रष्टा पश्यन् तथा विमुक्तविकृतिः प्रकृतिर्यस्य तथा स्वं पौरुषं दधानः तथा(1.14) सत्वराशिर्धैर्यस्थानम् अथ च द्द..........तमोगुणे............सत्वगुणस्य(1.15) ........ .. निर्विकारप्रकृतिः वासुदेवश्च ॥ 76.

चन्द्रोदये गगनचुम्बितया स्थितत्वा(1.16)-
द्दृष्ट्वा हयं जविनमात्मसुतभ्रमेण.
पश्चादिवागतवतो जलधेस्समीपे
कल्लोलशब्द(1.17)मवनीरमणो न्यशाम्यत् ॥

चन्द्रोदये पश्चादागतवतो लवणसिन्धोस्तरङ्गशब्दं स राजा(1.18)शृणोत्. आगमने हेतुरुत्प्रेक्ष्यते वेगवन्तं वाजिनं दृष्ट्वात्मसुत उच्चैःश्रवा इति भ्रमेण(1.19). भ्रमः कुतो जात इत्याह आकाशव्यापित्वेन स्थितत्वात् ॥ 77.

---

1 Ms त्रिभि°.

तेन स्मरन्नपि वचस्स नभश्चरस्य
कौतूह(1.20)लेन वहुलेन गृहीतकर्णः .
व्यावृत्तदृष्टिरगुरत्वरमैक्षत स्वं
पानीयतामिव यशो गत(1.21)मव्धिमध्यात् ॥

तेन तरङ्गशब्देन घनेन गृहीतकर्णश्श्रुतशब्द इत्यर्थः . भवता कुन्तं भूमौ (1.22**23[2])निवेश्य पृष्ठं न विलोकनीयमिति विद्याधरस्य वचस्स्मरन्नपि कौतुकेन निवर्त्तितदृष्टिस्स राजा(1.1) समुद्रनित्यनिवासाज्जलरूपतां प्राप्तं स्वमिव यशो दृष्टवान् ॥ 78.

यावत्किमेतदिति विस्मयवा(1.2)रिशय्या-
नारायणत्वमधिरोहति तावदेव .
विद्याधरस्स पुनरेव नरेश्वरं त-
मित्थं जगाद गग(1.3)नार्णवकर्णधारः ॥

गगनार्णवे कर्णधारो नाविको व्योम्नि संचरन्स विद्याधरस्तं राजानमेवं तावदवद(1.4)त् . एष नादः किं संपन्न इति विस्मय एव वारिशय्या तत्र नारायणत्वं यावदाश्रयति . साश्चर्यः(1.5) इत्यर्थः . वर्तमानसामीप्ये इति लट्. अन्यश्च यावज्जले मज्जति तावत्कर्णधारः प्राप्नोति ॥(1.6) 79.

अक्रोधकुन्तकरणक्षतमोदमान-
पृथ्वीपुरंध्रिघनघर्मजलायमाना .
क्षेमङ्करी रणधुरा(1.7)सुहृदां हयानां
राजन्नियं लवणसिन्धुरवातरत्ते ॥

अक्रोधं कोमलतया कुन्तकरणेन क्ष(1.8)तं घातस्तेन मोदमाना तुष्यन्ती पृथ्वी एव पुरन्ध्रिस्तस्या घनघर्मजलवदाचरन्ती युद्धभारो(1.9)द्वाहिनां

---

1 Ms. वद°. 2 Ms. has पृ. रा. २८ on margin. 3 Ms. °वत्त. Is it श्चोत्त ? 4 Pāṇini, 3.3.131. 5 Ms. एव le..under 1.9.

तवाश्वाना हितेयं लवणसिन्धुरवतीर्णा. नगदातेन च वनिताया धर्मज-लोद्वेद. ॥(1 10) 80.

यन्नाम किञ्चन पतिष्यति वस्तुजातं
क्षारत्वमेष्यति तदत्र समस्तमेव .
तेनाचरिष्यति न केव(1 11)लमेव कीर्त्ते-
र्यावत्प्रतापदहनस्य तवानुवृत्तिम् ॥

यत्किञ्चन स्वादुकटुकादि वस्तुजातमिह(1 12) लवणसमुद्रे पतिष्यति तत्सर्वं कर्तृ क्षारत्वं लवणत्वमेति यत्तेन हेतुना न केवलं त्वत्कीर्त्तेरेवां(1 13)यं लवणाम्भा अनुवृत्तिं करोति. त्वत्कीर्तिं शृण्वतामन्ये वृत्तान्ताः क्षारा इत्यर्थः यावत्प्रतापाग्नेरप्ययं(1 14) लवणा··········नुवृत्तिं करोति दाह·······
······कीर्तेरतिमाधुर्यादन्येषां वृत्तान्ताः क्षारा इवेत्यर्थ. ॥ (1 15) 81.

इन्दोः कुलस्य यशसां वसतिः कुरूणां
क्षेत्रं पवित्रयति योजन[पञ्चकं तत्] .
लोकान्तरे फलति(1 16) तत्फलवाननेन
लोकद्वयेपि भविता सवितुस्तु वंशः ॥

इन्दो. कुलस्य··········नां कुरूणां [वत्संच](1 17)न्धिनां यशसां वसतिः स्थानं यत्क्षेत्रं कर्तृ योजनपंचकपरिमाणं लोकं पवित्रयति तल्लोकान्तरफलं द[दाति] (1.18). तु. पक्षान्तरे. अनेनं परिमाणेनेत्यर्थः लवणसमुद्रेण तु सूर्यस्य कुलं सूर्यवंश्या राजानो लोकद्व(1 19)ये फलवन्तो भवन्ति. अयमर्थः कुरुक्षेत्रमृताः कुरवस्स्वर्गमात्रं लब्धवन्तः सूर्यवंश्यानां तु लव(1 20)णाम्भा इह परत्र च फलप्रदः ॥ 82.

तदेव लोकद्वयफलदानं दर्शयति ॥

1 Ms. °स्सर्वे°. 2 Ms °वैव°. 3 Ms त्वत्की°. 4 Ms. °त्ताना°.
5 Ms ° निरपा°. 6 Ms. °नाप°. 7 Ms. °त्रार्थ°.

यः पूर्वपुंभिरु(l.21)दखन्यत तावकीनै-
रेकोपि तृप्तिमुपयाति न वाडवोस्मात् .
प्रीतिं विधातुमखिलेष्वपि [वाडवे](l.22*)षु
जातस्त्वदन्वयभुवां लवणाकरोयम् ॥

त्वदीयैः पूर्वपुरुषैस्सगरैर्यस्समुद्रः प्रागुत्खातस्तस्मादे(l.1)कोपि वाडवो वडवाग्निर्न तृप्तिमेति त्वत्कुलजातानां संबन्धिषुं वाडवेष्वग्धेषु तृप्तिं कर्त्तुमयं स्वस्खातो लवणस(l.2)मुद्रो जातः ॥ 83.

आशापुरीति नृपते कुलदेवता ते
शाकम्भरी भगवती च मयि प्रसन्ना .
एते द्युसिन्धुय(l.3)मुने इव सर्वकालं
रक्षिष्यतो लवणवारिनिधिं मिलित्वा ॥

राजन्नाशापुरी नाम देवी तव कुलदेव(l.4)ता भवति . शाकम्भरी देवी च मयि प्रसन्ना भवति एते गङ्गायमुने इव मिलित्वा लवणाब्धिं रक्षिष्यतः ॥(l.5) 84.

आविर्भविष्यति विना भवदन्ववाय-
मन्यस्य कस्यचन नैष रसो नृपस्य .
और्वाग्निधूमभवमभ्रगणं हि(l.6) हित्वा
पातुं न कोपि तृषितः क्षमते पयोधौ ॥

भवत्कुलं विनान्यस्य कस्यापि राज्ञोयं लवणाम्भा न प्र(l.7)कटीभविष्यति . संभावनायां लृट् . वाडवधूमजातं मेघकुलं त्यक्त्वा को नु तृषितस्समुद्रे पातुं सम(l.8)र्थः . हित्वेति क्त्वाप्रत्यय·····················॥ 85.

1 Ms. °तान्तां.　　2 Ms. °ण्भिश्चत्रा°.　　3 Ms. स्वत्खातो le. at the top of page.
4 Ms. °मद°.　　5 Is it कोम्गस्य्° ?

किं भूयसा स्फटिकशैल इवा(l 9)ष्टमूर्त्ति-
शिद्धावलेन परिकल्पितवोयमूर्त्तिः .
अभ्यागतश्चरणयोस्तलमत्र यस्या-
श्शाकम्भरीति गि(l.10)रिजा तव सेयमग्रे ॥

बहुनोक्तेन किम् . अष्टमूर्त्तेस्सकाशाच्छिद्धत्ता संप्रदायस्तद्बलेन परिक-ल्पित(l 11)जलरूप स्फटिकाद्रिरिव यस्या. पादतलमागताय सेयं शाक-म्भरी देवी तवाग्रे भवति ॥ 86.

एनां प्र(l 12)णम्य शिवशेखरचन्द्ररेखा-
मन्दाकिनीशिशिरपादयुगामिदानीम् .
निर्वापिताध्वगमनक्लमस(l 13)न्निपातः
पृथ्वीपुरन्दर पवित्रय राजधानीम् ॥

शिवस्य शेखरीभूते ये चन्द्रलेखामन्दाकिन्यौ तद्वत्ता(l.14)पहरपादद्व-यामेतां गौरीं प्रणम्य शमितमार्गतापज्वरस्त्वं राजधानीं गच्छ ॥ 87.

उक्त्वेति विस्म(l 15)यसुधारसवर्षमेघो
बद्धाञ्जलिः प्रति[मुमोच स्रौ]—⏑— .
राजापि तूर्णमव[रुह्य हयाद्]यासी(l.16)-
—⏑–⏑⏑⏑–⏑[परी]तकल्यम् ॥

विस्मय एव सुधारसस्तस्य वर्षे मेघस्स विद्याधर इ(l 17)त्युक्त्वा ब-द्धाञ्जलिस्सन्प्रंसमुञ्चन् . राजा च सद्योश्वादवरुह्याचम्य सलिलस्य परीक्षा-मकरोत्(l 18) पुण्यं प्राप्तवान्पानादिनेत्यर्थः ॥ 88.

अथ शिवशिरश्चन्द्रज्योत्स्नाललाटविलोचन-
ज्वलनसततमत्या(l.19)सत्तिमभानककोष्णयोः .

1 Ms. भूमया    2 Ms °वम्क°.    3 See Canto XII. 44, 49.

उपचितयशस्तेजाश्शाकम्भरीचरणाब्जयो-
रनतिनिकटे नीत्वा रात्रिं प्रगे न(1.20)गरीमगात् ॥

शिवस्य शिरसि चन्द्रज्योत्स्ना तथा ललाटे विलोचनाग्निः तयोर्नित्यं प्रत्यासत्तिस्तत्प्रभावेन(1.21) कवोष्णयोः. शिवो नित्यं शाकम्भरीं प्रणमतीत्यर्थः. शाकम्भरीपादयोरनतिसमीपे··············(1.22)··········· राजोपचिते यशस्तेजसी यस्य स तथा सन्प्रातर्नगरीं गतः..यशस्तेजसोरुपचये कवोष्ण(1.23* *24')देवीपादतलवासस्संभावित इति भद्रम् ॥ 89.

श्रीलोलराजसुतपण्डितभ(1 1)ट्टनोनः
राजात्मजो विवरणेन चतुर्थसर्गम्,..
दुर्गं सुबोधमकरोदिह जोनराजः.
पृथ्वीमहे(1.2)न्द्रविजयाभिधकाव्यराजे ॥

पृथ्वीराजविजये चतुर्थस्सर्गः ॥

---

1 Ms. पृ. रा. vertically on margin.

# [ पञ्चमः सर्गः ]

लव(I 3)णाकरमाकर्ण्य स्ववंश्येनावतारितम् .
रथाश्वानामिव भीत्यै सप्ताश्वो द्रुतमाययौ ॥(I 4)

स्ववंश्येन वासुदेवेनावतारितमुत्पादितं लवणसमुद्रं श्रुत्वेवाश्व[प्री]त्यर्थ-
मिव सप्ताश्वस्सूर्यो द्रुतमु(I 5)दितः ॥ 1.

शापं दशरथोप्यापदर्कवंश्यो मृगव्यया .
अवाप्तानुग्रहो राजा स पुनः प्राविशत्पु(I 6)रीम् ॥

सूर्यवंश्यो दशरथोपि आखेटिकया शापं प्रापत् स तु राजा सूर्यवंश्यो
मृगव्यया(I 7) लब्धप्रसादो नगरीमविशत् ॥ 2.

शाकम्भरीप्रदेशो यदुदगुस्तस्य कीर्तयः .
अतो नोद्वे(I.8)गमाजग्मुः पुलिने लवणोदधेः ॥

शाकम्भरीप्रदेशो मरुभूमित्वात्क्षारः . तत्र यत्त(I 9)स्य यशांसि जा-
तानि अतः क्षाराब्धितटे तानि नोद्वेगमागतानि . क्षाररससात्म्यादिति
भाव.॥(I 10) 3.

लवणाम्भोनिधेस्स्वामी क्षीराम्भोधिनिवासिनः .
क्रमात्स वासुदेवस्य वासुदेवोन्तिकं ययौ ॥(I.11)

क्षीराब्धिवासिनो वासुदेवस्य निकटं स वासुदेवो राजा गतः . लवणा-
म्भोनिधेः(I 12) स्वामीति समीपगमनौचित्यार्थम् ॥ 4.

1 Is the text °मुध्यो ?. 2 Valmiki, II 63-64; Raghu, IX. 74-84.
3 Ms °णाम्भो°. 4 Ms °णाम्भोवे .

भुवं शाकम्भरीदेव्या सनाथां यदुपासते .
तद्वंश्यां(1.13)स्तेन भरायन्ते सर्वे शाकम्भरीश्वराः ॥

शाकम्भरीपालितां भूमिं वासुदेवकुलजा यत्सेवन्ते(1.14) तत[स्ते शाक]-म्भरीश्वराः कथ्यन्ते ॥ 5.

उ[त्तुङ्गै]‒⏑‒[भास्व]न्मित्रैरहितवर्जितैः .
राजचन्द्रैरनन्ता भूः(1.15) समराजि महोत्सवैः ॥

तै राजचन्द्रैरनन्ता भूमिर्न················अपि·········(1.16)-स्यर्थः महान्त उत्सवा येषां तैरुत्तुङ्गैरुदारैः भास्वन्ति दीप्तानि मित्राणि शत्रुरहितैः(1.17). सर्वपदाश्रयः पुनरुक्ताभासः . उत्तुङ्गादीनां सर्वेषां पदानामामुखे पुनरुक्तत्वात् ॥(1.18) 6.

जज्ञे तदन्वयोदन्वत्सुधांशुर्वसुधापतिः .
सामन्तराजस्सामन्तराजिकैरविणीरविः ॥(1.19)

वासुदेववंशसमुद्रचन्द्रो मंडलेश्वरपङ्क्तिकुमुदिनीसूर्यस्सामन्तराजनामा [जज्ञे] (1.20) . छेकानुप्रासः ॥ छेकाः पक्षिविशेषास्तद्वागुपलक्षितोनुप्रासः दन्व················(1.21)कानामावृत्तेः ॥ 7.

सुषुवे जयराजं तं राजन्तं स जयश्रिया .
यं वीक्ष्याजौ विव[स्वन्तं वसन्तं प्रा](1.22*)प राजकम् ॥

विवस्वन्तं सूर्यसमं यं दृष्ट्वा रणे राजगणश्चन्द्रगणश्च वसन्तं तेजोनाशं प्राप तं जयलक्ष्म्या शो(1.1)भमानं जयन्तराजनामानं पुत्रं स प्रापत् ॥ यमकं . तुल्यरूपयोस्समुदाययोरावृत्तेः ॥(1.2) 8.

नितान्तमुन्नतिमतो नेतुमानतियाततताम्-
तेने तेन नतान्नेतुमुन्नतिं मानिना मतिः ॥

1 Ms. °स्याः ते°. 2 Ms. °चन्द्रै°. 3 Ms. °शाधि°. 4 Ms. °द्विते°. 5 Ms. °राजा°.

तेन मानिना(l 3) जयराजेनोन्नतिमत उद्धतान्नतिं नेतुं नमयितुं तथा नतान्प्रणमत उन्नतिं नेतुं वर्धयितुं नित्रा(l 4)न्तं मतिः कृता ॥ त्र्यक्षरो वृत्त्यनुप्रासः ॥ नकारतकारमकाराणां त्र्याणामावृत्तेः ॥(l 5) 9.

नतेनतेतेन तेन तेन तेन नतेन ते .
नते नते तेन तेन ते नते न नते नते ॥ 10.

इति स्तुतं कविवरैर्मुख्यं स(l 6)र्वमहस्विनाम् .
प्राप विग्रहराजं स ग्रहराजमिवात्मजम् ॥

नतेति निष्ठान्तं स्त्रीलिङ्गं प्रथ(l 7)मैकवचनं क्रियापदम् . इनतेति कर्मपदम् . इतेन तेनेति कर्तृविशेषणम् . तेन तेनेति कर्तृपदम् .(l 8) नतेनेति च कर्तृविशेषणम् . ते इति तच्छब्दस्य जसन्तस्य रूपम् . इति पूर्वार्द्धे पदविभागः . नते न(l 9)ते इति सप्तम्येकवचनान्तं पदद्वयम् . तेन तेनेति च तृतीयान्तम् . ते नते इति द्विवचनान्तं कर्तृप(l.10)दम् . नेत्यव्ययम् . नते नते इति द्विवचनान्तं पदद्वयम् ॥

तेन तेन पुरुषेण कर्त्रा ते सव सम्य(l 11)न्धिर्ना इनता ऐश्वर्यं नता सर्वैस्त्वदैश्वर्यप्रणामः कृत इत्यर्थः . पुरुषेण कीदृशेन इता प्राप्ता(l.12) इनता स्वाम्यं येन तथा नमता . इति प्रथमार्धव्याख्येयम् . ते नते कर्त्र्यौ नते नते न भव(l 13)न. उन्नते उन्नते भवत इत्यर्थः ता लक्ष्मीः इनता स्वाम्यम् कस्मिंस्तेन तेन हेतुना नते नते प्रणा(l.14)मं कुर्वेति पुरुषे ॥ सर्वतोभद्रम् ॥ चित्रमिदं खङ्गादिसंनिवेशहेतुवर्ण(l.15)·········· ॥ ··············
···[कवी]न्द्रैः स्तुत···········स्विपु प्रधानं ग्रहराजं सूर्यमिव स राजा विग्रह(l.16)राजाख्यं पुत्रं प्रापत् ॥ 11.

यस्य खड्गाद्विनिर्गत्य गङ्गयेव हरेः पदात् .
कीर्त्या त्रैलोक्यपावन्या(l.17) लङ्घिता गिरिसागराः ॥

1 Ms वृत्ता˚ 2 Ms नेनेन्नेनि 3 Ms स्व˚. 4 Ms ˚धानत्र˚.

विष्णोः पदादिव यस्य खड्गाद्विनिर्गत्य गङ्गयेव त्रिभुवनस्य पावन्या (l.18)कीर्त्त्या पर्वतसमुद्रा लङ्घिताः ॥ 12.

दूरस्थाप्यरिवक्त्रेषु बभौ यत्खड्गकालिका .
कलङ्कश्यामि(l.19)का चान्द्री शतपत्रवनेष्विव ॥

यत्खड्गस्येव कालिका शत्रुमुखेषु बभूव . कदाचित्सैव स्यादि(l.20)त्याह दूरस्थापि दूरादेव प्रतापभयात्पलायमानानां द्विषां मुखकान्तिर्हीनास्संभाव्यते ख(l.21)[ड्ग]श्यामिकेव लग्नेति . का केष्विव . पद्मवनेषु चान्द्रीव कलङ्कश्यामिकेव ॥

उपमान्वयम् ॥(l.22""25)सर्वमहस्विनां मुख्यमिति साधारणधर्मस्य सद्भावात् उपमानभूतेन ग्रहराजेना(l.1)पि साधारणधर्मस्योपमेयवत्संबन्धात् . खड्गपादयोर्बिम्बप्रतिबिम्बभावात् . कालिकाश्यामि(l.2)कयोः पर्यायनिर्देशात् ॥ 13.

यशोभिर्यस्य वर्षान्ते दुर्यशोभिश्च वैरिणाम् .
मिलितैर्हंसकाद(l.3)म्बैरिव दिद्युतिरे दिशः ॥

वर्षाणामन्ते मिलितैर्हंसैः काकैश्च यथा दिशश्शोभन्ते तथा तद्यशो(l.4)भिश्शत्रुदुर्यशोभिश्च दिशोशोभन्त ॥ समुच्चयोपमा ॥ हंसकाकानां यशोपयशसां च समका[ले](l.5) दिशां द्योतनात् ॥ 14.

तनयश्चन्द्रराजोस्य चन्द्रराज इवाभवत् .
संग्रहं यस्सुवृत्तानां सुवृत्तानामि(l.6)व व्यधात् ॥

चन्द्रराजाख्यश्चन्द्रो ग्रंथकारस्स इवास्य पुत्रः चन्द्रराजाख्योभवत् शोभमानां वृ(l.7)त्तानां वसन्ततिलकादीनामिव सुवृत्तानां सदाचाराणां पुरुषाणां यस्संग्रहमकरोत् ॥ (l.8)श्लेषमिश्रोनन्वयः ॥ चन्द्रराजस्य चन्द्रराजे-

1 Ms. °यास°.    2 Ms. मुख्यानामिति.    3 Ms. °स्येध°.    4 Ms. °योवि°.
5 Ms. °रिणम्.    6 Ms. दिवः.    7 Ms. °तैर्हंमैःका°.    8 Ms. संगृहं.    9 Ms. °श्च°.

नैव सुवृत्तानां सुवृत्तैरेवोपमानात् तेनैवो(। 9)पमानत्वेनन्वयस्य सद्भावात् ॥ प्राकरणिकाप्राकरणिकत्वं न विचार्यम् ॥ 15.

सर्वभूतोपयोगित्वात्सर्वथा हृदयंगमा .
क्षमेव दयि(। 10)ता तस्य दयितेव क्षमाभवत् ॥

उपकारपरत्वेन सर्वभूतानामुपयोगित्वात्सर्वथा मनोह(। 11)रा दयिता दयावत्त्वं प्रिया च क्षमेव भूरिव क्षान्तिरिव चाभूत् क्षमा दयितेवाभवत् ॥ (। 12) श्लेषमिश्रैवोपमेयोपमा ॥ क्षमादयितयोरन्योन्यमुपमेयोपमानत्वात् तस्याश्च पर(। 13)स्परमुपमानोपमेयत्वलक्षणवत्वात् ॥ 16.

तस्य गोपेन्द्रराजोभूदनुजो यो मनीषिणाम् .(। 14)
गोपेन्द्रराजस्मृतिकृद्गोमण्डल[धृतेरभूत्] ॥

गोपेन्द्रराजाख्यस्तस्यानुजोभूत् यो गोमण्डल(। 15)स्य भूवलयस्य धेनुवर्गस्य रश्मिचक्रस्य वा धृतेर्धारणाद्गोपेन्द्र[स्य कृष्णस्य] राज्ञश्चन्द्रस्य च स्मा(। 16)रयिताभूत् ॥ श्लेषेण स्मरणम् ॥ गोधारणेन कृष्णेन्दुसमस्य राज्ञोनुभवात्कृष्णचन्द्र(।.17)स्मरणम् ॥ 17.

ततो दुर्लभराजेन चन्द्रराजस्य सूनुना .
विनोदकेन गमिता वृद्धिं कीर्त्तिल(। 18)ता भुवि ॥

चन्द्रराजपुत्रेण दुर्लभराजेन विनोदकेन प्रजादुःखहारिणा कीर्त्तिरेव लता भुवि वर्धि(। 19)ता . उदकेन विना लतावर्धनात्प्रतीयमानविरोधः ॥ निरङ्गरूपकम् ॥ भिन्नयोस्समाना(। 20)धिकरण्येन निर्देशे रूपकसद्भावात् निरङ्गं कीर्त्तौ लतारोपस्यारोपान्तरनिरपेक्षत्वात् ॥(। 21) 18.

यस्य कैरविणी व्योम्नि पृथिव्यां तारकावली .
पाताले चन्द्रिका कीर्त्तिः कं न चक्रे सविस्मयम् ॥

---

1 Ms प्रा to यम् lc. under 19. 2 Ms. 'शाःशो'.

[आ](l.22*)काशे कुमुदिनी तथा भूमौ तारापङ्क्तिस्तथा पाताले ज्योत्स्ना यस्य कीर्तिस्सर्वजनं साश्चर्यमकरोत् ॥(l.1) निरङ्गं मालारूपकम्. एकस्मिन्विषयेनेकेषामारोप्यमाणत्वात् निरङ्गं चारोपान्तरनिरपेक्ष(l.2)-त्वात् ॥ 19.

अस्मिः स्नातोत्थितो यस्य गङ्गासागरसङ्गमे .
चिरं गौडरसास्वादशुद्धां ब्राह्मणतां ययौ ॥(l.3)

गंगासागरसङ्गमे पूर्वं स्नातोनन्तरमुत्थितो यस्यासिर्गौडानां जानपदविशेषाणां रसाया भूमेरा(l.4)स्वादे शुद्धां तत्र ब्राह्मणस्य भावं प्राप्तः. गौडरसो गुडसम्बन्धी रसश्च यद्वा शुद्धो प्रधानो ब्राह्मण इति(l.5). केवलं श्लिष्टं परम्परितम् ॥ खड्गे ब्राह्मणारोपस्यान्यारोपं गौडरसं प्रति सापेक्षत्वात् ॥(l.6) 20.

प्रजापतिपदब्रह्मा षाड्गुण्यपुरुषोत्तमः .
सुतो गोविन्दराजोस्य शक्तित्रयमहेश्वरः ॥

प्रजा(l.7)पतिपदं राज्यं सप्तमं च तत्र ब्रह्मा षड्गुणास्सन्धिविग्रहादयो ज्ञानादयश्च तेषु पुरुषोत्तमो वि(l.8)ष्णुः शक्तयः प्रभुत्वादय इच्छादयश्च तत्र महेश्वरः ॥ मालारूपकं तदेव ॥ ब्रह्म(l.9)शब्दादीनामारोपाणां प्रजापत्यादीनारोप्यान्प्रति सापेक्षत्वात्परम्परितम् ॥ 21.

नयन्म(l.10)न्मथमुल्लासमात्मभूतश्शिवस्य च .
द्वितीयश्चन्द्रराजोभूत्ततोरिध्वान्तचन्द्रमाः ॥

रूपयौवना(l.11)द्युल्लासात्काममुल्लासं प्रापयन्भक्तिभराच्छिवस्यात्मभूतश्शत्रुतिमिरेन्दुर्द्वितीयश्चन्द्रराजा(l.12)ख्यो राजाभूत् ॥ केवलमश्लिष्टं परम्परितम् ॥ चन्द्रारोपस्य ध्वान्तारोपे सापेक्षत्वात् ॥(l.13) 22.

---

1 Ms. स्नोतो°.  2 Ms. Sic. Is it शुद्धया ?  3 Ms. °राजस्य.
4 Ms. blank between °ना° and °रो°.  5 Ms. °पा°.

सर्वराजार्कजीमूतस्सर्वदिग्वल्लरीमधुः .
गोवाकस्तत्सुतस्सर्वद्वीपमण्डलयामिकः ॥(1.14)

सर्वे राजान एवार्कास्तेषां जीमूतः सर्वदिश एव वल्लर्यस्तासां मधुर्वसन्तः सर्वद्वीपा ए(1 15)व मण्डलं तत्र यामिकः ॥ मालारू[पकम्] ॥ एकस्मिन्ननेकेषामा[रोपाणामारो]प्यमाण(1.16)त्वान्माला[रूपकं परस्प]रसापेक्षारोपत्वात्परम्परितम् ॥ 23.

उपायवेदसर्वज्ञो गु(1 17)णषट्कर्मपारगः .
राजर्षिरेष मन्त्राङ्गशिखिपञ्चकमध्यभाक् ॥

उपायास्सामादय(1 18)स्त एव वेदास्तेषु सर्वज्ञः गुणास्सन्ध्यादय एव षट्कर्माण्यध्यापनादीनि तेषां पारगः म(1 19)न्त्राङ्गानि कर्मणामारम्भोपाय इत्यादीनि एव शिखिनोऽग्नयस्तेषां पञ्चकं तन्मध्यभाक् एष(1 20) राजर्षिरभूत् ॥ प्रकृतोपयोगि राजर्षेर्विशेषानुगुण्यात् ॥ 24.

प्रताप(1.21)तपनोपास्तिप्राप्तकीर्तिकलागमः .
कृपाणकृष्णसारेण पूर्णो राजा रराज यः ॥

कृपा(1 22)[ण] एव कृष्णसारस्तेन पूर्णो यो राजा रराज कीदृक् प्रताप एव तपनस्सूर्यस्तस्योपास्ति(1.23**26)रुपासनं तया प्राप्तः कीर्तिकलानामागमो येन सः राजा चन्द्रश्च तपनसेवया प्राप्तकलाग(1 1)मो मृगाङ्कश्च भवति ॥ श्लिष्टमेकदेशविवर्ति . अर्थावसेयारोपत्वादेकदेशविवर्ति॥(1 2) श्लिष्टं तु राजशब्दस्योभयार्थवाचित्वात् ॥ 25.

मलस्य मानससरो विकारस्य पयोर्णवः .
अच्या(1 3)सेर्गगनं यस्य यशः कैर्नाम लङ्घ्यते ॥

मलस्य मालिन्यस्य मानससरः यद्यशो नि(1 4)र्मलमित्यर्थः तथा

1 Ms. °पमा° 2 Ms. °पैलि°. 3 Ms °प°कृ° 4 Ms. °शरि°.
5 Ms तप°. 6 Ms has दृ. त्रि. on margin. 7 Ms. °पायनं.
8 Ms. °मर्का°. 9 Ms. त्रिविधास्य( i e. त्रिविधस्य) crossed before म°.

विकारस्य क्षीरसमुद्रः निर्विकारमित्यर्थः अव्याप्तेर्गगनं व्यापकमित्यर्थः य(1.5)स्य यशः कैर्लंघ्यते ॥ आरोप्यमाणानां मानसादीनामलंघ्यत्वात् कैर्लंघ्यते इत्युक्तिसंगतिः ॥(1.6) वैधर्म्येण निरंङ्गं मालारूपकम् ॥ मलादीन्प्रति मानसादीनां प्रतिकूलत्वाद्वैधर्म्यम् ॥(1.7) 26.

अयशोमेघशरदा दुरितध्वान्तराकया .
यस्य श्रिया प्रमादाहिहेमन्तनिशया जितम् ॥

यस्य श्रि(1.8)या जितमिति भावे क्तः . अयश एव मेघस्तस्य शरदा तथा पापान्धकारपौर्णमास्या तथा प्रमाद(1.9)सर्पस्य हेमन्तरात्र्या. शीतकाले सर्पाणां विलप्रवेशेनादर्शनाद्धेमन्तनिशारूपकम् ॥(1.10) परम्परितं तदेव मेघादीन्प्रति शरदादीनां प्रातिकूल्यात् ॥ 27.

समुद्राः स्थिरलावण्याः(1.11) परकर्णभिदोऽर्जुनाः .
यशसां राशयो यस्य दिवि वर्द्धपदश्रवाः ॥

स्थिरं लावण्यं लालित्यं च(1.12) येषां सम्यगुच्चैः रान्तीति च परेषां शत्रूणां कर्णं श्रवणं परं शत्रुं राधेयं च भिन्दन्ति अर्जुनाः(1.13) श्वेताः पाण्डवविशेषाश्च दिवि व्योम्नि च कृतस्थितयोश्रवा दृढास्ताराविशेषाश्च. अर्जुनाः श्रवा इ(1.14)ति बहुवचनं विषयाणां प्रत्येकमारोपात् ॥ आविष्टलिङ्गं रूपकम् ॥ 28.

पुण्डरीकं विरि(1.15)ञ्चस्य श्वेतद्वीपं [मुर]द्विपः .
चन्द्रापी[डस्य कैलासं य]श्शुद्धमवहन्मनः ॥

ब्रह्मादीनां पद्मादि य(1.16)श्चित्तमधारयत् तत्र तेषां नित्यनिवासात् ॥ परिणामः ॥ 29.

---

1 Ms. निरंक्तं. 2 Ms. मति°. 3 Ms. °धम्यम्. 4 Ms. प्रसा°.
5 Ms. बन्ध°. 6 Ms. °श्रुवा. 7 Ms. °नाश्र°. 8 Ms. °कवि°.

तेजोबलाद्द[ादशभिः सूर्यव]न्महदा(। 17)यिभिः ।
भूपैरभ्यर्थ्यमानत्वे स्वसारं यः कलावतीम् ॥ 30.

चन्द्रमूर्त्तिभ्रमकरीं मुखलक्ष्म्येव संज्ञया ।(। 18)
कान्यकुब्जमहेशाय सरस्वानिव दत्तवान् ॥

तेजस्वित्वात्सूर्यसमैर्द्वादशभिर्भूपालैर्याच्य(। 19)मानत्वेपि कलावतीं कलावतीनामानं चतुष्षष्टिकलासहितां च स्वसारं यः कान्यकुब्जेन्द्रा(। 20)य दत्तवान् मुखकान्त्या कलावतीति सञ्ज्ञया च चन्द्रभ्रान्तिकरीम् ॥ भ्रान्तिमाम् ॥ क(। 21)लावतीति वचनेन भ्रान्तिजननात् ॥ 31.

जितैः प्रदत्तसर्वस्वस्वसे द्वादशभिर्नृपैः ।
यमो(। 22*) धनपतिर्वायं संदेहमिति यो ददौ ॥

युद्धे जितै राजभिर्हेतुभिः स्वस्रे प्रदत्तं सर्वस्वं येन स यो राजा(। 1) किं यमः किं वा वैश्रवण इति संदेहं दत्तवान् ॥ राज्ञां पीडनाद्यमः अतिदानाद्धनदः ॥ शुद्धस(। 2)न्देह. ॥ सन्देहे एव पर्यवसानात् ॥ 32.

नन्दनश्चन्दनस्तस्य यस्य नामन्युदीरिते ।
जनस्सफ(। 3)ल इत्युक्तिशेषाद्वृत्तभ्रमं जहौ ॥

चन्दन इति यस्य नामन्युक्ते सति तरुसन्देहं प्राप्नुवंल्लोकः(। 4) तत्सफल इत्युक्तिशेषाद्वृत्तभ्रममत्यजत्. चन्दनवृक्षस्य फलानामनुत्पत्तेः ॥ निश्चया(। 5)न्तः ॥ प्रथमं संशये सति निश्चये संपर्यवसानात् ॥ 33.

फलदश्चन्दनो दृष्टो भोगिनो यमु(। 6)पासते ।
सत्कलास्ते च तेषां च विपदं वदनं सदा ॥

चन्दन इत्युक्ते संशयः फलद इत्युक्ते निश्च(। 7)यः चन्दनस्य फलदत्वाभावात् भोगिनः सुखिनश्च यं सेवन्ते इति सन्देहः ते च भोगिनः सत्कलाः

1 Ms रू; or भूपै ? 2 Ms ष्रिक. 3 Ms वी written above श्वा. 4 Ms रघो. 5 Ms जिश्च. 6 Ms यसं.

विधया···(l.8)···श्रुतयः सहृदयाश्चेति निश्चयः तेषां भोगिनां मुखं विषदं प्रसन्नं विषोद्गारकं चेति सन्देहः ॥(l.9) निश्चयगर्भः ॥ प्रथमं सन्देहः मध्ये निश्चयः पश्चात्सन्देहः ॥ 34.

इत्यादि वर्णनं यस्य(l.10) मिलत्संदेहनिश्चयम् .
न वृक्षः कल्पवृक्षोयमित्युक्तावेति सङ्गतिम् ॥

संशयनिश्चयसंकी(l.11)र्णं यस्यैवं वर्णनं सङ्गतिमेति सङ्गच्छते . कदा अयं राजा वृक्षो न भवति किं तर्हि कल्पवृक्षो भव(l.12)तीत्युक्तौ सत्याम् . कल्पवृक्षे पूर्वोक्तस्य सफलत्वादेर्विशेषणजातस्य संभवात् ॥ नि(l.13)श्चयान्तस्सन्देहः अन्तनिश्चयस्य लाभात् ॥ 35.

बभार न स राजत्वं राजराजत्वमेव तत् .(l.14)
अन्यथा निधयः सर्वे कथमायत्ततां ययुः ॥

इतरराजवत्स राजा राजत्वं नावहत्किन्तु तत्त(l.15)स्य राजत्वं राजराजत्वमेव भवति . राज्ञां राजा राजराजः वैश्रवणश्च . अन्यथा यदि स राज(l.16)राजो न [स्यात्तर्हि कथं सर्वे निध]यस्तस्यायत्ततां जग्मुः [राजरा]जस्यैव निधि[पतित्वा]त् ॥(l.17) प्रथमापह्नुतिः ॥ विषयस्य निषेधेन्यस्य विधानात् निषेधपूर्वमारोपात् ॥ 36.

रुद्राणी(l.18) तद्वधूर्दीपसहस्रं तमसो भिदे .
न पुष्करतटे लिङ्गसहस्रं तददीदिपत् ॥

रुद्राणी नाम(l.19) तद्वधूः पुष्करतटे तमोहरणार्थं तद्दीपसहस्रमज्वलयत् न पुनस्तल्लिङ्गसहस्रमज्वलयत् ॥(l.20) द्वितीयापह्नुतिः ॥ आरोपपूर्वकं निषेधस्य सद्भावात् ॥ 37.

---

1 Ms. ···श्रुतयः lc. on margin.  2 Ms. Sic., i.e., विशदं.  3 Ms. °यास्त°.
4 Ms. °दधु°.  5 Ms. नामा. See. p. 108, l.6.  6 Ms. °दधुः.

योगिन्यात्मप्रभाख्यासावपि(।21)माद्यष्टकच्छलात् .
अपश्यत्फलितां स्थाणावहिंसाद्यष्टपुष्पिकाम् ॥

आत्मप्रभा नाम सा(।22) योगिनी स्थाणौ परमेश्वरविषयामहिंसादिमेवाष्टपुष्पीं फलितामद्राक्षीत् कस्माद(।23)[हिंसा]दि यदष्टकं तद्रूपात् ॥ तृतीयापह्नुति॰॥ असत्यत्वप्रतिपादकेन च्छलश(।24॰॰27)ब्देन निर्देशात्॥ 38.

रुद्राणीति पुरंध्रीभिर्योगिनीति च योगिभिः .
आत्मप्रभेति सा ज्ञाता विशन्त्यर्कस्य(।1) मण्डलम् ॥

पुरन्ध्रीप्रभृतिभिरसा रुद्राण्यादित्वेनोल्लिखिता ॥ उल्लेखः ॥ एकस्या अनेकधा क(।2)ल्पनात् ॥ 39.

सूनुर्वाक्पतिराजोस्य प्रसाद इव मूर्त्तिमान् .
हिताय सर्वलोकानामुदपद्यत शा(।3)म्भवः ॥

लोकानां हितार्थं मूर्तो हरप्रसाद इव विग्रहराजोस्य पुत्रो जातः ॥ गुणोत्प्रेक्षा ॥(।4) प्रसादाख्यो गुणो विषयित्वेन सम्भावितः ॥ 40.

स भुजाभ्यां जयान्प्रापदष्टाशीत्यधिकं श(।5)तम् .
धुद्धया निर्मलया कालं कामं च मनसाजयत् ॥

स जयानष्टाशीत्यधिकं शतं भुजाभ्यां(।6) प्रापत् . स शुद्धया धुद्धया कालं निर्मलेन च मनसा काममजयत् इति नवत्यधिकं शतं प्राप्तम् ॥(।7) 41.

गणनां सूचयन्तीव जयानामिति यत्र ताः .
धामत्रयीकला वक्त्रपंचके पंचधा स्थिताः .

यत्र(।8) वर्तमानानां जयानां नवत्यधिकं जयानां शतमिति संख्यां पंचवक्त्रस्येश्वरस्य मुखपञ्चके(।9) स्थिता धामत्रयीकलास्सूचयन्ति .

1 Ms. has १ सि. vertically on margin. 2 Ms. °दया. 3 Ms. धामयी°.

चन्द्रकलाष्पोडश सूर्यकला द्वादश वह्निकला दशेति(1.10)प्रतिवक्त्रमष्टात्रिंशद्भवन्ति अष्टात्रिंशत्संख्यास्ता धामत्रयीकलाः पंचमुखस्येश्वरस्य प्रतिमु(1.11)खं वर्तमानत्वात्पञ्चभिर्गुणिता भवन्तीति नवत्यधिकं शतं भवन्तीति क्रियोत्प्रेक्षेयम् सूचनाक्रि(1.12)यायास्संभावनात् ॥ 42.

तं प्रासादमसौ चक्रे पुष्करे व्योमवाससः ।
भक्त्या त्यक्तोत्तरासंगः कैला(1.13)स इव भाति यः ॥

असौ राजा पुष्करतीर्थे हरस्य तं प्रासादं चक्रे यो भक्त्या त्यक्तोत्तरासंगः कैला(1.14)स इव भाति । त्यक्तोत्तरादिक्संगश्च ॥ द्रव्योत्प्रेक्षा ॥ कैलासस्य द्रव्यत्वात् ॥ 43.

धर्मस्येव(1.15) नवः [सर्गो] स्थिति—⏑——⏑— ।
सिंहराज[ः सुतस्त?]स्य संहार इव मान्मथः ॥

यो धर्मस्येव(1.16) सर्ग इत्याद्यन्वयो योज्यः । लावण्यातिशयेन राजराजिकावाथि(?)···[सं]हारो[त्प्रे]क्षणम् ॥(1.17) सिद्धात्मिकोत्प्रेक्षा ॥ सर्गादयो घञन्ताः तेषां कृदभिहितो भावो द्रव्यं·············[द्र]व्यवद्भा-(1.18)वेन सिद्धत्वात् ॥ 44.

पुष्करे पुष्कलसुधं प्रासादं सोपि निर्ममे ।
श्वेतो गुण इवोपास्ते यो दे(1.19)वं शशिशेखरम् ॥

श्वेतो गुण इव यो हरं सेवते तं प्रासादं सुधासितं स पुष्करे कृतवान्॥ (1.20) उपमालङ्कारसङ्करोत्प्रेक्षा ॥ श्वेतगुणस्य साधारणत्वेनोपमा भवति संभावनायां तू(1.21)त्प्रेक्षा ॥ 45.

सिंहराजं तमालोक्य सिंहराजमिवापरम् ।
धर्मस्य त्रिपदीच्छेदी ननाम(1.22) कलिकुञ्जरः ॥

---

1 Ms. चन्द्°. 2 Ms. नश्म्य°. 3 Ms. °वासदः. 4 Ms. नत्र°.
5 Ms. °शयन. 6 Ms. °वं. 7 Ms. °व्य. 8 Sic. Read मध. 9 Ms. °जत°.

अपरं लोकोत्तरं सिंहमिव यं दृष्ट्वा सिंहराजाख्यं धर्मस्य पादत्रयाप-(1.23*)हारी कलिहस्ती नष्टः त्रिपदी गतिविशेषः तच्छेदी च हस्ती सिंहं दृष्ट्वा नश्यति ॥ जात्युत्प्रेक्षा ॥(11)सिंहो जातिः ॥ 46.

सूनुर्विग्रहराजोस्य सापराधानपि द्विपः .
दुर्बला इत्यनुध्यायन्नचत्रि(12)य इवाभवत् ॥

अमी दुर्बला भवन्तीति कृतापराधानपि शत्रूंश्चिन्तयन्नक्षत्रिय इवासीत्(13) क्षत्रियकार्यस्य मारणस्याकरणात् ॥ जातेरभावोत्प्रेक्षा ॥ अक्षत्रिय इति जात्यभा(14)वः ॥ 47.

अनीलाश्वमिवादित्यं कुर्वद्भिर्हयरेणुभिः .
लेभे खुररजोघोरान्धकार इति(1.5) नाम यः ॥

न नीला अश्वा यस्य तमिवादित्यं कुर्वतीभिर्वाजिधूलिभिर्हेतुभिः खुर-रजोघो(16)रान्धकार इति यो नाम लब्धवान्. अर्थादश्वानां खुररजसा घोरोन्धकारो यस्मादिति विग्रहः ॥(1.7) गुणस्य ॥ गुणस्य नीलत्वस्याभावोत्प्रेक्षणम् ॥ 48.

अतिष्ठन्तमिवात्मानं मत्वा स्वखुरधूलिभिः .(18)
वभ्रमुर्वाजिनो यस्य संकटास्वपि वीथिषु ॥

स्वखुररजोभिर्वीथीनामात्मानमवटरूपेणातिष्ठन्तमिव(1.9) मत्वा यद्-श्वास्संकटमार्गेष्वप्यभ्रमन् . रजसावटानां पिहितत्वात्तेष्वपि वाजिनो बभ्रमुरित्य(1.10)र्थः ॥ क्रियायाः ॥ स्थितिक्रियाया अभावोत्प्रेक्षणम् ॥ 49.

गृह्णद्भिः परया भक्त्या वा(1.11)णलिङ्गपरम्पराः .
अनर्मदेव यत्सैन्यैर्निरमीयत नर्मदा ॥

---

1 Ms सिह°. 2 Ms इव 3 Add अभावोत्प्रेक्षा (एवमग्रेपि) 4 Ms. °तिष्ट°.
5 Ms. °श्मानंमति°, °वटरूपेण° lc under 18 (lc. mark after °न )

भक्त्यतिशयात्पूजार्थं बाण(1.12)लिङ्गानि गृहद्भिर्यत्सैन्यैर्नर्मदा अनर्मदेव निर्मिता. नर्मदायास्तदा बाणलिङ्गाभावात् ॥(1.13) द्रव्य[स्य] ॥ [अनर्मदे]ति द्रव्यस्याभावोत्प्रेक्ष[णम्] ॥ 50.

त्यक्तं तपस्विना [स्वच्छं] यशोंशुक(1.14)मितीव यः.
गुर्जरं मूलराजाख्यं कन्थादुर्गमवीविशत् ॥

तपस्विना वराकेण तपोधने(1.15)न च स्वच्छं यशोंशुकमनेन त्यक्तमितीव मूलराजनामानं गुर्जरं कन्थाख्यं दुर्गं चीरं च(1.16) स प्रावेशयत्. तपस्वी चानुकंप्यार्थ इति कोशः. कन्था च दुर्गं परुषत्वात् ॥ श्लेषोत्थी ॥(1.17) 51.

सूर्यवंशप्रसूतस्य चन्द्रमण्डलनिर्गता.
तस्य रेवामयी वाहैः कीर्तिर्मलिनिताभवत् ॥(1.18)

सूर्यवंश्यस्य तस्य वाजिभिश्चन्द्रमण्डलान्निर्गता रेवामयी कीर्तिर्मलिनीकृता ॥(1.19) [साप]ह्नवा ॥ रेवामयीति मयटः प्रयोगात् ॥ 52.

व्यधादाशापुरीदेव्या भृगुकच्छे स(1.20**28) धाम तत्.
यद्रेवास्पृष्टसोपानं चन्द्रश्चुम्बति मूर्धनि ॥

आशापुर्याख्याया देव्याः प्रासादमत्र(1.1)टो(?)करोत्. यद्रेवया स्पृष्टसोपानं चन्द्रशिरसि चुम्बति. रेवायाश्चन्द्रप्रभवत्वाच्चन्द्रेण चुम्बनो(1.2)क्तिः ॥ प्रतीयमानोत्प्रेक्षा ॥ अत्र वाक्यार्थप्रतीतिसमय एव पदार्थसमन्वयप(1.3)र्यालोचनया चुम्बनस्य तात्त्विकत्वाभावावगमादार्थसंभावनात्मक इवार्थ इति प्रतीय(1.4)मानोत्प्रेक्षा ॥ 53.

तस्य दुर्लभराजोभूदनुजो माधवानुगः.
नारीणां सततं येन हृदये(1.5)मदनायितम् ॥

---

1 Ms. °धने न. 2 Ms. °पोर्थी. 3 Ms. चन्द°. 4 Ms. has १. ३२ on margin. 5 Ms. °स्पष्ट°. 6 Sic- Is it °मसावकरोत् ? or °दं स नृपोकरोत् ?

माधवो मन्त्रिविशेषो वसन्तश्च सोनुगो यस्य स दुर्लभराजोस्यानुजोभूत् (1 6) येन नारीणां चेतसि न मदनायितं कात्वा मदनायितमेव व्यमूवेत्यर्थः . मदस्य नायितं नीय(1 7)मानस्य प्रयोजनम्. णीञो णिजन्तान्नपुंसके भावे क्तः . नारीणां स्त्रीणां चेतसि मदनायि(1 8)तं कामवदाचरितम्. कामश्च वसन्तानुगो भवति ॥ 54.

चन्द्रोदयन्ति पूर्वाद्रौ मलये चन्दन(1 9)न्ति च .
मन्दरे चीरपूरन्ति तुषारन्ति हिमालये ॥

उपमोपक्रमोत्प्रेक्षाद्वयम् ॥ 55.

यशांसि(1 10) शीतलीकर्तुमिच्छयेव दिगङ्गनाः .
यस्य गोविन्दराजाख्यस्स तस्मादुदपद्यत ॥

हे(1.11)तूत्प्रेक्षा ॥ इच्छयेवेति हेतुः ॥ यस्य यशांसि कर्तृणि पूर्वशैलादिषु चन्द्रोदयादिवदाचरन्ति. अत्र(1 12) हेतूत्प्रेक्षा. दिगङ्गनाश्शीतलीकर्तुमिच्छयेव ॥ उपमोपक्रमोत्प्रेक्षा . सर्वप्रातिपदिके(1.13)भ्यः किविंत्येक इत्युपमानात्किब्विधान ················ मात्रतीतिपर्यवसाने तूपमानस्य प्र(1.14)कृते संभवौचित्यात्संभावनोत्थाने उत्प्रेक्षा ॥ स गोविन्दराजाख्यस्तस्माज्जातः ॥ 56.

यस्य(1 15) वैरिघरट्टत्वं गमितस्य कवीश्वरैः .
वीर्यशाल्यनुसृत्यर्थमिवाभ्राम्यद्यशो जगत् ॥

कवीन्द्रैः(1 16) शत्रुषु घरट्टत्वेन वर्ण्यमानस्य यस्य यशो जगदभ्राम्यदत्र फलमुत्प्रेक्ष्यते वीर्येण शालन्ते(1.17) ये ते वीर्यशालिनो वीर्ययुक्तादशालयश्च तेषामनुसरणार्थम् ॥ फलोत्प्रेक्षा ॥ अनु(1.18)सरणं फलम् ॥ 57.

1 Ms णि° Dhatupatha, Bhū-adi, 926 2 Panini, 3 3 114. 3 i e. 54 and 55 Comm. of 55 with 56 4 Ms °कर्तु°. 5 Ms. °पश्य°. 6 cf. Mahabhashya on Panini, 3. 1. 11. Kashika quotes it as a Vartika 7 Thus Comm Ms. reads °दान्त°

तस्माद्वाक्पतिराजेन सम्भूतमवनीभुजा.
कलिः कृतीकृतो येन भू[मिश्च त्रिदि](I.19)वीकृता ॥

वाक्पतिराजाख्येन राज्ञा तस्मात्सम्भूतम्. भावे क्तः. येन कलिः कृतयुगी[कृतः पाद](I.20ʳ)चतुष्टयेन कलावपि धर्मसेवनात्. अतो भूमिश्च स्वर्गस्सम्पादितः ॥ अतिशयोक्तिः ॥ क(I.1)लिकृतयोर्भेदेप्यभेदोपनिबन्धनात्॥ एवं भूमित्रिदिवयोर्ज्ञेयम् ॥ 58.

अम्बाप्रसादमा(I.2)घाटपतिं यस्सेनयान्वितम्.
व्यसृजद्यशसः पश्चात्पार्श्वं दक्षिणदिक्पतेः ॥

आघाट(I.3)स्य ह्याघौनामनगरस्य पतिं स्वामिनमम्बाप्रसादनामानं ससैन्यं यमस्य समीपं यश(I.4)सः पश्चादनयत्. पूर्वमम्बाप्रसादो दक्षिणाशापतिनिकटं प्रापितः पश्चात्त्वं यशः(I.5) इति[1] कार्यकारणयोः पौर्वापर्यरूपकालविध्वंसरूपः कालव्यत्यासः ॥(I.6) 59.

भिन्नमम्बाप्रसादस्य येन च्छुरिकया मुखम्.
प्रतापजीविकासृग्भिस्समयेव व्यसु(I.7)च्यत ॥

येन कर्तृभूतेन च्छुरिकया करणभूतया भिन्नमम्बाप्रसादस्य मुखं कर्मभूतं(I.8) प्रतापेन जीवितेनासृजा च समकालं परित्यक्तम् ॥ अत्र कार्यकारणयोर्भिन्नकालयोस्स(I.9)मकालत्वम् ॥ 60.

गोत्रभिद्भिरिभिर्वैरिस्त्रीभिर्दहन इत्यपि.
मृत्युर्वैरिभटैर्वैरिपत्तनैः कर्बुरे(I.10)श्वरः ॥ 61.

प्रचेता इति नीतिज्ञैस्त्राणकामैस्सदागतिः.
धनदोऽर्थिभिरीशश्च बुधा यः प्रत्यपद्य(I.11)त ॥

---

1 Ms. कालव्यत्यासः crossed after °ति.

वैरिभिर्यो गोत्रभित्कुलहन्ता वश्री चावसितः . वैरिस्त्रीभिर्दहनो दहतीति दहनः(l 12) तासां हृतान्भर्तॄननुसरन्तीनां दाहहेतुत्वात् दहनोग्निश्च . मृत्युर्यम कर्बुरेश्वरो नैरृतः शू(l 13)न्यीकरणात् . प्रचेता प्रकृष्टचेता वरुणश्च . सती आगतिर्यस्य पवनश्च . धनं ददाति वैश्रवण(l 14)श्च ई[शः ईश्वर ] पूर्वोत्तरदिक्पतिश्च ॥ भेदस्योद्भेदरूपातिशयोक्ति. ॥ 62.

इन्द्रनीलश(l 15)लाकाया धत्ते स्फटिकपीठताम् .
या मूर्तिश्शाम्भवी [पूर्णा] नार्जपीत्सापि तद्यशः ॥

इन्द्रनीलश(l 16)लाकेवेन्द्रनीलशलाकेत्युपचारात्कलङ्क तस्याः स्फटिकपीठतां या शाम्भवी मूर्त्ति.(l 17) धत्ते सापि मूर्त्तिः पूर्णचन्द्रो यद्यशो नार्जेपीदतुलयदित्यर्थ. ॥ सम्बन्धे [असम्बन्ध]रूपातिश(l.18)योक्तिः ॥ 63.

अद्यापि यो न गतवान्परलोकं यतो भुवा .
विस्मृतान्यमहीपालमालया हृदि(l 19) धार्यते ॥

योद्यापि परलोकं न गतः यतोन्यान्राज्ञो विस्मरन्त्या भुवा लोकेन स्मर्यते तेभ्योस्याधि(l 20)कगुणत्वादिति भावः ॥ सम्बन्धे असम्बन्धः ॥ परलोकगमनसम्बन्धेप्यसम्बन्ध. ॥ 64.

वीर्य(l 21)रामस्सुतस्तस्य वीर्येण स्यात्स्मरोपमः .
यदि प्रसन्नया दृष्ट्या न दृश्येत पिनाकिना ॥

तस्य सु(l 22--29)तः तस्य पुत्रो वीर्यरामनामा राजा वीर्येण शक्त्या स्मरोपमस्स्याद्यदीश्वरेण प्रसन्नया दृष्ट्या न वीक्ष्येत ॥ अत्र(l 1) स्मरसादृश्यसम्बन्धेपि पिनाकिप्रसन्नदृष्टिविषयत्वादसम्बन्धः ॥ अतिशयोक्तयः ॥ 65.

अद्वि(l 2)तीयो रणाल्लब्धशुद्धिमाब्रह्मणोचितः .
परित्यक्तो महायोधैस्सहायत्वे स्थितैरपि ॥ 66.

1 Ms. उ. 2 Ms इन्द 3 Ms. स्बन्ध 4 Ms अमु 5 Ms has पृ. 34 on margin 6 Ms सुतस्य 7 Ms. प्रसन्न le. under l.1.

अगम्यो यो नरे(l.3)न्द्राणां सुधादीधितिसुन्दरः .
जघ्ने यशश्चयो यश्च भोजेनावन्तिभूभुजा ॥ 67.

तस्य चामुण्डराजेन क(l.4)निष्ठेन विनिर्ममे .
विष्णोर्नरपुरे धाम विष्णुलोके तथात्मनः ॥

अद्वितीयोऽप्रतिमल्ल एकाकी(l.5) च सङ्ग्रामात्प्राप्तरशुद्धो रद्वयस्सहायैरपि योधैस्त्यक्तः राज्ञामगम्यश्चन्द्रमनोहरो यशश्चयो यश्चोज्ज(l.6)यिनीराजेन हतस्तस्य कनिष्ठेन भ्रात्रा चामुण्डराजेन नरपुरे विष्णोः प्रासादो निर्मितः आत्मनः(l.7) च धाम स्थानं विष्णुलोके निर्मितम् ॥ अत्र प्रस्तुतयोर्यस्य यशसश्चाद्वितीयादिभिर्गुणैरभि(l.8)संवन्धः स च केवलेन भवतीति हननक्रियया सह निर्दिष्टः इति गुणरूपधर्माभिसंवन्धे तु(l.9)ल्ययोगिता . तस्येत्यत्र निर्माणक्रिययाभिसंवन्धः ॥ 68.

अभूद्दुर्लभराजोऽस्माद्यदीयैः प्रतियो(l.10)गिभिः .
चराचराणां लुठितं पादान्ते भूभृतां भयात् ॥

यस्य शत्रुभिश्चराचराणां भूभृतां राज्ञां(l.11) शैलानां च पादान्ते चरणान्ते प्रत्यन्तपर्वतान्ते च भयाल्लुठितं . भावे क्तः ॥ अत्र चराचरभू(l.12)भृतोऽप्रस्तुताः तेषां लुठनक्रिययाभिसंवन्धः ॥ 69.

मातङ्गसङ्गरे यस्मिन्वीरसिंहेस्त(l.13)मागते .
अपरागोऽनुतापश्च विधिना प्रापि कर्कशः ॥

म्लेच्छसंग्रामे यस्मिन्वीरसिंहे हते(l.14) विधिना निन्दा पश्चात्तापश्च प्राप्तो दुस्सहः . मातङ्गा हस्तिनश्च ॥ अपरागानुतापयोरप्रस्तु(l.15)तयोः कार्कश्यगुणाभिसंवन्धः ॥ 70.

एवं प्रस्तुताप्रस्तुतयोर्गुणक्रियाभिसंवन्धात्तुल्ययोगिता च(l.16)तुर्विधा ॥

---

1. Ms. °धार्थैरिति°. 2 Ms. °ती° lc. under l. 8.

तस्य विग्रहराजेन भोगीन्द्रेणानुजन्मना ।
शेषेण च महीभारं त्याजिताः पृथि(117)वीभृतः ॥

भोगिनां भोगभाजामहीनां चेन्द्रेण तस्य कनीयसा भ्रात्रा विग्रहराजेन शेषेण च(118) पृथिवीभृतो राजानश्शैलाश्च भूभारं त्याजिताः ॥ 71.

धृता शिरोभिश्शेषेण दंष्ट्रया क्रोडमूर्त्तिना ।(119)
पृष्ठेन कमठेन्द्रेण स्कन्धैर्दिग्गजमालया ॥ 72.

पादैः पर्वतचक्रेण भुजाभ्यां येन दोष्मता ।
वसुन्धरा(120) ततो गाढमाश्लेषसुखमन्वभूत् ॥

शेषादिभिर्मस्तकादिभिरूढा ततो येन भुजाभ्याम् [ढा ध](121*)त्तालिङ्गनसुखं प्रापन् ॥ धृतेत्यादि दीपकम् ॥ 73.

हिमान्यां हिमशैलस्य कैलासस्य(1) तटत्विषां ।
विबभौ गङ्गया मेरोः कीर्त्त्या भूपस्य भूभृतः ॥

विबभाविति मध्यस्थेन क्रियापदेन(2) सर्ववाक्यानां संबन्धः ॥ 74.

दीपकत्रयम् ॥

चकार दुर्बलानां यः क्षमाभागस्वि(3)नामपि ।
जह्रे निरपराधानामपि यश्च बलीयसाम् ॥

सापराधानामपि दुर्बलानां च(4)मां क्षान्तिमकरोत् निरपराधानामपि सबलानां क्षमां भूमिमहरत् ॥ कारकदीपकम् ॥(5) क्षमेति कर्मकारकस्य साधारणत्वात्कर्मकारकम् ॥ 75.

मालवेनोदयादित्येनासादे(6)वाप्यतोन्नतिः ।
मन्दाकिनीह्रदादेव लेभे पूरणमब्धिना ॥

1 Ms. °मीहनां 2 Ms स्कन्दे°. 3 Ms °माना. 4 Ms °दिक्षा. 5 Ms. दुर्वं (!) 6 Sic

उदयादित्येन मालवदेशी(1.7)येनास्मादेवोन्नतिरुदयः प्राप्ता . समुद्रेण गङ्गाह्रदादेव पूरणं प्राप्तम् ॥ 76.

सारङ्गाख्यं(1.8) तुरङ्गं स ददौ यस्मै मनोजवम् .
नह्युच्चैःश्रवसं क्षीरसिन्धोरन्यः प्रयच्छति ॥

मनोवज्जवो यस्य(1.9) तं सारङ्गनामानमश्वं स मालवाय ददौ क्षीरसमुद्रादन्य उच्चैःश्रवसं न ददाति ॥[2] 77.

जिगा(1.10)य गूर्जरं कर्णं तमश्वं प्राप्य मालवः .
लब्ध्वानूरुस्सूर्यरथं करोति व्योमलङ्घनम् ॥(1.11)

तमश्वं प्राप्य मालवः कर्णाख्यं गूर्जरमजयत् सूर्यरथं लब्ध्वानूरुराकाशलङ्घनं करो(1.12)ति ॥ 78.

पृथ्वीराजस्सुतस्तस्मात्ततो——⏑——रभूत् .
कुमारब्रह्मचारी हि कुमारो मद(1.13)[नद्विषः] ॥

[तस्मात्पृथ्वीरा]जाख्यः पुत्रो जातः कामवैरिणः कु[मारोपि] कुमारब्रह्मचा(1.14)री भवति ॥ 79.

रात्रौ रात्रौ चतुर्बाहुस्स एवादृश्यतानुगैः .
ऐरावणं विनान्यः कश्चतुर्दन्तो नि(1.15)शम्यते ॥

अनुगैः प्रतिनिशं स एव चतुर्बाहुर्दृष्टः . ऐरावणादन्यः कश्चतुर्दन्तश्शूयते ॥(1.16) दृष्टान्तः पूर्वत्र साधर्म्येणोत्तरत्र वैधर्म्येण ॥ 80.

पुष्करे ब्रह्मकोशास्तिचुलुक्यशत(1.17)सप्तकम् .
हत्वा ब्रह्मस्वकामानां कुलक्षयमुपादिशत् ॥

---

1 Ms. °सैत्र°.          2 Add प्रतिवस्तूपमे द्वे । पूर्वत्र साधर्म्येणापरत्र वैधर्म्येण ॥
3 Ms. °स्तश्री°.

ब्रह्मकोशस्य ब्रह्मस्वस्यास्ति(118)हरणं यस्मात्तच्चुलुक्यानां जनविशेषाणां शतसप्तकं हत्वा स राजा ब्रह्मस्वहरणाभि(1.19)लाषिणां कुलक्षयमुपादिशत्. ब्रह्मस्वहृत्कश्चिन्नासीदित्यर्थः ॥ 81.

अच्छिन्नं सोमना(120**:0)थाध्वन्यन्नसत्रं च कारयत् .
इदं मोक्षार्थिनां भोगमानुषङ्गिकमब्रवीत् ॥

सोमनाथतीर्थ(1 1)मार्गेनवरतमन्नसत्रं च कारयदिदंमन्नसत्रकरणं मोक्षकाङ्क्षिणामानुषङ्गिकं फलम(1 2)कथयन् ॥ अवश्यं मोक्षः प्राप्तव्यः प्रसङ्गादन्नमपि प्राप्तमित्यर्थ. ॥ 82.

तस्मादजयराजोभू(1 3)द्वदान्यो यद्वदान्यतः .
सर्वरत्नप्रदात्सिन्धोः कल्पवृक्षस्य जन्म तत् ॥

दातुस्तस्माद्दाताजयरा(1.4)जाख्यो जातो यत्तत्समस्तरत्नदातुस्समुद्रात्कल्पवृक्षस्य जन्म भवति ॥ 83.

श्लाघ्यसह्लण इत्यस्य(1 5) जप्यते नाम पार्थिवैः .
बीजाक्षरत्रयच्छायां धत्ते शक्तित्रयस्य यत् ॥

अस्य सह्लण इति(1 6) नाम राजभिर्जप्यते यत्तच्छक्तीनां त्रयस्य बीजाक्षरत्रयशोभां धत्ते तन्नामजपनाच्छक्तिप्राप्ति(1.7)र्भवतीत्यर्थः ॥ 84.

सौम्येन मालवपतिस्सुह्लणो येन दीप्तिमान् .
शमितोम्बुधरग्रस्तदवा(1 8)ग्निश्रियमानशे ॥

येन सौम्येन शमितो मालवेन्द्रस्सुह्लणो मेघशमितदवाग्निस्थितिं(1.9) प्रापन् ॥ 85.

1 Ms has १ ३५ on margin. 2 Read 'यन् 3 Read 'दाग्नि'.
4 Ms. 'दन्यो.'दन्य'. 5 Ms. 'दीप्ति' corrected to शमि'.

कीर्त्तिपुष्पविकासं यं रुद्धवान्कल्पशाखिनाम्.
मन्ये तमेव मोक्तुं यः(1.10) पुरन्दरपुरं ययौ ॥

स राजा कल्पवृक्षाणां यशःपुष्पविकासं यं रुद्धवांस्तमेव मोक्तुं(1.11) स स्वर्गं गत इति जाने. कल्पवृक्षेभ्योतिदातासीदित्यर्थः. अतः कल्पतरूणां यस्तेन कीर्त्ति(1.12)विकासो रुद्ध आसीत्तस्मिन्प्रमीते स उत्पन्नः ॥ 86.

पद्मसम्बन्धिनीं लक्ष्मीं रिपुरामामुखा(1.13)नि यत्.
अत्याजयदिति प्राप्ता गुणिभिश्श्रीर्न कैस्ततः ॥

स राजा वैरिस्त्रीमुखानि पद्म(1.14)शोभामत्याजयद्यदित्यतो गुणिभिर्गुणवद्भिः पद्मैश्च कैर्न श्रीः प्राप्ता ॥ निदर्शने द्वे ॥(1.15) सम्भवद्वस्तुसम्बन्धाऽसम्भवद्वस्तुसम्बन्धा च. अन्यत्रान्यसम्बन्धिनीं छायामन्यः कथं दधातीति(1.16) नास्ति वस्तुसम्बन्धः ॥ 87.

स दुर्वर्णमयैर्भूमिं रूपकैः पर्यपूपुरत्.
तां सुवर्णमयैस्तत्र क(1.17)विवर्गस्त्वपूरयत् ॥

दुर्वर्ण्यं रौप्यं दुष्टा वर्णाश्च तन्मयै रूपकैर्दीनारविशेषैर्नाटकैश्च(1.18) स भुवमपूरयत् सौवर्णैः सुवर्णमयैश्शोभनाक्षरमयैश्च कविवर्गस्तामपूरयत् ॥(1.19) 88.

कीर्त्तिं स वर्तमानानां भटैर्जह्रे जयप्रियैः.
अतीतानागतानां तु रूपकैरजयप्रियैः ॥ (1.20)

जयः प्रियो येषां तैर्भटैः करणभूतैर्वर्तमानानां कीर्त्तिमहरत् अजयस्य राज्ञः प्रियै रूपकैः(1.21*) दीनारविशेषैश्च भूतानां भाविनां च राज्ञां कीर्त्तिमहरत् ॥ 89.

सोमलेखा प्रियाप्यस्य प्रत्यहं रूप(1.1)कैर्नवैः.
कृतैरपि न संस्पर्शं कलङ्केन समासदत् ॥

1 Ms. श्च्या°. 2 Ms. दन्तौ°. 3 Ms. °कैप°. 4 Ms. राश्रे.

तस्य प्रिया सोमलेखाख्या राज्ञी चन्द्रले(1 2)खा च प्रत्यहं नवैः कृतै रूपकैर्दीनारविशेषैर्मृगैश्च हेतुभिः कलङ्केन पापेन लाञ्छनेन च स्पर्श(1 3) न प्रापत् ॥ व्यतिरेकभेद. ॥ उपमानादुपमेयस्याधिकगुणत्वेन न्यूनगुणत्वेन वा भा(1 4)नात् ॥ 90.

भाग्यैस्समं समुत्पन्नं प्रजाभिस्सह लालितम् ।
वर्धितं सुकृतैस्साकमर्णोराजमसूत सा ॥ (1.5)

भाग्यादिभिस्सह समुत्पन्नत्वादिलक्षणविशिष्टमर्णोराजं पुत्रं साजनयत्. भाग्यानां तदु(1 6)त्पत्तिकारणत्वे तदुत्पत्तेर्वा भाग्यकारणत्वे सहभावोपनिबन्धात्कार्यकारणविध्वंसरूपातिश(1.7)योक्तिसहिता सहोक्तिः॥91.

कीर्त्या विमलया साकं देवी सा भूपतेः प्रिया ।
प्रतापेन सहोग्रेण(1 8) प्रियः पुत्रश्च सोभवत् ॥

शुद्धया कीर्त्या साकं समं सा देवी राज्ञः प्रियाभूत्. एवमुत्तरार्द्धेपि योज्यम् ॥(1 9) सहोक्ती ॥ 92.

लक्ष्मीर्विनाभिमानेन कीर्त्तिर्दुर्यशसा विना ।
बभौ श्रीखण्डवल्लीव तस्य भोगभृता(1.10) विना ॥

निर्गर्वा श्रीर्निन्दारहिता च कीर्त्तिस्तस्य बभौ यथा सर्पत्यक्ता चन्दनलता ॥ 93.

कवित्वे(1 11)नेव पाण्डित्यं द्रविणेनेव यौवनम् ।
ननाश तद्रिपुवलं विना दीप्तेन तेजसा ॥

यथा क(1 12)वित्वेन विना पाण्डित्यं यथा च धनेन विना यौवनं तथा तेजसा विना तच्छत्रुवलं नष्टम् ॥(1 13) विनोक्ती ॥ 94.

1 Ms. मात्रा°. ■ Ms °पेय.

लोभप्रदोषमुक्तास्य कमला कमलिन्यभूत् ।
औदार्यातपहीनासीत्तस्य(l.14) श[त्यर्थि]नां तु सा ॥

लोभाख्येन प्रकृष्टेण दोषेण निशारम्भेण च मुक्ता तस्य श्रीः पद्मिन्या-(l.15)सीत् तस्य वैरिणां सा श्रीरौदार्यमेवातपस्तेन हीना पद्मिन्यासीत् ॥ गम्या चिनो(l.16)क्तिः ॥ मुक्तहीनादिपदैर्विनार्थस्य द्योतितत्वात् ॥ 95.

तापिताः प्राक्प्रतापेन विचारे(l.17)ण विशोभिताः ।
अनुरक्तास्ततः पश्चाद्यशसाच्छादिता दिशः ॥

पूर्वं प्रतापेन तापिताः(l.18) ततो विचारेण व्यवहारपरिच्छेदेन विशोभिताः अतोनुरक्ता दिशो यशसाच्छादिताः अ(l.19)ग्निना तापिताश्चिराकद्रुवादिना(?) शोभिताः गैरिकादिना रञ्जितास्सुवर्णविकृतयो वस्त्रा-(l.20)[च्छादिताः]·········रसव्यवहारप्रतीतिः ॥ 96.

विमुक्ता निखिलैर्दोषैर्निचिता निखिलैर्गुणैः ।(l.21**31[1])
शिवभक्तिरभूद्यस्य सदा हृदयहारिणी ॥

दोषैरवधानादिभिस्त्यक्ता गुणैर्युक्ता शिवभक्ति(l.1)र्यस्य मनोहरा सदाभूत् ॥ निर्दोषादिधर्मारोपात्साध्वीव्यवहारप्रतीतिः ॥ 97.

नयसिक्ता प्रतापे(l.2)न क्रमात्पल्लवितोद्गमा ।
विकसत्कान्तिपटला फलत्पुण्यपरम्परा ॥ 98.

दत्ताशीश्शमितक्लान्तिच्युतिप(l.3)थैस्सदाध्वगैः ।
लक्ष्मीर्यद्भुजमारूढा वृद्धिं शाखाशतैर्गता ॥

प्रथमं नयेन सिक्ता ततः(l.4) प्रतापेन पल्लववान्कृत उद्गमो यस्यास्सा

1 Ms. °यैत°. 2 Ms. °हैन. 3 Ms. अति°. 4 Ms. has प. on margin. 5 Read °रवधानादिभि°. 6 Ms. °श° corrected to °दा°.

विकसत्कीर्त्तिपटलं यस्यास्सा फलन्ती फलवदाच(l 5)रन्ती पुण्यपरम्परा यस्यास्सा शमितो. क्लान्तिक्षुत्पिपासा येषां तैरध्वगैः सन्मार्गगामिभिर्दत्ता-(l 6)शीर्यद्भुजार्जिता श्रीश्शाखानां प्रकाराणां शतैर्वृद्धिं गता ॥ सेकादिकार्यारोपात्पल्लवितत्वादि(l 7)धर्मारोपाच्चोभयारोपेण लक्ष्म्यां लताव्यवहार-प्रतीति. ॥ 99.

स्तनद्रथाङ्गमिथुना भ्रमद्भ्रमरमा(l 8)लिकाः .
श्रीमन्मुखाम्बुजा वापीर्यो ददौ सुरसद्मसु ॥

स्तनवदाचरन्ति कूजन्ति च रथाङ्गमि(l 9)थुनानि यासु ताः कचवदाचरन्त्य स्फुरन्त्यश्च भ्रमरमालिका यासु श्रीमन्ति मुखाम्बुजानि या-(l.10)सां ता वापीर्देवगृहेषु योदात् ॥ अत्रौपम्यस्य गर्भत्वम् ॥ 100.

चन्द्रचन्दनकर्पूरमुक्ताहा(l 11)रविरोधिनी .
सुदूरवर्त्तिनी यस्य कीर्तिः पाण्डुत्वमाययौ ॥

चन्द्रादीनां विरोधिनी न्यक्कुर्वती(l 12) सुदूरे वर्त्तमाना कीर्त्ति पाण्डुतां शुभ्रत्वमापन् ॥ अत्र विरहिणीव्यवहारप्रतीतिर्लौकिके(l 13) लौकिकव्यवहारसमारोपः ॥ 101.

मनोज्ञत्वेपि नाचुम्बि स्वमुखेन कदाचन .
स्वच्छन्दं तेन यत्की(l 14)[र्त्तिः] ——⏑——⏑— ॥

तेन राज्ञा [1]कीर्ति[र्मनो]ज्ञत्वेपि सति स्वमुखेन न कदाचित्स्पृष्टा तेन स्वैती(?)(l 15) 102.

[Lines 16 to end of page missing](*)

——⏑⏑——पुंरुपार्थ कृतार्थताम् ॥

1 Ms °पदर्त्ते written above °त्रुसुरै. 2 Ms °तत्तरा°. 3 Ms. °गैम°. 4 Ms. °श्रोम°. 5 Ms. स्पदा 6 Comm reads कचवत्° which agrees with the alamkāra of स्तनद्° etc On कचर see p 93 and notes 7 Ms. श्रीम°. 8 Ms ग्रहे°. 9 Ms °रुद्दनाद्यु°. 10 Ms कंति°. 11 So Ms Add लौकिके नायिकाव्यवहारप्रतीति 12 Restore—भवन्मुदितवेरेनैव भोगं करपल्लवस्य । इत्थं सज्जनयन् स्व य. पुर°.

करणानि कर्माणि संश्रयो यस्य तं भोगं बुद्धिवलेनैव भजन्द्रष्टा सर्वे-व्यव(1.1)हारसाक्षी संश्चेव स्वं पुरुपार्थं कृतार्थतामनयत् शत्रूञ्जितवानित्यर्थः . सांख्यदर्शनवादिना(1.2)मात्मा सप्तधा बुध्यहंकारतन्मात्रापञ्चकत्वेन प्र-कृतेर्जातं विकारमस्पृशन्मूलप्रकृतिसङ्गतां बु(1.3)द्धिं भासयंश्चिच्छायया स्फुरयन्बुद्धिमुखेनैव करणसंश्रयं चक्षुरादीन्द्रियाश्रयं भोगं भजन्बुद्धि(1.4)-मुखेनैव पुरुपार्थं पुरुपविवेकरूपं कृतार्थतां नयति ॥ नीतिशास्त्रीये वस्तुनि साङ्ख्यशास्त्रीयव्य(1.5)स्तुसमारोपः ॥ 103.

स्फुरत्प्रज्ञावलोत्साहसिध्युपायगुणोदया .
सर्वाङ्गसुन्दरी यस्य(1.6) नीतिर्वल्लभतां ययौ ॥

स्फुरन्तः प्रभावेवलोत्साहा येषु ते सिद्ध्युपायगुणोदया यस्यां सा. सि(1.7)द्धयो भूम्यादीनामुपायास्सामादयः उदया आत्मादीनाम् . तथा स-र्वाङ्गेषु स्वाम्यादिपु(1.8) सुन्दरी यस्य नीतिर्वल्लभतां श्रद्धेयत्वं ययौ . तन्नी-तिरन्येषां काङ्क्षणीयाभूदित्यर्थः ॥ स्फुर(1.9)द्भिः प्रज्ञावलोत्साहैस्सिद्धौ वशीकरणे उपायात्मकानां गुणानामुदयो यस्यां सा . प्रज्ञा(1.10)दिभि-र्भूर्वशीकृतेत्यर्थः ॥ अत्र नीतिशास्त्रप्रसिद्धे वस्तुनि नायिकाव्यवहार-प्रतीतिः ॥(1.11) 104.

भूसत्तायामुदात्तो यः परस्मै पदमग्रहीत् .
अनुदात्तो रिपुस्तस्य भूमावात्मनेपदी ॥(1.12)

भुवि सत्तायां प्रशस्तत्वे साम्राज्ये सति यः परस्मै परार्थं पदं त्राण-मग्रहीत् यत उदात्तः(1.13)··············र्थमेव पदीयं?(1.14) 105.

[Lines 15 to end of page missing](**32)

मन्त्र्यपेक्षा दैवनियोगज्ञस्य मित्रवलापेक्षा च नाभूत् ॥ यत्पदसंख्यकं

1 Ms. सदे°. 2 Ms. °रीदी°. 3 Text प्रज्ञा°. 4 Add नीतिशास्त्रीये वस्तुनि व्याकरणशास्त्रीयव्यवहारसमारोपः. 5 Ms. °वलपे°.

प्रमाणं जानाति वि[नियो](l 1)गं च वेत्ति स ईश्वरं सर्वज्ञं नापेक्षते ॥ लौकिके मीमांसाव्यवहारसमारोपः ॥ 106.

सपक्षे ददृशे नां[स्ते](l 2) विपक्षे यज्जडात्मनि .
तत्प्रतापाग्निमान्भूभृद्धेतौ धूमेन्त्रमायि यः ॥

जनेन सं पक्षे स्वाश्रिते वि[प](l 3)ये यद्ददृशे स्वपक्षस्योपकारं कुर्वन्यदृष्ट इत्यर्थः जडात्मनि विपक्षे शत्रौ यन्नास्ते अपकारप्रवृत्त(l 4) एवाभूदित्यर्थः तत्तस्माद्धेतावायुधे खड्गे सत्यां भूभृत्प्रतापाग्निमाननुमितः. धूमे इ(l 5)ति हेतोरारोप. कालत्वेन धूमानुकारात् स पक्षे महानसे दृष्टः विपक्षे जलादौ न दृष्ट.(l 6) ततो भूभृत्पर्वतो धूमे हेतौ कारणे लिङ्गे सत्यग्निमाननुमीयते ॥ लौकिके तर्कव्यवहार(l 7)समारोपः ॥ 107.

अहार्यलङ्घनैस्त्यक्तरसास्वादैस्सदूषणैः .
येन पीनसितावस्थां कीर्त्ति(l 8)रत्याजि वैरिणाम् ॥

येन राज्ञा शत्रूणां कीर्त्तिः [पीन]मितां चावस्थां [त्या]जिता[तीव्र] ल(l 9)घुर्मलिना च कीर्त्तिः कृनेत्यर्थः यत. अहार्याणां पर्वतानां [ल]ङ्घनैरारोहावरोहैस्त्यक्तो(l 10) रसाया भूमेरास्वादो यैः करणभूतैः सह दूषणेन दोषेण यानि तैः. अहार्यैरपरि(l 11)हार्यैश्च लङ्घनैर्भोजनविच्छेदादिभिः त्यक्तो रसा[नां मधु]रादीनामास्वादो येषु तथा(l 12) तच्छोभनभूषणं मरीचाद्वियेषु तैर्हेतुभिर्भिषजा परिमितौ(?) प्रतिश्यायवत्त्वं तस्या अव-(l.13)……जते. गतिर्बुद्धीति नियमात्कीर्तिशब्दस्य कर्मत्वम्. तस्य चात्याजीत्यत्र कर्मण्युत्पन्ने(l 14)………………… ॥ लौकिके आयुर्वेद(l.15)- 108.

[Lines 16 to the end of page missing](*)

---

1 Ms. 'गेन'. 2 Ms राजा crossed after स 3 Ms 'रकतु'. 4 Ms 'दिर्थ. 5 Ms. Sic Is it सति ? 6 Ms 'स्पतेनश्च crossed after '■'. 7 Ms. 'हेनेरा'. 8 Ms 'पनीमि'. 9 Ms 'वस्या 10 Ms Sic. Is it सद्भोजनदूषण ? 11 Sic Read पानसिता 12 Ms 'निरोर्षेनि Panini, I 4 52 13 Ms. 'न्वसनी'.

—— यशसि यं भूमिराश्लिष्टांजनि र⌣सः.
रजस्वलास्वभावोयं विधिनैवोपपादितः ॥

यस्य(1.1)·········निमज्ज्या(?)यमालिङ्ग्य भूमिः रत्नपूर्णतां(?) विधिनैवायं रजस्वलास्वभाव उपपादितः. र(1.2)जस्वला ऋतुमती सपांसुश्च ॥ 109.

लालनाताडनविदामनुरज्यन्ति योषितः.
अतो यशःप्रता(1.3)पाभ्यां भूमिस्तेन [वशी]कृता ॥

लालना प्रीतिस्तां ताडनं च ये विदन्ति तेषां स्त्रियोनुरज्यन्ति अतो (1.4)हेतोस्तेन यशःप्र[तापाभ्यां भू]मिर्वशीकृता ॥ समासोक्तयः ॥ 110.

बुद्धिमद्भिर्बु(1.5)द्धशास्त्रैस्सत्यवा[दिभि]—⌣—.
व्यायामिभिर्बलीयोभिस्सहायैर्यो विदिद्युते ॥

बुद्धिमत्त्वादि(1.6)विशिष्टैस्सहायैर्यो दीप्तः ॥ परिकरः ॥ विशेषणानां साभिप्रायत्वात् ॥ 111.

अहिद्वि(1.7)पा प्रसिद्धेन गोमण्डलधरेण च.
स्वैरावतारोचितेन हरिणा यस्समोभवत् ॥

अहिः कालिय(1.8)नागो वृत्रासुरश्च अहिर्भ्रातृव्यश्च तद्विषा गावो धेनवो नेत्रादि च गौर्भूमिश्च तन्मण्डलधरेण(1.9) स्वैरं स्वेच्छयावतारेषु मत्स्यादिरूपग्रहणेपूचितेन स्वश्चासावैरावत ऐरावणस्तेन रोचिते(1.10)न स्वात्मीया ऐरी इरायां भूमौ भवा भूमिविषया अवता रक्षकता तया रोचितो यो राजा ह(1.11)रिणा विष्णुना इन्द्रेण च समोभवत् ॥ विशेष्यस्य विशेषणानां च साम्याच्छ्लेषः ॥ अत्राच्यु(1.12)तेन्द्रयोरप्रस्तुतयोः श्लेषः ॥ 112.

1 Ms. °रास्रिष्ट्या°. 2 Is it रसः ? 3 Is it रसप्रज्ञेता ? 4 Ms. °विना°. 5 Ms. °तो अतो हे°. 6 Ms. °सत्या°. 7 Ms. °शेपया°. 8 Ms. °आतव्य°. 9 Read °स्तेनारो°.

यस्सदन्तांयुधकरान्परिहृर्तव्यपद्धतीन् ।
अत्यन्तगर्जनान्मत्ता(1.13)न्मातङ्गानजयद्रणे ॥

यो मातङ्गान्म्लेच्छांश्च युद्धेजयत् सदन्तानि शोभनधाराणि आयुधानि(1 14) ·· ·········वरेण च सहितान् तथा त्याज्यमार्गान् म्लेच्छानां दुराचारत्वात्(1 15)····· · ····म्लेच्छानां(1 16) 113.

[Lines 17 to end of page missing](** 33)

नत्वम् पदानां सुप्तिङन्तानां भङ्गेनांशांशिके·········भेदेन नीरसा रसवर्जिता. भिन्नस्वर उदा(1.1)त्तादिर्येषां तथा स्वापास्सुलभारशब्दा न सुलक्ष्यादयोर्था यैस्ते यस्य द्विपरशेपा इवासन् ॥(1 2) अत्र शत्रुशेपयोः प्रस्तुताप्रस्तुतयोरश्लेपः ॥ श्लेपत्रयम् ॥ 114.

अत्यन्तशुद्धपक्षा(1 3)णां स्वहंसानामिवान्तरम् ।
यत्पूर्वजन्मपुण्यानामज्ञासीत्केवलं विधिः ॥

यस्य पूर्वज(1 4)न्मनि पुण्यानामन्तरं विधिरेव ज्ञातवान् . अत्यन्तं शुद्धः पक्षःसिद्धान्तो येषाम् हंसपक्षे पक्षाः प(1 5)तत्राणि ॥ अत्र शुभवस्तुसम्पत्तिलक्षणे कार्यप्रस्तुततत्कारणपूर्वजन्मपुण्याभिधानाद(1.6)प्रस्तुतप्रशंसा ॥ 115.

अनादित्यमिव व्योम तामसा इव वासराः ।
अलोचनेवं जनता जज्ञे(1 7) यस्य प्रयाणके ॥

यस्य प्रयाणे सति आकाशादीनां सूर्यादिरहितत्वमिव जातम् ॥ अत्र से-(1.8)नारजोधर्षणेनप्रस्तुतेनादित्यत्वादिवत्कार्याभिधानेनाप्रस्तुतप्रशंसा ॥ 116.

रजन्यामपि प(1 9)द्मिन्यः कुमुदिन्यो दिनेपि यत् ।
नासुप्यन्यस्य साम्राज्ये जाड्यमेवात्र कारणम् ॥

---

1 Ms °दान्ता° 2 Ms °स्तिन°. 3 Ms °शांसि° 4 Ms °जुग्ये°. 5 Restore last 3 lines—पदभङ्गेन नीरसा । भिन्नस्वरा स्वापशब्दा · येषा इव यद्विपः ॥ 6 i e verses 112,113,114 7 If we exclude 112 where श्लेष is specially mentioned then one verse is missing between 113 and 114. 7 Ms. °नेत्र 8 Ms. °तस्कर°. 9 Ms. नेन. 10 Ms· °र्यं°.

रात्रावपि प(l.10)द्मिन्यस्तथा दिवाप्युत्पलिन्यो यत्र विकासितास्तत्र जाड्यमेव हेतुः ॥ तद्राज्ये जडा एव न विक(l.11)सिता इति सामान्ये प्रस्तुते तद्विशेषकुमुदिनीपद्मिन्यभिधानेनाप्रस्तुतप्रशंसा ॥(l.12) 117.

यद्वर्ध्यमानं स्वकुलजैः केषांचित्पुण्यकर्मणाम् .
कल्पान्तस्थायितामेति धनं स्थाने निवेशितम् ॥(l.13)

पूर्वपुरुषैर्वर्ध्यमानं स्थाने निवेशितं सत्कल्पान्तं तावत्स्थैर्यं केषांचिद्धा-
ग्यवतामेति ॥ अत्राज(l.14)[2]··············ते सामान्याभिधानेनाप्रस्तु-
तप्रशंसा···········(l.15)···········पृथिव्यामपि सं·········
·········(l.16) 118.

[Lines 17 to end of page missing](*)

र्जो नगरं कृतवान् येषु काव्येषु तन्नगरं न वर्णितं तानि काव्यानि धन्यानि न भवन्ति ॥ तान्यधन्यानीत्यत्र वै(l.1)धर्म्येणाप्रस्तुतप्रशंसा इदं काव्यं धन्यमिति प्रस्तुतार्थप्रतीतेः ॥ 119.

भवत्यजयमेरुत्वं सार्थं यस्य सु(l.2)रालयैः .
न हि पुण्यप्रभावेण तदस्त्येव न यद्भवेत् ॥

यस्य नगरस्याजयमेरुभावस्सार्थको भव(l.3)ति देवावासैः . मेरुर्हि देवावासः . एतमेव विशेषं सामान्येन समर्थयते . न यद्भवेत्तन्नास्ति किं तर्हि(l.4) सर्वमेव भवेदित्यर्थः पुण्यप्रभावात् ॥ अर्थान्तरन्यासः ॥ 120.

धीर्यत्रावैति नोत्कर्षं शिवपा(l.5)दयुगं विना .
उत्का एव हि सर्वस्मिन्नृपयो दर्शनं प्रति ॥

शिवपादद्वयादन्यद्वस्तु सोत्कर्षं बुद्धि(l.6)र्न जानाति . एतदेवोत्तरार्धेन

---

1 Ms. °न्यःस्त°. 2 Ms. °न्यता°. 3 Restore °आजयराजस्य नगरनिर्माणे प्रस्तुते.
4 This might be part of a shloka. 5 Read त रा°.

कारणभूतेन समर्थयते. शिवपाददर्शनार्थं सर्वे ऋषयो यस्मात्सो(I.7)-त्कण्ठा ॥ कारणभूर्षीणामुत्कण्ठितत्वं समर्थकमित्यर्थान्तरन्यासः ॥ 121.

यत्र प्रत्यक्षफ(I 8)लदस्सेवितोऽग्निस्सुकर्मणाम् ·
धूमो हि घनतामेत्य भजते वृष्टिहेतुताम् ॥

यत्र शोभन(I 9)कर्मणां फलदोऽग्निर्भवति. तथा हि यज्ञादिषु धूमो वृष्टिहेतुर्भवति. अत्र अग्निसेवनस्य कार(I 10)[णस्य कार्य]········· समर्थकम् ॥ अर्थान्तरन्यासः ॥ 122.

उच्चेयताराकुसुमा वन्द्य(I.11)[मन्दाकिनीहृदा] ·
——त्र श्रव्यसर्पार्पितृतीयसवनस्वरा ॥

उच्चेतुं शक्यानि ताराकुसुमानि य(I.12)[स्यां वन्दितुं शक्यो मन्दा]-किनीहृदो यस्यां तथा श्रोतुं शक्यश्श्रव्यस्तृतीये सवने स्नाने स्व-रो(I.13) 123.

[Lines 14 to end of page missing](**34)

[——]प्राप्तमवेशाभिरीतिभिस्सुखमास्यते ॥

द्वितीयां व्याजस्तुतिः ॥··········अ······(I.1)नैरूपया स्तुत्या निन्दायाः पर्यवसाने प्रतीते. ॥ 124.

तुङ्गत्वात्सर्वतो दृश्यं यदि———(I 2)क्तिकम् ·
सर्वत्र भ्राम्यताद्यापि कलिना यन्न वीक्षितम् ॥

तुङ्गत्वात्सर्वतो दृश्यं वस्तु म[वर्ता](I 3)वि यदेतंदनुपपन्नम् यंद्वा

---

1 Ms. 'दृशो 2 Ms. थातुं 3 Sic. (?) 4 [पर्यायोक्तम् गम्यस्योपलक्ष्य मद्य यन्तरेणाभिधा-नात] 5 Illustration of व्याजस्तुति in which निन्दाभिधीयमानापि प्रमाणान्तराद्याधितस्व-रूपा स्तुतौ पर्यवस्यति is lost. 6 Is it इंतीना सुखासनरू॰ ? 7 Restore वस्तित्य-यौक्तिकम् 8 Should be यन्तेतदनु॰. 9 Is it यथा ?

यन्नगरम् तथा हि सर्वासु दिक्षु भ्राम्यतापि कलियु[गेनो](l.4)न्नतमपि तत्पुरं न दृष्टम्. कलिस्तत्र न प्रविष्ट इत्यर्थः ॥ आक्षेपः ॥ अत्र वक्तुं युक्तस्यौ-(l.5)न्नत्यस्यायुक्तिमदित्यनेन प्रतिपादितो निषेधो निषेधाभासस्सम्पद्यमानस्सदाचारं क[लि](l.6)प्रवेशाभावप्ररूढं विशेषमाक्षिपति ॥ 125.

न यत्र धार्मिकः कश्चित्कीर्त्तिकामो नरोपि वा.
अना[श्रये](l.7)ण नं प्राप्तः प्रवेशः कलिना क्वचित् ॥

यत्र नगरे धार्मिकः कीर्त्ति[का]मो वा कश्चिन्नास्तीति [सा](l.8)ध्यम्. अत्र साधनमाह अशरणेन कलिना तत्र प्रवेशः क्वचिदपि न लब्धः ॥ आक्षेपः ॥(l.9) निषेधेनातिधार्मिकतारूपस्य विशेषस्य प्रतीतेः ॥ 126.

किं नाम वर्ण्यते यस्य धुरीणैरपि वाग्मि(l.10)[भिः].
——————जि सर्वदा वर्णयन्ति यम् ॥

महावाग्मिभिरपि यस्य किं वर्ण्यते(l.11) 127.

[Lines 12 to end of page missing](*)

·········य मित्रभावं विरहिणीमारणं कृत्वा कालपक्षं यमपक्षं कृष्णपक्षं च प्रपत्स्ये ॥(l.1) [आक्षेप]प्रकाराः ॥ 128.

इत्यध्वगवधूसख्यो यत्र वातायने स्थिताः.
निन्दन्ति वन्द्यं विश्वस्य प्रति[पत्सु](l.2) सुधाकरम् ॥

यत्र वातायनगताः पान्थस्त्रीसख्यो विश्ववन्द्यं चन्द्रं प्रतिपत्सु निन्दन्त्येवम् ॥(l.3) 129.

पुण्डरीकैस्सुहरिणैर्मातङ्गैर्यत्र सुद्विजैः.
कृष्णसारैश्च हरिभिश्शोभते राजमन्दिरम् ॥(l.4)

1 Ms. आम°. 2 Ms. °मति. 3 Ms. °नयपः. 4 Ms. अम°. 5 Ms. °ध्यापृ°.

सुहरि(?)रनिशुभ्रैः पुण्डरीकैः चन्द्रैस्तथा सुद्विजैश्शोभनदन्तैर्मातङ्गैः हस्तिभि कृष्णैश्च तैस्मां(15)रैश्चाश्वैर्यत्र राजगृहं शोभते ॥ विरोधः ॥ विरुद्धाभासत्वात् ॥ तथा हि पुण्डरीका व्याघ्रवि(16)शेषाः कथं हरिणा भवन्ति मातङ्गाश्चाण्डालास्ते कथं द्विजाः कृष्णसारा मृगाः कथं हरयः सिंहा ॥ (17) 130.

राजहंसानुरूप्येण सितोपि पृथिवीभुजाम् ।
असितो यत्र सततं जायते यशसां भरः ॥

यत्र(18) राज्ञामसितः राज्ञायशो राजहंसानुरूप्येण राजहंससितो मन्वादिप्रशस्तराजयशो(19)नुरूपत्वेन ······ ··यशसां भर उत्पद्यते ॥ विरोध असितशब्दस्य विरोधद्योतकत्वात् ॥(110) · · [अ]सितश्श्याम इति ॥ 131.

क्षमायां यदकाठिन्यं शैत्ये तापकता द्विषाम् ।
अपालक —— (111) 132.

[Lines 12 to end of page missing] (**35)
ति नोत्थानं यत्र संपूर्णपादपि ॥

अन्यत्र देशे त्रयाणां पादानां भङ्गेपि धर्म·············· (11) जायते इत्यर्थः यत्र देशे चतुष्पादपि धर्म उत्थानं निर्गमनं नेच्छति तत्रैव तिष्ठतीत्यर्थः ॥(12) विभावना विशेषोक्तिश्च ॥ अनवस्थितेर्हेतु. पादसामग्री तदभावेपि तत्फलं धर्मानव[स्थान](13)मुत्पन्नमिति विभावना तथा उत्थानस्य कारणं सम्पूर्णपादत्वं तत्सद्भावेप्युत्थानाभाव[रूपफ](14)लस्योत्पत्तिरिति विशेषोक्तिः ॥ 133.

आयव्ययेषु कालैक्यं यत्र सर्वस्य दृश्यते ।
व्ययस्त्वादौ(15) सुकृतिनामायस्तस्यानुयात्रिकः ॥

---

1 Ms. 'केन्द्र'. 2 Ms 'द्वेद'. 3 Ms. 'ग्गारे'. 4 Ms 'पे नि'. 5 Ms. 'सिग्'. 6 Ms 'कगा'. 7 Restore धर्म इच्छति.

यत्र सर्वस्य लोकस्य धनोत्पत्तित्यागेषु समकालत्वं दृ(l.6)श्यते . अर्जयन्तो जना व्ययं कुर्वन्तीत्यर्थः . यत्र सुकृतिनामादौ व्ययस्तस्य व्ययस्योत्पत्तिरनुयात्रिकी(l.7) पश्चाद्धनागम इत्यर्थः ॥ अतिशयोक्ती ॥ आयः कारणं व्ययः कार्यं भवति कारणका(l.8)र्ययोः पौर्वापर्यं प्रसिद्धम् तत्र त्वायव्यययोस्तुल्यकालत्वम् . तथोत्तरार्धे आयव्यययोः(l.9) कारणकार्ययोः पौर्वापर्यविपर्ययः ॥ 134.

पौराणां हृदये यत्र सन्निधत्ते त्रिलोचनः .(l.10)
अन्तस्तु पौरनारीणां जाज्वलीति मनोभवः ॥

यत्र जनानां चित्ते हरस्सन्निधानं करोति(l.11) कामस्तु पौरस्त्रीचित्ते ज्वलतितराम् ॥ असङ्गतिः ॥ हरः कामदाहस्य कारणम्(l.12) अत्र तु हरः पौरचित्ते संनिहितः कामस्तु पौरस्त्रीचित्ते ज्वलतीति कार्यकारणयोर्विभिन्न(l.13)देशत्वात् ॥ 135.

यत्र स्त्रीणामपाङ्गेभ्यः पूर्णाङ्गो जायते स्मरः .
युवभिर्जीयमानोऽपि(l.14) रूपेण लभते बलम् ॥

यत्र पुरस्त्रीणां कटाक्षेभ्यः पूर्णाङ्गः कामो जायते तथा तरुणैर्जि(l.15)-[तस्तासां रू]पेण कामो बलं लभते ॥ विषमम् ॥ सर्वत्र कारणानुगुणं कार्यं प्रसिद्धम् (l.16) ··················· कामस्य रूपहेतुकबललाभ-······(l.17) 136.

[Lines 18 to end of page missing] (*)[5]

यत्र राजशिखामणिः .
विश्वस्य मान्यतां लब्धुं सेव्यते परमेश्वरः ॥

यत्र रक्षैर्विरक्षैर्वा(l.1) [राजशिखा]मणिः राजा चन्द्रः शिखामणिर्यस्य स परमेश्वरस्सेव्यते विश्वकर्तृकं मानं प्राप्तुम् ॥(l.2)[विचित्रं] विकल्पश्च ॥

1 Ms. 'र्थ' written over 'जं'. 2 Ms. 'यत्रो'. 3 *Scil.* नगरे as well as पूर्वार्धे. 4 Ms. 'नाणो'. 5 Illustration of सम alaṃkāra lost. 6 Restore रक्षैर्विरक्षैर्वा. 7 Ms. चन्द्रः. 8 Ms. 'स्पर'.

विचित्रस्य विफलप्रयत्नलक्षणत्वात् अत्र हि मानलाभार्थं सेवाख्य-(13)स्य प्रयत्नस्य विपरीतफलनिष्पत्तिर्हेतुत्वम्. सेवाकारिणां हि मानहानिः ॥ 137.

भूपभुजेपि य(14)त्रत्यैर्धार्यते भूस्ससागरा.
कीर्तिः स्वच्छतनुस्तेषां न माति भुवनेष्वपि ॥

यत्रत्यै राजभिर्भूमिस्स(15)मुद्रा भुजचक्रेपि धार्यते स्वच्छा शुद्धा सूक्ष्मा च तनुर्यस्यास्सा कीर्तिर्भुवनेषु न वर्तते ॥ अधिकद्वयम् ॥ अधिक-(16)स्याश्रयाश्रयिणोरनानुरूप्यलक्षणत्वात्. अत्र ह्याश्रयस्य भुजस्याश्रयिभूताया भुवस्तुच्छत्व(17)महत्त्वाभ्यामनानुरूप्यम् भुवनानामाश्रयाणां कीर्तेस्तदाश्रयीभूताया महत्वतुच्छत्वाभ्याम् ॥(18) 138.

धर्मो विवर्ध्यते यत्र वास्तव्यानां विभूतिभिः.
धर्मेण च विवर्ध्यन्ते वास्तव्यानां विभूतयः ॥

पौरश्री(19)भिर्धर्मो वर्धते धर्मेण च पौरश्रियो वर्धन्ते ॥ अन्योन्यम् ॥ परस्परं वर्धनक्रियाजननात् ॥(110) 139.

वापीकूपतटाकेषु प्रपासु विविधासु च.
दिवमप्युपयातानां दृश्यते तत्र जीवनम् ॥(1.11)

वाप्यादिषु जीवनं जलं प्राणश्च स्वर्गतानां दृश्यते ॥ विशेष ॥ अनाधारमाधेयमि(1.12)त्यादिलक्षणत्वात् ॥ अत्र जीवनस्याधारश्शरीरिणः ते स्वर्गं गतास्तथापि जीवनं दृश्य(1.13)ते इत्यनाधारमाधेयम् ॥ 140.

त्रिदिवे दिवि पाताले कीर्त्ति[ः सर्वासु] दिक्षु च.
यदीयानां नरे(1.14)न्द्राणा[मेकरूपा समा]श्रिता ॥

---

1 Read विफलक॰ 2 Ms ॰विस्व॰. 3 Ms भुजचक्रेपि lc. on margin.
4 Ms ॰कीर्ते॰. 5 Ms. ॰यस्या॰.

स्वर्गादिषु कीर्तिरेकरूपा समा समं युगपत्स्थिता ॥ वि²(l.15) 141.

[Lines 16 to end of page missing](**36)

गैः पुनः राजभिः कीर्तिरनुपाल्यते ॥ व्याघातः ॥ उत्पत्तिविनाशयोरेकोपायत्वात् ॥ अत्र(l.1) राजभ्य एव नृपोत्सर्गैरुत्पत्तिः तैरेव तेभ्य एव च विनाशः ॥ 142.

अवला इति वाध्यन्ते सवलैरन्य(l.2)देशजैः ।
तेनैव हेतुना यत्र रुध्यन्ते राजभिः परे ॥

अन्यत्र राजभिरवलत्वाद्राजानो वाध्यन्ते त(l.3)स्मादेव हेतोस्तत्र तैश्शत्रवो रुध्यन्ते ॥ व्याघातः ॥ व्याघातार्थे संभाव्यमानस्यावलत्वस्य धाधा(l.4)विरुद्धरक्षणनिष्पादकत्वेन समर्थनात् ॥ 143.

यत्र वीर्यं प्रतापस्य प्रतापः कारणं श्रियः ।
श्रीर्ध(l.5)र्मस्य नरेन्द्राणां धर्मो भोगापवर्गयोः ॥

यत्र वीर्यादयः प्रतापादीनां हेतवः ॥ कारणमाला ॥(l.6) 144.

अर्थो धर्मानुगो यत्र कामश्चार्थानुगो नृणाम् ।
कामस्य शिवकामानां मोक्षोऽप्यनुगतां गतः ॥(l.7)

यत्र श्रेयस्कामानां धर्माद्यनुगा अर्थादयः ॥ एकावली ॥ अर्थादीनां धर्माद्यनुगतत्वात् ॥ (l.8) 145.

यौवनेन वपुः स्त्रीणां यत्र रूपेण यौवनम् ।
रूपं कान्तिविशेषेण सलावण्येन गर्जति ॥ (l.9)

यत्र यौवनादिभिर्वपुराद्यो गर्जन्ति ॥ मालादीपकम् ॥ यौवनादीनामुत्तरोत्तर(l.10)वपुरादिगर्जनाख्यगुणावहत्वात् ॥ 146.

---

1 Ms. 'सिरे'. 2 [ विशेषः । एकस्याः कीर्तेर्नेकगोचरत्वात् ]. Perhaps one illustration of विशेष—किंचिदारभमाणस्याशक्यवस्त्वन्तरकरणं is lost.

शम्भुर्लोकत्रये सारं तस्य सारं त्रिनेत्रता ।
तत्रापि(l 11) चन्द्रमास्तस्य यत्कान्तावदनोपमा ॥[1] 147.

कनकाब्जरजश्छन्ना वातायनविहारिणः ।
मानवैर्यत्र सेव्यन्ते स्व(l 12)र्गङ्गावीचिमारुताः ॥

यत्र वातायनगता नाकनदीपवना मनुष्यैस्सेव्यन्ते यतो हेमाब्जरज.-(l 13)पूर्णा. ॥ काव्यलिङ्गम् ॥ कनकाब्जेत्यादे. पदार्थत्वात् ॥ काव्यलिङ्गस्य च हेतोर्वाक्यप(l 14)[दार्थेत्यादि लक्षणात्] ॥ 148.

द्रष्टुं दिग्भ्यो दशभ्यो यदपर्याप्तदृगष्टकम् ।
——————⌣(l 15) 149.

[Lines 16 to end of page missing](*)

हेतोर्वाक्यार्थत्वात् ॥ पूर्वश्लोकेपर्याप्तदृगष्टक इति विशेषणस्य पदार्थत्वाभिमानात् ॥ 150.

सर्वस्वहारिणस्त्रस्तो वरुणो वाडवाद्ध्रुवम् ।
यत्कूपान्सेवते तोयं गिरिदुर्गे कुतो(l.1)न्यथा ॥

वरुणस्य सर्वस्वं समुद्रस्तं दहतो वाडवाग्नेर्ध्रुवं भीतो वरुणो यत्कूपान्सेवते । वरुणत्रास(l 2)स्य साध्यस्य साधनमाह । अन्यथा यदि न वरुणस्य भयं स्यात्तर्हि गिरिदुर्गे तोयं कथं स्यात् । वरुण(l.3)स्य जलाधिपतित्वादिति भावः ॥ अनुमानम् ॥ साधनात्साध्यप्रतीतिरनुमानस्य लक्षणम् ॥ (l 4) अत्र गिरौ जलसंभवात्त्रासानुमानम् ॥ 151.

वरुणादिमहेन्द्रान्तमूर्त्तयो यत्र पार्थिवाः ।
शिष्ट(l.5)दिक्पतिमूर्त्तित्वं गृह्णन्तेन्यपुरीः प्रति ॥

---

1 No Comm [ उदारालङ्कार–उत्तरोत्तरोत्कर्षवत्सुसार इति लक्षणात् ]
2 Ms °काञ°. 3 Ms °जन्छ°. 4 Ms येतो 5 Ms °माञ°. 6 Ms °काञ्जे°.
7–7 Ms lc at the top of page. 8 i e only one verse between दृष्टुं दिग्भ्यो and सर्वस्वहा° 9 Ms. °न्मत°. 10 Ms. °ह्नते°.

वरुणादारभ्येन्द्रं यावत्पञ्च लोकपालास्तेषां मूर्त्तयस्ते(l.6)ऽंशा येषां तथाविधास्तत्र राजानो भवन्ति. तत्र वरुणत्वमशेषजनाप्यायनात्. वायुत्वं बलि(l.7)त्वात्. कुबेरत्वं धनदत्वात्. शर्वत्वं सर्वोत्कर्षात्. इन्द्रत्वमखण्डितज्ञत्वात्. यत्रत्या राजानोवशि(l.8)ष्टा ये दिक्पतयो वह्नियमनैर्ऋतास्तद्भावं शत्रुनगरीषु गृह्णन्ति. अग्नित्वं तासां दाहात्. य(l.9)मत्वं शत्रुमारणात्. नैर्ऋतत्वं शत्रुपुरीनिर्वसत्वकरणात् ॥ अनुमानम् ॥ 152.

स्वर्गं पाल(l.10)ननिर्माणवर्णनैर्देववेश्मनाम्.
ध्रुवं पश्यति यत्रत्यो राजा चित्रंकरः कविः ॥

पालनादिभिः(l.11) राजादयस्स्वर्गं गच्छन्ति ॥ यथासंख्यम् ॥ उद्दिष्टानामर्थानां क्रमेणानुनिर्देशात् ॥(l.12) 153.

व्यर्थौ यशःप्रतापाभ्यां राज्ञां यत्रेन्दुभास्करौ.
धत्तोर्धरात्रमध्याह्ने छत्रत्वं देववेश्मनाम् ॥(l.13)

यत्र राज्ञां यशःप्रतापाभ्यां हेतुभ्यां व्यर्थौ निष्प्रयोजनौ सन्तौ चन्द्रार्कौ अर्धरात्रे मध्याह्ने च दे(l.14)वगृहाणां छत्रभावं धत्तः ॥ प्रतीपम् ॥ यशःप्रतापाभ्यां चन्द्रार्कयोराक्षेपात् ॥(l.15) 154.

[Lines 16 to end of page missing] (**37)

यत्कान्ताकेशसंस्कारधूपधूमस्सुधासितम्.
श्यामीकरोति सततं सौधं सितकरं ततः ॥(l.1)

यत्स्त्रीकेशसौगन्ध्यार्थे धूमः पूर्वं सौधं ततश्चन्द्रं श्यामीकरोति ॥ पर्यायः ॥ क्रमेणैकस्या(l.2)नेकस्मिन्ननेकस्यैकस्मिन्नवस्थानात् ॥ 155.

यत्राधत्ते निशि मरुत्सौधेन्दुमणिशीकरैः.
घर्मोद(l.3)बिन्दूद्भ्रामाणां गण्डयोश्चन्द्रकान्तयोः ॥

1 Ms. °म्येन्द्रं. 2 Ms. तात्र°. 3 Ms. °प्यय°. 4 Ms. °कार°. 5 Ms. मित्र°. 6 Ms. व्यर्थों. 7 Read धूपधू°.

यत्र रात्रौ स्त्रीणां वायुरिन्दुसुन्दरयोर्गण्डयोर्घर्म(1.4)जलकणान्गृह्णाति कैस्सौधचन्द्रकान्तकणैः ॥ परिवृत्तिः ॥ चन्द्रकान्तजलकणैस्स्वे(1.5)दाम्बुग्रहणात्समत्वम् ॥ 156.

पञ्चभिर्मार्गणैः पौष्पैस्स्मरो हरति कामिनाम् ।
हृत्काञ्चना(1.6)म्बुजवनं वियोगाग्निपरीक्षितम् ॥

पुष्पमयैः पञ्चभिर्बाणैः कामो विरहाग्नौ परीक्षि(1.7)तं चित्तहेमपद्मवनं हरति ॥ 157.

सर्वस्वमपि संत्यज्य स्वगृह्यत्र मानिनः ।
यशो गृह्णन्ति(1.8) तद्यस्य परे चर्वितचर्वकाः ॥

यस्य यशसः चर्विते चर्वणेपि कृते चर्वका भवन्ति(1.9) तद्यशस्सर्वस्वं दत्वा मानिनो गृह्णन्ति॥ परिवृत्तिः ॥ सर्वस्वेनाधिकेन यशसो न्यून(1.10)स्य ग्रहणेन न्यूनत्वात् ॥ पूर्वत्र पञ्चभिरशरैर्हेमपद्मवनहरणादधिकम् ॥(1.11) 158.

अपावनं धनं यत्र सर्वथा त्यागिनां गृहे ।
अत्यागः स्तूयते मौग्ध्याद्बालाभिर्यत्र कामिनाम् ॥(1.12)

अपगतमवनं रक्षणं त्यागाभावो यस्य तद्धनं त्यागिनां दातॄणां गृहे भवति । बालाभि.(1.13) कामिनामत्यागः अतिशयेनापराधः स्तूयते मुग्धत्वात् ॥ परिसंख्या ॥ अपावन(1.14)············त्यागिधनादावेव नियमनात् त्यागिधन······वा······नू(1.15)············भिमयः······ ···(1.16) 159.

[Lines 17 to end of page missing] (*)

[सतां परापवा]देपि यत्र श्रोत्रमहाज्वरः ।
स्वस्याकीर्तिर्भवेद्येन तत्तु व्यवहरन्ति के ॥

---

1 Ms. दोर्द्धे. 2 Ms. °वेन. 3 Ms. °यन्तु. 4 Ms. °रिम°.

परस्यापवादोऽपि स(l.1)तां महाज्वरः कर्णयोर्भवति येन स्वस्यापयशो भवेत्तत्के कुर्वन्ति । वाच्यां सैवं । यत्र परनिन्दापि(l.2) दुर्वचा तत्र स्वस्याकीर्त्तिहेतुभूतव्यवहारपरिहार आपतित इति शब्दोपात्तार्थापत्तिरि(l.3)ति सैव वाच्यां ॥ 160.

जह्रौ प्रागुपमानत्वं चरमं चोपमेयताम् ।
यस्य संवर्धमानस्य संप(l.4)द्भिरमरावती ॥

प्रतीपम् ॥ आधिकगुणत्वसंभावनयोपमानत्वेन कल्पितामरा(l.5)वती गुणानामन्तरपरीक्षणे सति पूर्वमुपमानत्वमत्यजत् पश्चादुपमेयताम् । अति-(l.6)न्यूनगुणत्वादिति भावः ॥ 161.

पुरान्तरेषु घनया श्वेतन्ते ज्योत्स्नया यदा ।
तदा नीलन्ति यत्सौधान्य(l.7)सितागुरुधूम्यया ॥

अन्यनगरे पौर्णिमास्यादौ सौधानि श्वेतन्ति श्वेतानि भवन्ति तत्र तु तदैव काला(l.8)गुरुधूमेन यत्सौधानि नीलानि भवन्ति ॥ गुणक्रियासमुच्चयः ॥ नीलनश्वेतनयोर्गुण(l.9)क्रिययोर्यौगपद्यम् ॥ 162.

शीलालङ्करणं रूपं त्यागालङ्करणं धनम् ।
श्रुतालङ्करणं मे(l.10)धा यत्र पुण्यानि शंसति ॥

यत्र रूपादीनि शीलाद्यलङ्कृतानि पुण्यसूचकानि भवन्ति ॥(l.11) सद्योगः ॥ रूपादीनां सतां शीलादिभिस्सद्भिर्योगात् ॥ 163.

सचौरैर्दण्डकत्त्माभैरवपैर्देव(l.12)मातृकैः ।
निर्धनैर्बहुदुर्भिक्षैर्दुर्जयं तत्पुरान्तरैः ॥

सचौरत्वादिविशेषणविशिष्टैरन्यन(l.13)गरैस्तज्जेतुं न शक्यम् ॥ असद्योगः ॥ पुरान्तराणामसतां चौरादिभिरसद्भिर्योगात् ॥(l.14) 164.

---

1 Ms. °देपि. 2 Ms. वाम्या. 3 i.e. अर्थापत्तिः. Perhaps one illustration of गम्या अर्थापत्ति is lost. 4 Ms. वाम्या. 5 Ms. °नम°. 6 Ms. °यिमा°. 7 Ms. °दापड°. 8 Ms. °दुब°.

धर्मो दम्भं लोभमर्थः कामोस्थानप्रसक्तताम् ।
मोक्षश्चार्चनवैमुख्यं दिशन्यत्र न दृश्यते ॥(1 15)

अन्यपुरेषु धर्मादयो दम्भादिकलुषिता दृश्यन्ते ॥ सदसद्योगः ॥ सतां धर्मादी[ना](1 16)- 165.

[Lines 17 to end of page missing] (**33)

स्य यस्य राज्ञ. प्रतिकारासामर्थ्ये सति तत्संबन्धिनां पराभवात् ॥ 166.

यत्र मेघाः पिधीयन्ते गवाक्षा(1 1)गुरुधूम्यया ।
सौदामिनीभिस्तेषां च हेमहर्म्यमरीचयः ॥

जालनिर्गतकालागुरुधूमैर्य(1 2)त्र मेघाश्छाद्यन्ते विद्युद्भिश्च स्वर्णहर्म्याशवः ॥ मीलितद्वयम् ॥ वस्तुना वस्त्वन्तरनिगूह(1 3)नात् ॥ 167.

अभिन्नैकेन्दुभूरिस्त्रीमुखवातायनाः क्षपाः ।
समरामाननाम्भोजदीर्घिका यत्र(1 4) वासराः ॥

अभिन्नः सदृश एकोऽमलिमल्ल इन्दुर्येषां तानि भूरीणि स्त्रीमुखानि येषु(1 5) तानि वातायनानि यासु ता. क्षपा भवन्ति समानि रामाननानि येषां तान्यम्भोजानि या(1.6)सु ता दीर्घिका येषु ते वासरा भवन्ति ॥ सामान्यम् ॥ प्रस्तुताना सुखानामप्रस्तुतैश्च(1.7)न्द्रपद्मैर्गुणसाम्येन कात्स्न्यों-पनिबन्धात् ॥
168.

मर्त्येपि शुभ्रशुभ्राश्मवेश्मरश्मिभरैश्शशी(1 8) ।
यत्र सर्वाङ्गनीलो वा महानीलगृहांशुभिः ॥

यत्र स्फटिकगृहरश्मिसमूहैः(1.9) चन्द्रः कलङ्कस्थानेपि शुभ्रो भवति

1 Ms °रवा°. 2 This might have been an illustration of स्थनीकम्, that of सतां is therefore lost 3 Ms °मी. 4 Ms. °त्रैश.

इन्द्रनीलगृहरश्मिभिस्सर्वांगेषु नीलो भवति ॥(1.10) तद्गुणः ॥ अन्यदीयसितासितगुणग्रहणात् ॥ 169.

न शक्यते यदानेतुं कलिना म(1.11)लिनात्मताम् .
तमसा चन्द्रबिम्बं हि सविशेषं प्रकाशते ॥

कलिना यन्नगरं मालि(1.12)न्यं नेतुं न शक्यते यतः चन्द्रस्तमसात्यर्थं शोभते ॥ अतद्गुणः कलिगुणाननुहारात् ॥(1.13) 170.

गृह्णीत त्रिगुणं त्वत्तो न स्याद्ग्रहणं यदि .
प्रत्यादिशन्ति शम्भल्यो यस्मिन्नित्यान्तकामुकान् ॥(1.14)

[यस्मिन्] कुट्टिन्यो······न्तान्कामुकानिति प्रत्यादिशन्ति निषेधयन्ति इति हेतोर्यदि तत्कर्तृ(1.15)कत्वं कर्मकर्म··············त्यर्थः तदा त्व[त्तः त्वत्]सकाशान्मया(1.16) त्रिगुणं गृह्णीत परं सा तु त्वां न गृह्णाति मद्वस्ते त्वया न्यस्तं यद्वस्तु तन्न गृह्णातीत्य(1.17)र्थः ॥ उत्तरम् ॥ अत्र हि उत्तरात्प्रश्नमुन्नीयते . कामुकैर्हि कुट्टिनीनामुक्तमेतत्(1.18) इदं वस्तु तस्यै देहि सा मत्समीपं त्वयानीयतामिति ततः कुट्टिनीभिः पूर्वोक्तमुत्तरं(1.19) दत्तमस्मादुत्तरात्प्रश्नोन्नयनम् . त्वत्त इति कामुकपरामर्शकम् एकवचनं तु प्र(1.20)त्येकं पृथग्भाषणात् कुट्टिन्यो ह्यभिसारिकाणां गौरवरक्षणार्थं जनानुत्तरयन्ति ॥(1.21*) 171.

कं यत्र पुष्करं गत्वा वरिवस्यन्ति साधवः .
कं पुष्कराद्गृहायातं स्पृष्ट्वा शुद्धिं च मन्वते ॥

पुष्करं तीर्(1.1)थं गत्वा साधवः कं ब्रह्माणमुपासते पुष्करतीर्थाद्गृहायातं कं जलं स्पृष्ट्वा शुद्धिं मन्यन्ते कमि(1.2)ति प्रश्ने कं ब्रह्माणं कं जलमित्युत्तरं[7] द्वितीयम् ॥ 172.

1 Ms. ग्रन्थ°. 2 Is it °त्वार्तं ? 3 Ms. कुट्टि°. 4 Is it °आर्तान्का°? 5 Sic. Is it तत्कर्तृकं त्वत्कर्मकमग्रहणं ? 6 Ms. °पिट्यो°. 7 Ms. °रद्धि°.

यत्र कर्णोत्पलन्यस्तहस्तं दीपावलो(l.3)किनीः .
दृष्ट्वा वधूः प्रियोपान्ते सखीभिः प्रतिमुच्यते ॥

दीपशमनार्थं कर्णोत्पलेषु न्यस्ता ह(l 4)स्ता यत्रैवं कृत्वा दीपानवलोकयन्तीर्नारीर्भर्तृनिकटे दृष्ट्वा सखीभिः प्रतिमुच्यते ॥(l 5) सूक्ष्मम् ॥ रिंसारूपसूक्ष्मार्थप्रकाशनात् ॥ 173.

शीतः पाणिरपथ्योयं सद्यो मे निरगाज्ज्वरः .(l 6)
यत्र रामा प्रियस्पर्शप्रस्वेदमिति निह्नुते ॥

इदानीं मम ज्वरो निर्गतोतस्तवायं पाणिः शी(l 7)तत्वादपथ्य इत्यनेन वचसा प्रियस्पर्शेन प्रस्वेदं रामाच्छादयति ॥ व्याजोक्तिः ॥ स्वेदेनोद्भिन्नस्य(l 8) प्रियस्पर्शसुखस्य ज्वरनिर्गमनेन निगूहनात् ॥ 174.

मा प्रवेदयति कोप्यन्तर्मा शब्दश्श्रूयते बहिः .(l 9)
वाक्य यत्र नवोढानामिति कान्तैर्निगद्यते ॥

नवोढा वक्ति मा हठादिकं कुरु यतः कोप्यन्तः प्रवेदय(l.10)ति तथा मायुङ्क्ष्व यतो बहिश्शब्दश्श्रूयते एतदेव कान्ता अनुवदन्ति मा निषेधं कुरु यतः कोप्य(l.11)न्तः प्रवेदयति काकुप्रयोगेण न प्रवेदयतीत्यर्थः मा निषेधं कुरु यतो बहिश्शब्दश्श्रूयते काकु(l 12)प्रयोगेण न श्रूयते इत्यर्थः ॥ वक्रोक्तिः काकुप्रयोगात् ॥ 175.

कोप्यन्तर्मे न ते स्नेहः कोपवन्तं त्य(l.13)जान्तरात् .
नतोहमिति मानिन्यो रम्यन्ते यत्र कामिभिः ॥

मंमान्तः स्नेहस्तव नास्ति यद्वा त्वत्कर्तृकः स्नेहो मेन्तर्मयि विप(l 14)यभूतायां न भवतीति मानिनीनामुक्तिः कामिभिस्त्वन्यथा योजनं कृतम् त्वं

---

1 Ms °न्तीश्वारौन्म°. 2 Ms °षि रयी°. 3 Ms. प्रियास्प°. 4 Ms. वक्रो°. 5 Ms. ममा° to मङा lc. under l 13.

[कोपी] कोप(l.15)वान् मे मम नते प्रणते स्नेह इति त्वयोक्तम् तत्कोपमन्तराचिंता[त्यज त]वाहं नैतः प्र(l.16)णामकारीत्युक्त्या कामिभिर्मानिन्यो रम्यन्ते रमणीजनाः . मे इत्येकवचनमेकैककामिन्य(l.17)भिप्रायात् ॥ श्लेषेण सैव ॥ सैवेति वक्रोक्तिः ॥ 176.

यत्र स्तनन्धयान्हस्ते रत्नदीपं जिघृ(l.18)क्षतः .
दृष्ट्वा हाहेति संभ्रान्ता धात्री चेटैर्विहस्यते ॥

रत्नदीपं हस्ते गृहतो बालान्द्र(l.19)ष्ट्वा सम्भ्रान्ता हाहेति वदन्ती धात्री चेटैरुपहस्यते ॥ स्वभावोक्तिः ॥ 177.

निपीडितस्य पूर्णे(l.20**39[5])न्दोस्सुधया पङ्किलाङ्गुली .
यत्र मृत्युजितः पादौ भाव्येते भावितैः पुनः ॥

पीडितस्यासन्नभूत(l.1)स्य पूर्णचन्द्रस्यामृतेनार्द्राङ्गुली मृत्युजितो भगवतः पादौ भक्तैः प्रणिधीयेते ॥ भाविकम् ॥(l.2)अत्यन्तविप्रकृष्टस्य भगवदङ्गुलिपङ्किलत्वस्य प्रत्यक्षायमाणत्वात् ॥ 178.

च्युतकर्पूरकस्तू(l.3)रीपांसुला पण्यवीथिका .
कुरुते पाण्डुरश्यामवाससो यन्निवासिनः ॥ .

च्युताभ्यां कर्पूरक(l.4)स्तूरीभ्यां पांसुला यत्रापट्टवीथी यस्मिन्निवासिनः पौरान्सितासितवस्त्रान्करोति ॥ उदात्तम् ॥(l.5) सातिशयसमृद्धिवर्णनात् ॥ 179.

पारेसिन्धु विजिग्ये यां मध्येसिन्धु न्यधाच्च याम् .
रामः कृ(l.6)ष्णश्च नगरीं ते दास्ये यस्य नोचिते ॥ .

समुद्रपारे यां नगरीं लङ्कां रामो जितवांस्तथा समु(l.7)द्रमध्ये नगरीं

1 Should be °त्कोपिन°. 2 Ms. °राश्चि°. 3 Ms. °वाहवं न°. 4 Ms. वक्रो°.
5 Ms. पृ. रा. ४४ vertically on margin.

द्वारवतीं कृष्णो यां व्यधात्ते नगर्यौ यस्य दासत्वयोग्ये न भवतः ॥ द्वितीयमुदात्तम् ॥(1 8)लङ्काजयद्वारिकानिर्माणयोर्महापुरुषचरितयोरङ्गभूतत्वात् ॥ 180.

चन्द्रांशुस्मेरधम्मिल्ल(1 9)मल्लिकानां प्रियान्प्रति .
सौधेषु गीतं रामाणां यत्रालिभिरनूद्यते ॥

चन्द्रांशुभि स्मेराश्शु(1 10)भ्रतरा धम्मिल्लमल्लिका यासां स्त्रीणां प्रियानुद्दिश्य गीतं सौधेषु सरोभिरनु पश्चा(1 11)दुच्यते गीयते ॥ रसवत् ॥ रतेरङ्गत्वाद्रसवदलङ्कारः ॥ 181.

सौधेष्विन्दूदये शुद्धाः प्रि(1 12)यमार्गस्पृशो दृशः .
न व्याकुलयितुं भृङ्गा यत्रोत्पलदृशामलम् ॥

चन्द्रोदये प्रियमा(1 13)र्गवीक्षिणीरुत्पलदृशां दृष्टीर्व्याकुलीकर्त्तुं भ्रमरा नालं न शक्ता. अत्युत्कण्ठयेति भावः ॥(1 14)प्रेयोलङ्कारः ॥ प्रियमार्गवीक्षणव्यर्भत्वादौत्सुक्यस्य रत्यङ्गस्य व्यङ्ग्यत्वात् ॥ व्यभिचा(1 15)रि-प्रेयस्वि ॥ 182.

प्रलापरिशिवभक्तानां श्रूयते यत्र निश्चलैः .
शिवभक्तैर्गृहद्वारं कुर्वद्भि[रिव(1.16) पङ्किलम्] ॥

.................शिव शिवेति प्रलापहर्षबाष्पेण गृहद्वारं पङ्किलं (1 17) 183.

[Lines 18 to end of page missing](*)

भवतीभिश्चन्द्रोदयेऽपि कोपो न त्याज्यः. चन्द्राधिकस्य शृङ्गारोद्दीपकस्याभावार्थोऽपिशब्दः. इत्ये(1 1)वं प्रियहासोल्पघ्नीणां कोपोत्कर्षमल्पीकरोति प्रियहासेन रोषरशाम्यतीति अर्थः ॥ समाहितम् ॥(1 2)कोपप्रशान्तेरभ्यङ्गत्वम् इति ॥ 184.

---

1 Ms भनि°. 2 Ms. सखि°. 3 Ms °मसर्द्धत्वा°. 4 [ उर्जसित ] 5 Is it °भाव° ?

हठेन पादपतनं यत्र रामासु सागसाम् .
कोपाग्निं दीपयति(1.3) च प्रसादाम्बु च वर्षति ॥

रामासु सापराधानां संवन्धिं हठेन प्रणमनं कर्तृ कोपाग्निं ज्वलय(1.4)-
ति हर्षजलं च वर्षति . प्रसादे इति वा पाठः ॥ भावसन्धिः ॥ असूयौत्सु-
क्ययो रत्यङ्गयोर्भावात् ॥(1.5) 185.

लटभाभिस्स्वयं दत्तं विलासिषु नवंक्षतम् .
दृष्टं विस्मृत्य रत्यन्ते यत्रैति व्रणविघ्नताम् ॥(1.6)

कामिनां तरुणीभिस्स्वयमेव दत्तं तदेव विस्मृतं सद्रत्यन्ते दृष्टं
विघ्नतामेति ॥ भावोदयः ॥(1.7)असूयोदयात् ॥ 186.

यस्मिन्पराङ्मुखी रक्ता साचुस्स्मेरा च योषिताम् .
सुसखीसाक्षिकं दृष्टि(1.8)र्भवत्यानमति प्रिये ॥

रमणीनां प्रिये प्रणमति सति दृष्टिः पराङ्मुखत्वादिसहिता स्निग्ध(1.9)-
सखीसाक्षिकं भवति ॥ भावशवलता ॥ अमर्षासूयानिर्वेदहर्षाणां शव-
लत्वात् ॥(1.10) 187.

भ्रूभङ्गभङ्गिभिस्स्त्रीणां येनाप्ताश्चापराजयः .
कामस्य कामिभिर्यत्र कृतस्तस्य पराजयः ॥(1.11)

येन कामेन भ्रूभङ्गविच्छित्तिभिर्हेतुभिश्चापानां राजयः पङ्क्तयः प्राप्ताः
तस्य कामस्य का(1.12)मिभिः पराजयः कृतः ॥ अनुप्रासयमकयोस्सं-
सृष्टिः ॥ 188.

केलीकोकिलकाकल्याः(1.13) कल्पाः कान्तागिरो जये .
यत्र कामयमानानां नानाङ्गं सुवते सुखम् ॥

1 Ms. संवधि. 2 Ms. दत्तं. 3 Is it नख° ? 4 Ms. °सादि°. 5 Ms. °भिदे°.

यत्र प्रियाणां वाचः(l.14) कामयमानानां कामिनां नानाविधं सुखमुत्पादयन्ति केलीकोकिलानां काकलीक(l.15)·········स जये कल्पाः कुशला. ॥ तयोरेव संकरः ॥ 189.

कर्पूरविपणौ यत्र सर्वस्मि···(l.16)- 190.

[Lines 17 to end of page missing](**40)

स्थानेनामरावतीन्द्रनगरी भूरिसौभाग्यं स्पृशति. समगुणेति तात्पर्यम्. या च स्त्री पुरुषायि(l.1)तस्पृचिस्सात्यर्थं सुभगा ॥ समासोक्त्युत्प्रेक्षासङ्करः ॥ स्पृशतीति संभावनातात्पर्या(l.2)दार्थ्युत्प्रेक्षा नायिकाव्यवहारारोपाच्च समासोक्तिः ॥ 191.

एवंविधामजयमेरुपुरः प्र(l.3)तिष्ठां
कृत्वा सकौतुक इवाजयराजदेवः.
दोर्वीर्यसंहतनयं तनयं विधाय
सिंहासने त्रि(l.4)दिवसीन्नितुमुच्चचाल ॥

एवंविधामजयमेरुनगरस्य प्रतिष्ठां कृत्वा स्वर्गदर्शनार्थ(l.5) कौतुकीव. नगरान्तरलाभार्थमिति भावः. भुजबलमिलितनीतिं पुत्रं सिंहासने कृत्वा (l.6)चलितः ॥ 192.

अर्णोराजोथ सादाशिवमनिशमनुध्याय रूपं प्रसन्ना-
दस्मादत्रैव(l.7) जन्मन्यतुलबलमिव प्राप्य पञ्चाननत्वम्.
सर्वोर्वीपुण्डरीकप्रकटविघटनोन्मत्तमा(l.8)तङ्गराज-
त्रासायासावतारव्यवसितमकरोत्पुष्करक्षेत्रमेकम् ॥

अथार्णोराजस्सदा(l.9)शिवसंबन्धि रूपं ध्यात्वा प्रसन्नादस्मात्सदाशिवादस्मिन्नेव जन्मनि बहुबलमिव पंचानन(l.10)त्वं सिंहत्वं पंचवक्रत्वं च

1 Ms. °पये 2 Ms. °न्दुन°. 3 Ms. सुरि°. 4 Ms. °गिर°. 5 Ms. प्राप्त.

प्राप्यैकमप्रतिमल्लं पुष्करक्षेत्रं समस्तभूमौ पुण्डरीकाणां(l.11) छत्राणां प्रकटं विघटनेनोद्धतानां मातङ्गराजानां म्लेच्छानां त्रासत्यासोत्पादने व्यवसितं (l.12)शक्तमकरोत् ॥ व्यवहितमिति पाठो नार्षः. सिंहश्च पुण्डरीकाणां व्याघ्रविशेषाणां विघ(l.13)टनादधिकमुद्धतानां हस्तिनां भयमुत्पादयतीति भद्रम् ॥ 193.

श्रीलोलराजसुतप(l.14)ण्डितभट्टनोन-
राजात्मजो विवरणेन स जोनराजः.
सर्गं चिराद्व्यधित पञ्चममञ्चि(l.15)——
——◡—◡◡◡—◡◡——◡राजे ॥

श्रीश्रीकण्ठचरित्रकाव्यविवृतौ(l.16)

[Lines 17 to end of page missing](*)

* * * * *

---

1 Ms. °यत°. 2 Ms. °ञ्चः. Is it °धितं श्रीपृथ्वीमहेन्द्रविजयाभिधकाव्यराजे ?

## [ षष्ठः सर्गः ]

* * * * * * *

समीयु-
भेयं तदेवाजयमेरुनार्यः ॥

प्रथमं चन्द्रस्य राहुणा ग्रहे ग्रासे सति चन्द्रलोके दाक्षा(1 1)यणीनां ताराणामश्विन्यादीनां यद्भयमासीत्तदेव तत्समभित्यर्थः दुर्गाङ्गनाः प्रापुः (1.2)विपर्यये हस्तश्रवणं च नक्षत्रे हस्तः करश्रवणं कर्णौ यासां ताः ॥ 1.

रजोभिरेव प्रतिभानभङ्गे(1 3)
पूर्वस्य पुंसस्तरणेः प्रवृत्ते ।
निर्गत्य सोष्मा विदधे स दोष्मा-
नौर्वाग्नितां तत्कटकार्णवस्य ॥

अ(1 4)र्णोराजस्य पूर्वः पुमानादित्यः तस्य रजोभिरेव प्रकाशनाशे जाते सोष्मा दर्पो दोष्मान्भुजशा(1.5)ली स··················[सै]न्य-समुद्रस्य वडवाग्नितामकरोत् तत्कटकमशोषयदित्यर्थः ॥(1 6) 2.

पराङ्मुखी यत्पृतना प्रपेदे
जनङ्गमानामसुभिर्वियोगम् ।
स रौरवाणां सुवसत्वकालो
भा(1 7)ग्यानि वा भास्करमण्डलस्य ॥

जनङ्गमानां म्लेच्छानां पृतना सेना प्राणैर्वियोगं पलायमा(1.8)ना सती यत्प्राप्ता स रौरवाणां नरकविशेषाणां सुवसत्वकालः सूर्यमण्डलस्य वा

1 Restore विपर्ययहस्तश्रवणा- स°. 2 Ms °स्तश्र°. 3 Ms. °त्र. 4 Ms. दोष्मा°.
5 Ms. °दाक्र°.

भा(l.9)ग्यानि भवन्ति. यदि हि म्लेच्छा रणे संमुखा म्रियेरंस्तदार्कबिम्बं भित्वा गच्छेयुः नत्वेवमतो न(l.10)रके पतिताः ॥ 3.

दोश्शालिनामाजयमेरवाणां
यल्लोहघातैः करणीयमासीत्.
भारा(l.11)यमाणैर्निजवर्मलोहै-
स्तदन्वभूवन्बहवस्तुरुष्काः ॥

अजयमेरुभवानां भटानां श(l.12)स्त्राघातैर्यत्कर्तव्यमासीत्तद्भारीभूतैरायसकवचैर्बहवस्तुरुष्काः प्रापुः. निजकवचभ(l.13)रैरेव मृता इत्यर्थः॥ 4.

पुरोगतानामसवो निरीयुः
पिपासया ये मरुधूलिमध्ये.
तैरेव सा(l.14)—⏑⏑—⏑——
——⏑——⏑⏑—⏑——.॥

·········पिपासया(l.15) 5.

[Lines 16 to end of page missing](**41)

—धतस्कराढ्ये
सुखेन पाथेयमिवात्तवद्भिः ॥

अश्वग्रीवास्वायुधप्रहारं दत्वा शोणितं [पीतव](l.1)द्भिः कैश्चिन्मृतम्. भावे क्तः. अत्रोत्प्रेक्ष्यते पापचोरसंकुले नरमार्गे पाथेयमिव गृह्णद्भिः(l.2). चौरबहुले च लोकः पाथेयं गृह्णाति ॥ 6.

मरुस्थलीवालुकया प्यधत्त
कांश्चिद्द्विपन्नांल्लु(l.3)ठतः पृथिव्याम्.

---

1 Ms. दौ°.

संस्कारमात्मोचितमन्तकाले
प्रवर्तयन्ती कृपयेव वात्या ॥

मृतान्भूमौ लुठ(1 4)तोन्यान्वात्यासमूहो मरुसिकतयाच्छादयत्. अत्रोत्प्रेक्ष्यते कृपया हेतुभूतया यवनोचि(1 5)तं प्रेतसंस्कारं भूमिनिखननलक्षणं प्रवर्तयन्तीव ॥ 7.

रुध्वा स्थितान्कांश्चन राजमार्गे
ग्रा(1 6)म्याश्शवान्गन्धभयेन हुत्वा .
तुरुष्कमांसस्य चिराद्रसज्ञं
क्रव्यादमग्निं रचयांबभूवुः ॥(1.7)

राजमार्गमावृत्य स्थितान्कांश्चन शवान्गन्धभयेन हुत्वा ग्रामिणः क्रव्यादमसंस्कृतमग्निं(1 8) तुरुष्कमांसस्यास्वादज्ञं चिराच्चक्रुः ॥ 8.

बभूव यावानवनेः पुरस्ता-
द्भारस्तुरुष्कैर्व्यसुभि(1 9)र्लुठद्भिः .
तावानभून्मेदुरितोदरीणां
तत्पारणाद्धारणतश्शिवानाम् ॥

तुरुष्कैर्गतप्रा(1 10)णैर्लुठद्भिः पूर्वं भूमेर्यावान्भारोभूत्तावानेव भारस्तत्पारणात्तुरुष्कग्रसनात्पीवरोदरीणां(1 11) जम्बुकीनां धारणतोभूत्. पारणशब्दो भक्षणे वर्तते. तुरुष्कभक्षणे निवृत्तस्य भारस्य शिवासे(1.12)दुरस्यात्पुनरुदयः ॥ 9.

अभूच्च तेषां विशतामुलूकै-
स्सपादलक्षं यदमङ्गलं प्राक् .
त(1 13)त्तत्पलास्वादननिर्वृतस्य
भद्रं बभाषे बलिभुक्कुलस्य ॥

1 Ms. °भि. तु°. 2 Ms. °निर्°.

सपादलक्षं नाम देशविशे(l.14)षं विशतां म्लेच्छानाममङ्गलमुलूकैः कौशिकैर्यत्सूचितं तदमङ्गलमेव कर्तृ काक(l.15)[कुलस्य] शुभमसूचयत् यतो मृतम्लेच्छमांसग्रासमुखितस्य. आसादनेति पाठो ना(l.16)[र्थः] ...... ॥ 10.

⏑—⏑——⏑⏑—⏑रीति
परस्परस्याप्सरसो हसन्त्यः.
जनङ्गमैर्मृधेभिरर्ध(l.17)——
⏑—⏑——⏑⏑—⏑—— ॥

...............हृदयं ममेभ्य(l.18) 11.

[Lines 19 to end of page missing](*)

तिस्से तत्र कथामात्रमपि नाकुर्वन्निति. पांथेष्विति यस्य च भावेन भावलक्षणमिति सप्तमी(l.1). पांथाः कथामप्यजन्यूट्धादयस्त्वकुर्वन्निति तात्पर्यम् ॥ 12.

पवित्रिता वीररसेन धात्री
मुहूर्तमा(l.2)त्रं नृपसैनिकानाम्.
चाण्डालकीलालमलीमसे तु
चिरस्य वीभत्सरसे ममज्ज ॥

राजसै(l.3)न्यानां वीररसेन कर्त्रा भूमिर्मुहूर्तमात्रं पवित्रीकृता. तुः पक्षान्तरे. म्लेच्छरक्तैरशुचौ वीभत्सरसे(l.4) चिरममज्जत् ॥ 13.

हतप्रसादीकृतनष्टशिष्ट-
प्रविष्टतौरुष्कतुरङ्गमापि.
सेना चकाराज(l.5)यराजसूनो-
रुच्चैरश्वरसर्गमयीरिवाशाः ॥

1 Ms. 'हृत्'. 2 Pāṇini, 2.3.37.

राक्षस्सेना दिशस्सर्वा उच्चैरश्रवस्सर्गप्रक्र(l.6)वीरिव व्यधात् हृताः प्रमादीकृत्वा नष्टाश्चैतेभ्यश्शिष्टाः प्रविष्टान्तौरुष्कास्तुरङ्गमा यस्यां(l.7) सा . तुरुष्कवाहापहरणात्तत्सेना दिशोऽपीदिति भावः . उच्चैश्श्रवा एक एव स च स्वर्ग(l.8) एवास्ति तत्सेना तु वराश्ववाहुल्याद्बहुसंख्योच्चैश्श्रवस्सहिता दिशोपि व्यधादित्यपिरा(l.9)व्दार्थः यद्वा हृतादिभ्यश्शिष्टत्वादल्पप्रविष्टाश्वोपि दिशोनेकोच्चैश्श्रवस्सहिता············[1] ॥ 14.

भीत्या विना कस्य न सुप्रवेश-
मुपक्रमे यत्समरस्य जज्ञे .
भाग्यैर्विना कस्य(l.10) न च प्रवेष्टुं
साध्यं न तत्पार्थिवसैन्यमासीत् ॥

रणारम्भे यद्राजसैन्यं भीत्या विना कस्य न(l.11) सुप्रवेशमभूत् . भीतिरेव तत्र सैन्ये न प्रविष्टा अन्ये तु सर्वे तुरुष्काः प्रविष्टा इत्यर्थः . यद्रा(l.12)जसैन्यं कस्यापि प्रवेष्टुं साध्यं नासीत्किंविना . भाग्यैर्विना. भाग्यान्येव समरान्ते प्राविशन्नन्ये तु तु(l.13)रुष्का हृता इत्यर्थः हत्वा तुरुष्कांस्तद्धनं प्राप्तमिति भावः. यद्वा निर्भयस्य कस्य न सुप्रवे(l.14)शमिति यज्जनैर्जज्ञे ज्ञातं तद्राजसैन्यं भाग्यानि विना कस्यापि न प्रवेष्टुं शक्यमिति ॥(l.15) 15.

एकैकमु— ⏑ ⏑ — ⏑ — —
— — ⏑ णीमंतुरिवाभिधातुम् .
संप्रेषित — ⏑ ⏑ — ⏑ — —
— — ⏑ — — ⏑ ⏑ — ⏑ — — ॥(l.16) 16.

[Lines 17 to end of page missing](**42)

तया परकटकं सिद्धवत्प्रविष्टा इत्यर्थः पौरस्तुत्यमृतपूर्णास्सादिनोऽशोभन्त ॥ 17.

1 Ms. 'चैत्र'. 2 Ms. Ic. on margin. 3 Ms. 'ग्रस्ता'. 4 Ms. 'भर्तै'. 5 Ms. 'पूर्णस्सा'.

नृपः(1.1) पताकासिचयप्रपञ्च-
सञ्चारिचित्राम्बरभूषणायाम् .
अलोठयित्वैव नवीकृतायां
पु(1.2)र्यामपूर्वां श्रियमीक्षते स्म ॥

ध्वजवस्त्राण्येव संचारि चित्रं यस्य तदम्बरं भूषणं य(1.3)स्यांमस्त एवालोठयित्वैव लोठनेन विनैव नवीकृतायां नगर्यां स शोभां दृष्टवान्. शत्रुमारणा(1.4)न्नगर्या नवीकरणम् ॥ 18.

महोत्सवः क्ष्मापतिना सुलग्ने
न ज्ञायते कुत्र स मूत्रितोभूत् .(1.5)
अद्यापि यो रुद्धतुरुष्कयात्रं[6]
तथैव सर्वामवनीमुपास्ते ॥

योद्यापि म्लेच्छानां यात्रां रुद्ध(1.6)वान्सर्वां भुवं च व्याप्नोति स महोत्सवो राज्ञा कस्मिन्नपि शोभने स्थिरे लग्ने प्रारब्धोभूत्. शोभन(1.7)-लग्ने एवारब्धस्य स्थैर्योपपत्तेः ॥ 19.

व्यापादि यस्मिन्नपवित्रसेना
स भूप्रदेशश्चिरकाल(1.8)मासीत् .
कङ्कालिकाकालिशृगालमाला-
मेलापकोलाहलकेलिरौद्रः ॥(1.9)

सा चाण्डालसेना यत्र मारिता तत्स्थानं कङ्कादिरौद्रं जातम् ॥ 20.

विशुद्धिहेतोरथ तस्य(1.10) राजा
घ्राणेन्द्रियाकस्मिकरौरवस्य .
अकारयत्कीर्त्तिपटीपिनद्ध-
क्षीरोदनम्रङ्कर(1.11)णं तटाकम् ॥

1 Ms. °कौठ°. 2 Ms. °स्यांम°. 3 Ms. ऐवा°. 4 Ms. °लठ°. 5 Ms. °अं. We take it as an adverb. 6 Ms. °संक्र°.

नासाया आकस्मिकरौरवाख्यस्य नरकविशेषस्य. उद्वेगोत्पादक(l.12)-दौर्गन्ध्यातिशयादिति भावः. तस्य म्लेच्छमारणस्थानस्य शोधनार्थं स राजा तटाकम(l.13)कारयत. कीर्त्तिरेव पटी तया पिनद्धस्य क्षीरोदस्य नर्मंकरणम. क्षी(l.14)रसमुद्रादधिकमित्यर्थः. अधिकश्च हीनं जयन्पटीं गृहीत्वा नर्मं करोति. नर्मपलिवित्यो(l.15)दिना कर्त्तर्यर्थे [ख्यु]टि नर्मकरणशब्दस्य रूपम् ॥ 21.

तत्तुङ्गमातङ्गघटास्थिकूटा-
वि(l.16)— ⏑ — — ⏑ ⏑ — ⏑ — ,
— ⏑ — ⏑ ⏑ — ⏑ —
— ⏑ पीडां मनुते स्म भू(l.17)[पः] ॥ 22.

[Lines 18 to end of page missing](*)

या पुष्करारण्यविहारशीला
मन्दाकिनीवेन्दुनदी प्रसिद्धा.
भगीरथस्सिन्धुमिव स्रवन्त्या(l.1)
तया तटाकं तमपूरि देवः ॥

पुष्करमरण्यमाकाशं च तत्र संचारिणी या चन्द्रनदी(l.2) गङ्गेव प्रसिद्धा तया नद्या स राजा तं तटाकमपूरयत् भगीरथस्समुद्रमिवं. पूरेर्णिजन्तस्य चिर्ण्यपूरीति(l.3) रूपम् ॥ 23.

पयोभिरीशानकिरीटचन्द्र-
पेयूषगर्भैः परिपूरितोपि.
क्षारत्वमापत्स(l.4)गरात्मजाना-
मपुण्यलेशादिव वारिराशिः ॥

1 Ms. "स्नपा", Kātantra, 4.3 57. cf Pāṇini, 3 2.56 2 Ms. भ" to "व Ic. on margin. 3 Ms. "रोचि". 4 Pāṇini, 3.1.61.

हरमौलिचन्द्रसुधामिश्रैर्जलैः(l.5) पूरितोपि समुद्रस्सगरपुत्राणामभाग्यवशादिव क्षारत्वं प्रापत् . दोषादिवेत्यार्षः(l.6) पाठः ॥ 24.

पुण्यास्तु तस्याजयराजसूनोः
को वेदितुं तत्त्वगतीरभिज्ञः .
शाकम्भरीत्वे(l.7)ऽगतोपि यस्य
क्रीडासमुद्रस्सचिवस्सुधायाः ॥

राज्ञः पुण्यानां परमार्थं ज्ञातुं को(l.8) विदग्धः यस्य क्रीडाब्धिः क्षारस्थलस्थोपि सुधायास्सदृशः ॥ 25.

नाम्ना पितुर्वारु(l.9)णवाणलिङ्ग-
प्रासादमुत्तुङ्गमकारयद्यत् .
वारां विवृद्ध्यर्थमिवागतोसौ
हि(l.10)मालयस्तत्सरसो विभाति ॥

पितुरजयराजस्य नाम्ना स वारुणवाणलिङ्गस(l.11)हितं प्रासादं यदकारयत्तत्प्रासादकरणं सरसो जलानां वर्धनार्थमिवागतो हि(l.12)मालयो विभाति ॥ 26.

तद्धाणपूजागतपाशिहस्त-
स्रस्तैरिवानन्दितघूर्णितत्वात् .(l.13)
नागैर्नगर्यामपि ⏑–⏑–नां
व्यधायि तेन हृदनिर्भरा भूः ॥

हर्षघूर्णनाद्धेतोस्तद्वा(l.14)- 27.

[Lines 15 to end of page missing](**43)

सौक्तेन किं भवति . इदमेव सारमिति भावः . यानि देवगृहाणि पूर्वं जातानि यैश्चामे भ(l.1)विष्यन्ते तेषां स एव न पुनर्देवगृहनिर्मातारः

1 Ms. °ह्व्यार्थं°. 2 Ms. हर्म्यं°. 3 Is it बहुसौक्तेन ? 4 Ms. °प्र°.

प्रतिष्ठाफलं प्रापन्. कुतः तुरुष्काणां(1 2) यात्राया विघातात्. यदि हि स राजा तुरुष्कान्न विहन्याचे तुरुष्का देवगृहध्वंसं कु(1.3)र्युरिति भावः॥28.

अवीचिभागो मरुभूमिनामा
खण्डो द्युलोकस्य च गूर्जराख्यः.
परी(1 4)त्तणायेव दिशि प्रतीच्या-
मेकीकृतौ पाशधरेण यौ द्वौ ॥ 29.

तयोर्द्वयोरप्युदिते नरेन्द्र(1.5)
तं बभ्रतुस्तुल्यगुणे महिष्यौ.
रसातलस्वर्गभवे इव द्वे
त्रिलोचनं चन्द्रकलाग्निसर्गे ॥(1 6)

मरुमंज्ञितोवीचिनामा नरकैकदेशस्तथा गूर्जरनामा स्वर्गखण्ड इति द्वौ खण्डौ प(1.7)श्चिमदिशि वरुणेन परीक्षार्थमिव स्थापितौ यौ तयोर्द्वयोर्मरुगूर्जरयोरुत्पन्ने समगु(1 8)णे राज्ञौ बभ्रतुः यथा भूतलस्वर्गोत्पन्ने चन्द्रकलागङ्गे परमेश्वरं बभ्रतुः ॥ 30.

पूर्वा तयो(1 9)र्नाम कृतार्थयन्ती
तं प्राप्य कान्तं सुधवाभिधाना.
सुतानवापत्प्रकृतेस्समाना-
न्गुणानिवान्यो(1.10)न्यविभेदिनस्त्रीन् ॥

तयोर्महिष्योर्मध्यात्पूर्वा ज्यायसी सुधवानामा तं कान्तं लब्ध्वा नाम सा(1.11)र्थकं कुर्वती त्रीन्पुत्रान्समबलानन्योन्यभिन्नान्गुणभिन्नांश्च प्रापत्. अतस्संभाव्यते प्रकृतेर्गुणा(1 12)न्सत्त्वरजस्तमांसीवेति. तानि च समानान्योन्यभिन्नानि च भवन्ति ॥ 31.

---

1 Ms 'योद'. 2 Ms. 'त्तानिम'. 3 Sic. See p. 109, note 5.
4 Refers to सत्त्वरजस्तमांसि, not गुणान्

एको दशग्रीव इवान(l.13)कोन
पितुर्विरुद्धं व्यवहृत्य नाथम् (?) .
अन्येन चान्येपि न कुम्भकर्ण-
न्यायेन नाप्यन(l.14) – ⏑ – – ॥ 32.

– – ⏑ – – ⏑ मधुद्विषोंश-
स्तस्यांशतो विग्रहराजनामा .
महाबला(l.15)- 33.

[Lines 16 to end of page missing](*)

गूर्जरेन्द्रो जगत्सिंहस्तस्मै यां दत्तवान्सा काञ्चनदेवी सापि च दिने
च शोभने सोमेश्वरसंज्ञम(l.1)जनयत् ॥ 34.

उत्पत्स्यते कंचन कार्यशेषं
निर्मातुकामस्तनयोस्य रामः .
सांवत्सरेभ्य इत्युदि(l.2)तानुभावं
मातामहस्तं स्वपुरं निनाय ॥

कंचित्कार्यशेषं संपादयितुमस्य राम उत्पत्स्यत इ(l.3)ति ज्योतिर्विद्भिः
कथितमाहात्म्यं तं सोमेश्वरं मातामहो निजनगरमनयत् ॥ 35.

सर्व(l.4)प्रकारं खलु संमुखोपि
तस्यानुरूपं तनयं विधाता .
विधातुमल्पप्रतिभो यदासी-
च(l.5)तो न तं सान्वयतां निनाय ॥

सर्वथानुकूलोपि विधिस्तस्य सदृशं पुत्रं कर्तुमनभिज्ञो(l.6) ध्रुवं यदा-
सीत्ततो राजानं सपुत्रतां नानयत् ॥ 36.

1 Is it नासन्? 2 Ms. यन्द°. 3 Ms. शेषं le. on top margin.

चतुर्मुखत्वे सदृशे विरिञ्चा-
द्विष्णोर(l 7)लूनाननताविशेषः ।
देवस्तु पञ्चाननताविशिष्ट-
ष्षडाननत्वं गुहमानिनाय ॥ 37.

प्र(l 8)कृष्टतामभ्यधिकामतोपि
स्रष्टुं पटुर्न ध्रुवमीश्वरोपि ।
अतः कुमारं विदधे कुमार(l 9)-
मैच्छन्न तन्न्यूनसमान्ववायम् ॥

विरिञ्चाद्ब्रह्मणस्सकाशाद्विष्णोस्सकाशात्पंचा(l 10)ननत्वेन महेश्व-
रोधिक. स च स्वपुत्रं कुमारं षण्मुखत्वमनयत् अतोपि कुमारादपि प्र-
(l 11)कर्षं कर्तुमीश्वरोपि ध्रुवमसमर्थ. अतः कुमारं कुमारमेव कृतवान्
कुमारादपि कु(l.12)मारपुत्रस्य विशेषकरणसामर्थ्याभावादीश्वरः कुमारं
ब्रह्मचारिणं कृतवानित्यर्थः(l.13) महेश्वरः कुमारं न्यूनोथवा समोन्ववायः
पुत्रो यस्य नैच्छत् ॥ 38.

इत्थं विरिञ्चमृपतिस्सम(l.14)-. 39.

[Lines 15 to end of page missing](**44)

कर्मसु धूर्जटिमीश्वरम् ॥ 40.

भविष्यतानेन विमानदातु-
र्हातुं धनेशान्नरयानलज्जाम्(l 1) ।
रामस्य पित्रा दुहितुस्सुतेन
सुतेजसा नन्दतु चक्रवर्ती ॥

धनेशाद्वैश्रवणान्नरयाने(l 2)न नरस्कंधाधिरोहणेन लज्जां हातुं त्या-
जयितुमिव विमानदातुः पुष्पकाख्यविमान(l 3)प्रविदायिनो रामस्य पित्रा

1 Ms 'रङ्गं' 2 Add तात्वं.

भवित्री भविष्यतानेन दौहित्रेण चक्रवर्ती तुष्यतु . जहातिरन्तर्भावि(1.4)-तण्यर्थः ॥ 41.

श्रुत्वेति दौहित्रमुखारविन्द-
लावण्यलक्ष्मीसहवासमत्ताम् .
विधाय(1.5) दृष्टिभ्रमरीं कथञ्चि-
त्तत्संमुखीं भूपतिराबभाषे ॥

दौहित्रमुखपद्मलाव(1.6)ण्यसमृद्धिसहवासेन मत्तां दृष्टिभ्रमरीं तस्य दैवज्ञस्य संमुखीं कृत्वा राजावदत् ॥(1.7) 42.

अश्रौषमेवं बहुधा बहुभ्य-
स्संदेहगेहं च मनो ममाभूत् .
तदस्ति किञ्चिन्नहि जी(1.8)वलोके
प्रियंवदानां न यदीरणीयम् ॥

बहुभ्यः सकाशाद्बहुधा चाहमेवं श्रु(1.9)तवान् मम मनस्तु सन्देह-स्थानमेवाभूत् चाटुकाराणां न किञ्चिदवाच्यं यतः ॥(1.10) 43.

षाड्गुण्यमन्त्री परमार्थतस्तु
प्रजापतेस्त्वं¹ प्रतिभाससे मे .
ललाटपट्टेषु कृतो नृ(1.11)णां वा
त्वं तेन लिप्यक्षरसूत्रधारः ॥

विधातुष्षाड्गुण्ये सृष्टिविषये व्यवहारे मन्त्री(1.12) उपदेष्टा त्वं भवसि . त्वमेव प्रजापतेस्सुखदुःखलेखनोपदेशं करोषीत्यर्थः य(1.13)द्वा प्रजापतिना त्वं लिपिलेखकरः कृतः . त्वमेव लिखसीत्यर्थः ॥ 44.

आज्ञां त्वदी(1.14)[यामनुवर्त्तमानः]
शरीरभाजां प्रसवप्रसङ्गे .

1 Ms. मत्रा. 2 Ms. °यञ्चि°. 3 Ms. °तेः त्वं°.

ज्योतींपि तीक्ष्णांशुमुखान्यमूनि(l 15)
—⏑—⏑⏑—⏑——॥

[प्रा]णिनां जन्मकाले त्वदाज्ञानुसारं सूर्यादिग्र(l.16)-········ ··
···णावन्मुमोच(l 17) 45.

[Lines 18 to end of page missing](*)

भरणान्तराणि ॥

संशय एव वंशस्तद्भेदं कृत्वा मुक्तारत्नसमयुक्तं वचनं सूच्यता(l 1)मुच्यतामत· यथा सन्देहो न भवति तथा कथयेत्यर्थः . यद्वा व्यादाय . स्वपित्यादिव्वि(l 2)दं द्रष्टव्यम् . मम हृदये स्थितेन येन भूषणान्तराणि त्याज्यत्वं प्रापुयु . त्वद्वचनमेव(l.3) भूषणभूतं हृदि धारयामीत्यर्थः ॥ 46.

सन्देहबीजमाह ॥

इदं हि तद्व्योमनि चित्रकर्म(l.4)
मरुस्थले श्रीसहजस्तरुर्वा ·
सूर्योदयो वा भुजगेन्द्रलोके
कलौ युगे यद्भुवि·कै(l 5)टभारिः ॥

हिर्यस्मादर्थे . कलिकालेपि विष्णुर्भूमौ यदवतरति तदिदमाकाशे चि(l 6)त्रं भवति मरौ पारिजातो भवति सूर्योदयो वा पाताले भवति . अतो मम सन्देह इत्यर्थः ॥(l 7) 47.

कस्यार्थं पुण्यानि तथाविधानि
प्रादुर्भवेयुश्चरमे युगेस्मिन् .
यस्याः करिष्यत्युदरं प(l.8)वित्रं
गङ्गाभुजङ्गादपि शार्ङ्गपाणिः ॥

1 Restore निधाय मे संशयवंशभेदं तत्सूच्यता मुक्तकरत्नयुक्तम्, भवन्ति मे येन हृदिस्थितेन त्याज्यानि सर्वाभ° ? 2 Ms. °स्थ°. 3 Ms. °प्नुभू°. 4 Ms. °स्माच. 5 Ms. °न्त्युद°.

इदमपि संशयबीजं हरिर्यस्या उ(l.9)दरं समुद्रादपि पवित्रं करिष्यति तस्याः कस्याः कलावपि पुण्यानि तथाविधानि (l.10) भवन्ति . यैस्संस्करिष्यत्युदरमित्यार्षः पाठः ॥ 48.

आरुह्य संकल्पविकल्पतल्पं
ज(l.11)ल्पन्तमित्थं जयदेवसिंहम् .
स्मित्वा विधातेव स मन्युमूर्ति-
र्मौहूर्तिकः स्फूर्तिम(l.12)दित्युवाच ॥

संकल्पाश्च विकल्पाश्च तदेव तल्पमाश्रित्य पृच्छन्तं जयसिं(l.13)हदेवं मौहूर्त्तिको ज्योतिर्विन्मन्युमूर्त्तिः प्रजापतिरिव किञ्चिद्विहस्योर्जितमेवमवो-(l.14)चत् ॥ 49.

दशावतारानुकृतिप्रगल्भैः
पुरा मुरारेर्दशभिश्शिरोभिः .
दिङ्मात्र(l.15)- 50.

[Lines 16 to end of page missing](**45)

⏑—⏑—⏑—⏑तस्थे .
तामुज्जहार त्वरितं स दृष्टिं
सर्वंसहां कोसलराजपुत्र्याः ॥

शोकाग्निना पीतेपि वृ(l.1)द्धिं गच्छति बाष्पसमुद्रे ब्रुडितां यासीत्तां कौसल्याया दृष्टिं सर्वंसहां शोकसहां स उद्धृ(l.2)तवान् सर्वंसहां भूमिं च हरिरुद्धृतवान् ॥ 51.

जीमूतकेशत्वदशोपपन्न-
सौदामिनी(l.3)सोदरपिङ्गलिम्ना .
ममार्ज बाष्पाम्बुनिपातपाण्डू
पादौ जटानां पटलेन चास्याः ॥(l.4)

---

1 Comm. जयसिंहदेवं. 2 Ms. समन्त°. 3 Ms. मूर्त्तिः lc. under l.13. 4 Ms. किंचि°. 5 Ms. °श्च:. 6 Ms. ब्रुडिता. 7 Restore शोकाग्निपीतेपि विवर्धमाने बाष्पाम्बुधौ या ब्रुडितेव तस्थे । 8 Ms. °मुन°. See pp. 16 and 42, note 2. 9 Ms. °मनी°.

जीमूतकेशत्वदशयोपपन्नसौदामिनीसोदरः पिङ्गलिमा यस्य तेन विद्युत्कपिशो(l 5)नेत्यर्थः. बाष्पजलपाण्डू मातुः पादौ रामो जटापटलेन शोधितवान् प्रणामं कृ(l 6)तवानित्यर्थः ॥ 52.

रामप्रणामानुपदं विमुक्तं
प्रणम्य सुग्रीवविभीषणाभ्याम्.
त(l 7)त्पादमेकं पवमानसूनु-
रन्यं सुमित्रातनयो ववन्दे ॥

रामस्य प्रणामानन्तरं सुग्रीविविभीषणाभ्यां प्रणम्य मुक्तमेकं कौसल्यायाः पादं हनुमानन्यं लक्ष्मणो वन्दि(l 9)तवान् ॥ 53.

त्वं मे महर्षे बहुमानभूमि-
रलं प्रणम्येति ससंभ्रमायाम्.
पादौ ज(l.10)नन्यामपसारयन्त्यां
जटाधरो लक्ष्मण इत्युवाच ॥

तपोधन मम त्वं बहुमानपात्रं भ(l 11)वस्यतः प्रणम्यालं मा प्रणामं कृथा इति संभ्रमसहितायां मातरि पादौ संहृ(l 12)एवत्यां सत्यां लक्ष्मण एवमबोचत् ॥ 54.

आर्यस्य कान्तारविहारकेला-
वहं सदानु(l 13)⁓⁓⁓⁓⁓.
समन्वयातः क्षणमेव दृष्ट्वा
विधीयतां मातरनुग्रहो मे ॥

आर्य(l.14)··············मनया दृष्ट्या हे मातः(l 15) 55.

[Lines 16 to end of page missing](*)

1 Ms. 'मुर'. 2 Ms. 'पा', 'दा' on margin. 3 Ms. 'ष्टवा.

ज्येष्ठानुरागाख्यनिधानकोशे
मुद्रानिवेशो निहितो हृदीव ॥

ततः कौसल्यया हृदि सु(1.1)क्ष्मं मेघनादपातितशक्तिव्रणचिह्नं[1] लक्षितम्. अतस्संभाव्यते श्रीरामविष(1.2)ये स्नेहनामनिधिकोशे न्यस्तो मुद्रानिवेश इव ॥ 56.

किमेतदित्याकुलया स्पृशन्त्या
पृष्टो(1.3)पि मात्रा न स किंचिदूचे.
द्रोणाचलेन्द्रोद्धरणोद्धुरोपि
नेमे च लज्जातिभरात्कपीन्द्रः ॥(1.4)

अयं स्पृशन्त्या व्याकुलया मात्रा किमेतदिति पृष्टोपि लक्ष्मणो न किंचिदुक्तवान् अय(1.5)चौषधाध्यानयनार्थं द्रोणाख्यपर्वतोद्धरणेनोद्धुरोपि हनुमांल्लज्जाभरादनमत्(1.6) मयि सत्यनेनायोचीति लज्जाभरः ॥ 57.

यथाभवत्तस्य च शक्तिपातो
धन्वन्तरिर्वायुसु(1.7)तो यथा च.
वितत्य रामेण तथा समस्तं
मातुः पुरस्तात्प्रतिपाद्यते स्म ॥

लक्ष्मणस्य श(1.8)क्तिपातो यथाभूद्यथा च हनुमान्विशल्यीकरणे धन्वन्तरिरासीत्तथा स प्रकारस्स(1.9)मस्तं विस्तरेण मातुरग्रे रामेण प्रतिपादितः ॥ 58.

स्तुतिर्जगत्प्राणसुतस्य के(1.10)यं
जागर्ति यत्प्राणयितुं जगन्ति.
हरिस्तथा भाति न कौस्तुभेन
यथामुना लक्ष्मण(1.11) लक्ष्मणा त्वम् ॥

---

1 Ms. सूक्ष्मं लक्ष्मणस्य crossed after °ह्नं. 2 Ms. °षे°. 3 Ms. °रपर्णो°. 4 Ms. °माह° 5 Ms. धान्व°. 6 Ms. °न्वरि°. 7 Ms. °तम्. 8 Ms. °गन्ति य°.

जगन्ति प्राणयन्तीति जगत्प्राणो वायुस्तस्य सुतो हनुमांस्तस्ये(1 12)यं का स्तुतिः यज्जगज्जीवयितुं हनुमाञ्जागर्ति . एतेन न केवलं हनुमता ल(1 13)क्ष्मणः प्राणितो यावज्जगन्त्यपि लक्ष्मणप्रत्प्राणयतीति प्रतिपादितम् लक्ष्मणे प्राणिते रामस्य······कार्याणा(l.14)············जीवनार्थं य- ······ ····(l.15) 59.

[Lines 16 to end of page missing](**46)

मनुजस्य सेवा-
मनुसरन्वाक्यमिदं बभाषे ॥

लीलयात्तो मनुष्यभावो येन स देवो राम.(l.1) कौसल्योक्तमेव श्रुत्वान्येन कर्तुमशक्यां लक्ष्मणस्य सेवां स्मरन्निदमवोचत् ॥ 60.

तिलकम् ॥(1 2)

मातर्मृषा प्रार्थयसे त्वमेवं
मत्पादृशीनां नहि तत्त्वमेतत् .
देवी भवानी किमु कार्त्ति(l.3)केय-
गाङ्गेययोः किञ्चिदवैति भेदम् ॥

हे मातस्त्वमेवं मृषा याचसे त्वादृशीना(1 4)मेतन्न युक्तं रामो मदीयो लक्ष्मणोन्यदीय इति यतो गौरी कुमारहेरम्बयोर्भेदं न जा(1 5)नाति ॥ 61.

आशंसनीयं तु ममेदमस्ति
यथाग्रजं मामनुजस्सिषेवे .
तथाहमस्या(1 6)नुजतामुपेत्य
सेवाविधानात्कृतनिष्क्रयः स्याम् ॥

---

1 Ms °न्त्यानि 2 Ms le on margin 3 Restore देव- ग लीलात्तमनुष्य-भावो रामोऽत्र वाक्यमिदं नियम्य । अनन्यकार्यमनु° (?) 4 Comm. युक्त°.

मम त्वेतदाकाङ्क्षणीयं यथा माम(l.7)ग्रजं लक्ष्मणोनुजस्सेवितवांनेवं लक्ष्मणस्यानुजो भूत्वा सेवनात्कृतर्णमुक्तिस्स्याम्. आ(l.8)शंसनीयमिति पाठो नार्षः ॥ 62.

एतस्य सेवां च चिरस्य कृत्वा
भावान्विदित्वा चणभङ्गिनोमून् .(l.9)
अनेन जूटस्य भरेण खिन्नः
काषायधारी भवितास्मि मुण्डः ॥

लक्ष्मणस्य सेवां चिरं कृ(l.10)त्वा तथामून्पदार्थान्क्षणनश्वरान्निश्चित्य जूटभरेण खिन्न इवाहं काषायधारी मुण्डः भविता मुण्डत्व(l.11)भंवनाह् ···में(?)स्याम्. बुद्धदर्शने काषायं वसनं मुण्डत्वं च धर्मः ॥ 63.

श्रोत्रप्रविष्टादिति भूतधात्री-
जा(l.12)मातृवाक्याद्विनयावनम्रः.
उन्निद्रकीर्त्तिस्तवकैकचैत्र-
स्सौमित्रिरित्थं कथयांचका(l.13)र ॥

उन्निद्राणां कीर्त्तिस्तबकानामेकश्चैत्रः कीर्त्तिं विकासयितेत्यर्थः श्रुताद्भूरणीजा(l.14)[मातृ रामस्य] वाक्याद्धेतोर्विनयावनम्रो लक्ष्मण एवमवोचत् ॥ 64.

पाथःकणाः पद्माचि(l.15)-— ⏑ ——
—— ⏑ —— ⏑ ⏑ — ⏑ ——.
—— ⏑ —— ⏑ ⏑ — ⏑ ——
[भू]यादयं मे सफ(l.16)[लः] ⏑ ——. 65.

[Lines 17 to end of page missing] (*)

भविष्यामि सहस्रमूर्धा ॥

---

1 Ms. 'विता'. 2 Ms. भवनाह on margin. 3 Ms. written above 'स्या'.
4 Ms. 'स्तव'.

अनेन भोगेन मम शोभा नास्ति अतोहमीदृशं भोगित्वं सर्पत्वं(1.1) भोगभाक्त्वं च प्राप्नुयाम् येन त्वत्पादपवित्रां भूमिं स्प्रष्टुं सहस्रं मूर्ध्ना शिरसां फणानां(1 2) च यस्य स स्यामित्यादरद्योतनम्. शेषो भवेयमित्यर्थ. ॥ 66.

इत्थं महीनाथ कथानवद्या
पु(1 3)राभवद्या पुरतो जनन्याः.
स्नेहानुबन्धादपि दाशरथ्योः
पफाल तस्यां प्रथमस्य वाक्यम् ॥(1.4)

हे राजन्मातुरग्रे या कथा पूर्वमभूत्तस्यां कथायां प्रथमस्य रामस्य वाक्य फलितम् ॥(1 5) 67.

तथा हि रामत्वमुपेयुपः प्रा-
ग्ज्येष्ठस्य निर्वाहितसाहचर्यः.
कृष्णः कनिष्ठस्स विवेक(1 6)निष्ठ-
स्तथागतत्वं प्रतिपन्न एव ॥

तथा हीत्यादि प्रथमवागुत्पत्तिपरम् हलधरभावं प्राप्त(1 7)स्य ज्येष्ठस्य भ्रातुर्लक्ष्मणावतारस्य संपादितसाहायक. कनिष्ठः कृष्णो बुद्धत्वं प्राप्तः ॥ (1 8) 68.

अपत्यरत्नद्वयसंनिधान-
निधानभूः कोसलराजपुत्री.
यथा भवित्री विदितं तथा(1 9) मे
यद्यावधानः क्षणमस्तु देवः ॥

कौसल्या द्वौ पुत्रौ यथा सूते तथा मम विदितमतो (1.10)राजा क्षणं सावधानो भवतु ॥ 69.

चक्षुस्त्रयाणां जगतामवामं
धामं त्रयाणामपि का(1 11)रणानाम्.

1 Ms 'त्व:. 2 Ms. 'पनी (?) 3 Ms पत्रौ.

योयं जयत्यत्रिमुनेरिवाब्धे-
रयोनिजं पुण्यमपत्यमिन्दुः ॥

यस्त्रयाणां(l.12) जगतामवामंमनुकूलं चक्षुस्तथा ब्रह्मादीनां कारणानां वामं चक्षुः तथात्रिमु(l.13)नेस्समुद्रस्य चायोनिजातमपत्यं चन्द्रोयं जयति ॥ 70.

मयाष्टधा लोकहिताय चक्रे(l.14)
कृता तनुष्षोडशधा त्वयैव .
इतीव यो मूर्धनि धारणीयः
परिश्रमज्ञेन महेश्वरेण ॥(l.15)

मया लोकानां हितार्थं प्रकृतिरष्टधा कृता अनेन चन्द्रेण पुनरेका····
··········(l.16) 71.

[Lines 17 to end of page missing] (**47)

पाणौ बिभर्त्ति हृदयेमृतकलशान्तर्बिभर्त्ति दृग्गोचरे वामनेत्रे बिभर्त्ति चन्द्रं कर्पूरमिव(l.1). मृत्युञ्जयस्य कर्पूरोद्धूलितस्यागमेप्यभिधानात्. अन्या लोकोत्तरा प्रादेशिकी न प्रदेशे ए(l.2)कंदेशे भवा भूपास्य चन्द्रस्य[4] भूषणत्वं भवति किंवद्रत्नवत् शोभामात्रं समानो धर्मः(l.3)चन्द्रमिवेति वान्वयः ॥ 72.

लोकार्थमष्टावपि मूर्त्तयोमू-
रतिप्रकृष्टा तु य एष मूर्त्तिः .(l.4)
कामं च कालं च हि सर्वकालं
यतोनुगृह्णात्यविरोधमीशः ॥

हरस्याष्टौ मूर्तयो भूम्या(l.5)द्यो लोकहितार्था भवन्ति एष यश्चन्द्रा मूर्त्तिर्भवति सा लोकहितार्थमतिप्रकृष्टा भव(l.6)त्ति अतो हेतोरीशः कामं

1 Ms. °ाप°. 2 Ms. °न्त्रि°. 3 Ms. °द°. 4 Ms. भूपा crossed after °स्य. 5 Ms. °न्द°. 6 Ms. °श. 7 Ms. सतोव°.

कालं च विरोधत्यागेनानुगृह्णाति . चन्द्रस्य कामोद्दीपकत्वात् काल(l.7)स्य तिथिसुखेन व्यवस्थितस्य चन्द्रेणैव संपादितत्वात् ॥ 73.

अखण्डितेच्छैरपि राजदारैः
प्रि(l.8)यान्तराश्लेषसुखं न लभ्यम् .
इतीव धन्याः प्रति दक्षकन्याः
प्राप्नोति नित्यं नवरूपतां यः ॥(l.9)

राजानो नृपा राजा चन्द्रश्च तत्प्रियाभिरैश्वर्येणाखण्डितेच्छाभिरपि नवनवदयितालि(l.10)ङ्गनसुखं न लभ्यते इत्यत इव भाग्यवतीस्ताराः प्रति यो नित्यं नवत्वं गृह्णाति कलानां च(l.11)याद्पचयाच्चेति भावः ॥ 74.

पक्षस्थिते दैत्यगुरौ विवादं
कृत्वा समं वाक्पतिनान्वयार्थे .(l.12)
य एव लेभे विजयप्रशस्तिं
श्रेयान्हि राज्ञः कविपक्षपातः ॥

चन्द्रस्य पक्षे स्थिते शुक्रे(l.13) सति बृहस्पतिना साकं पुत्रार्थं[1] विवादं कृत्वा य एव चन्द्रो विजयकीर्त्तिं लब्धवान् जी(l.14)·········तः बृहस्पति-चन्द्रयोर्विवादो जातः क्षेत्रिणो ममायं बुधः पुत्र इ(l.15)- 75.

[Lines 16 to end of page missing] (*)

प्रतिबिम्बिता भूर्यत्ततः कलङ्कः कलङ्क इति प्रवादो जातः . कलङ्कः कलङ्क इति द्विरुक्ति(l.1)र्वीप्साप्रतिपादनार्था ॥ 76.

चक्रे बलादाङ्गिरसाङ्गनापि
यदेनमेपोपि कथङ्कल(l.2)ङ्कः .
विहाय देवीं दमघोपसूनुं
न रुक्मिणी किं विधुमालिलिङ्ग ॥

1 Ms. 'र्थं'.

आङ्गिरसो जीवः(l.3) तस्याङ्गना रोहिणी साप्येनं बलाद्यद्वत्रेचकमत सोपि नास्य दोषः शिशुपालं त्य(l.4)क्त्वा रुक्मिणी विधुं विष्णुं किं नालिङ्गत् ॥ 77.

तुषारगौरादपि जातमस्मा-
त्सुत्रामरामा(l.5)श्रवणोचितेन .
इन्दीवरेणेव सुरस्रवन्ती-
ह्रदान्महानीलरुचा बुधेन ॥

शच्या श्रोतुमु(l.6)चितेन . सुरूपत्वादिति भावः . बुधेन महानीलकान्तिना यतो हिमशुभ्रादपि जातम्(l.7) यथा शचीकर्णपूरत्वोचितेन नीलोत्पलेन गङ्गाप्रवाहात् ॥ 78.

अङ्कस्पृशमित्यादि(l.8) बुधस्तुतिपरमनन्तरकुलकम् ॥

अङ्कस्पृशं यं परभागभङ्गी-
सौभाग्यहेतुं स्मरतेव(l.9) बालम् .
अद्यापि नीलोत्पलचारुनेत्रो
नोत्सृज्यते चन्द्रमसा कुरङ्गः ॥

बुधो नील इत्यतः(l.10) परभागभङ्ग्या सौभाग्यस्य हेतुमङ्कारूढं यं बालं स्मरतेव चन्द्रेण मृगोद्याप्यङ्कान्न(l.11) त्यज्यते नीलोत्पलदृष्टिः ॥ 79.

सितेन्दुमुक्तामणिजीवहीर-
भौमार्करक्तोपलगुम्फि(l.12)तो यः .
आकाशलक्ष्म्या इव कण्ठसूत्रे
सहार्किणा नीलमणित्वमेति ॥

सितेन्दू एव(l.13) मुक्तामणी जीव एव हीरो भौमार्कावेव रक्तोपलौ

1 Ms. °ह्री°. 2 Ms. °दशुभ्रा°. 3 Ms. °च्याग्श्रो°. 4 Ms. °शी°. 5 Ms. °स्प°. 6 Ms. ये.

पद्मरागौ तेषु गुम्फितो यो बुधः(l.14)·· ·········दलक्ष्म्याः कण्ठसूत्रे इन्द्रनीलभावमेति ॥ 80.

अल्पो महान्वां महसास्तु(l 15)

[Lines 16 to end of page missing](**48)

—न्निकटे स्थित इत्यर्थः. पुत्रा पितुः पार्श्वे वसन्तीति तात्पर्यम्. अयं बुधश्चन्द्रसकाशाद्व्यवहितो(l 1) यदास्ते तत्तस्मादहं मन्ये इति शेष.. जीवाद्गुरोरुपजीव्यादर्धीत्याय बुधो भूमिजे भौमे स्वकु(l 2)लजातराजोदेशेन बुद्धि ददाति. शनि पितुरसूर्यस्य सकाशाद्व्युत्क्रमेण पार्श्वे वसतीति नी(l 3)त्युल्लङ्घनप्रकाशनम् बुधस्तु चन्द्रात्क्रमेणैव तिष्ठति किन्तु भौमेन व्यवहितः तथाविधा(l 4) स्थितिः पुण्यार्थमेवास्य भवति. अयं हि गुरोर्नीतिमधीत्य भौमस्य प्रतिपादयति भौमेन(l 5) पुत्रेण नीतिर्भुवो वर्ण्यते सा च स्वपतीनां राज्ञां वर्णयत्यतो बुधस्य पुण्यम् ॥ 81.

रक्षःपराभू(l.6)त्यभयप्रदान-
प्रीतोर्वशीनिष्क्रयढौकितात्मा.
बुधप्रसूतिः पुरुहूतमित्रं
पुरूरवाः पार्थि(l 7)वचक्रवर्ती ॥

रक्षसां पराभूतिस्तयाभयप्रदानं तेन प्रीतयोर्वश्या निष्क्रयेण प्रत्युपकारेण(l 8) ढौकित आत्मा यस्य स पुरूरवा बुधपुत्रो वज्रिसखश्चक्रवर्ती बभूव. राक्षसेभ्यो रक्षितयोर्वश्या(l 9) स्वात्मा यस्य प्रतिपादितस्स पुरूरवा बुधपुत्र इत्यर्थ. ॥ 82.

शीतोष्णभावेन मिथो विरुद्धौ(l 10)
यां दीक्षितत्वेपि यदृक्षिपाताम्.
संतप्ततां तद्गुरुणो बभार
मित्रश्च जाड्यं मतिपद्यते स्म ॥(l 11)

1 Ms °न्दु° 2 Ms °न्ना 3 Ms °व्याधो° 4 Ms. °सोव°. 5 Ms. °नां.
6 Ms °नि° crossed after °व 7 Ms. प°.

वरुणश्शीतो रविरुष्ण इति विरोधिनावपि वरुणार्कौ दीक्षितावपि यामुर्वशीं यद्दृष्ट(1.12)वन्तौ तत्तो वरुणस्सन्तापमवहत् मित्रस्सूर्यो जाड्यं जडत्वमवहत् ॥ 83.

साप्युर्वशी प्रा(1.13)प्य तमुर्वरीशं
तथा च नोजन्मवशंवदाभूत् ।
अस्याश्शची पामरकामिनीव
यथा न सं(1.14)— ◡ ◡ — ◡ — ॥

पुरूरवसं प्राप्य साप्युर्वशीं तथा कामातुराभूद्यथा पामरस्त्रीव(1.15)
..................दित्यर्थः ॥ 84.

बहुष्वर्तीं — ◡ ◡ — — ◡ — —(1.16)। 85.

[Lines 17 to end of page missing] (*)

.........इन्द्रसमं पुत्रमिच्छतस्तस्य यैस्तपोभिर्हेतुभिः कुशिकस्य गाधिनामेन्द्रस्स्वयमेव जातः ॥ 86.

धर्तुं धरित्रीं(1.1) नवमो बभूव
नगाधिराजस्स न गाधिराजः ।
ऐन्द्रीषु यस्येष्टिषु शश्वदासी-
देकाश्रयस्त(1.2)र्पकतर्प्यभावः ॥

स गाधिराजो भुवं वोढुं नवमकुलपर्वत आसीत् काकासीदेवेत्यर्थः यद्वा स गाधिराजो नासीत्किं तर्हि नवमो नगाधिराजः इन्द्रयागेषु यस्य तं(1.3)र्पकतर्प्यत्वं चैकाश्रयमासीत् । स हि शक्रः तर्पकश्च स एव स एवे-न्द्रयागे तर्पणीयः ॥(1.4) 87.

---

1 Ms. याम्°. 2 Restore °सेषु. 3. Ms. यं° to °भिः lc. on margin.
4 Ms. न written below आ°. 5-5 Ms. lc. on top margin. 6 Ms. तत°.

को वेद तद्गाधिभुवस्स तत्वं
दधत्पुरस्तादपि राजतत्वम्.
अपारतो यस्तपसः प्रभावा-
त्सुव(l 5)र्णतां भावनयोपनीतः ॥

तत्तस्माद्धेतोर्गाधिभुवो विश्वामित्रस्य माहात्म्यं को जानाति यत्पू(l 6)र्वं राजतत्वं क्षत्रियभावमपि दधत्तपसोपारात्प्रभावाद्धेतोर्भावनया सुवर्णतां शोभन(l 7)वर्णत्वं ब्राह्मणत्वं नीतः. क्षत्रियोपि हि विश्वामित्रस्तपोमाहात्म्याद्ब्राह्मणस्संपन्नः. अथ च(l.8) यः पदार्थः पारदो न भवति राजतं रूप्यं सुवर्णं करोतीत्यपि विरोधाभासक. ॥ 88.

निन्ये ह(l 9)रिश्चन्द्रमधोगतिं य-
दुच्चैः पदं चागमयत्त्रिशङ्कुम्.
कोपप्रसादौ नृपगोचरौ त-
त्यक्त्वा(l 10)पि यो राज्यमपेक्षते स्म ॥

विश्वामित्रो हरिश्चन्द्रं यदधः कृतवांस्त्रिशङ्कुं च यदुच्चैः पदं(l.11) प्रापयत्तद्राज्यं त्यक्त्वापि कोपप्रसादावेवापेक्षते स्म नृपाणां गोचरौ राज्ञामेव कोप(l 12)प्रसादावुपयोगिनौ अयं तु राज्यं त्यक्त्वापि निग्रहानुग्रहोद्यतोभूदित्यर्थः उदारचे(l 13)तसा तेन तयोरेव राज्यफलत्वगणनादिति भावः ॥ 89.

स चक्रवर्त्ती भरतोपि जज्ञे(l 14)
—⏑—⏑—⏑⏑—न्दुगोत्रे.
राज्याभयं कर्तुमनेकवारं
पुलोमजा यस्य पुरे ययाचे ॥

स ह(l.15)- 90.

[Lines 16 to end of page missing](**49)

---

1 Ms येन°. 2 Ms. °परी°. 3 Ms °तप° written above °त्सुर°.
4 Doublet of पारत, See I 7. 5 Ms. °चरौ.

र्ण्यानकरं जघान .
इतीव यद्दोर्वनदन्तदन्ती
रामेण रामो दमयांबभूवे ॥

मम पूर्वपुरु(1.1)षस्सहस्ररश्मिः तस्य मम गणनकरं कार्तवीर्यमयं हल-वानित्यस्मादिव कार्तवीर्यभुज(1.2)वनमत्तगजः परशुरामश्रीरामेण दमितः. मत्तश्च हस्ती दम्यते ॥ 91.

द्वाभ्यां शताभ्यां स क(1.3)रैररौत्सी-
त्पंचाशता च ध्रुवमेकमेकम् .
नैकोपि पादश्चलति स्म येन
धर्मस्य तस्मिन्परिरक्ष(1.4)ति क्ष्माम् ॥

पञ्चाशदधिकशतद्वयसंख्यैः करैस्सहस्रबाहुः कार्तवीर्यो धर्मस्यैकमेकं पादं त(1.5)द्ध्रुवं रुद्धवान् यतस्तस्मिन्भुवं पालयति धर्मस्यैकोपि पादो नाचलत् ॥ 92.

कलिर्जजागा(1.6)र चुरिक्रियायां
कृतस्य दत्ताभय एष राजा .
तेनास्य पृथ्वीवलयप्रसिद्धिं
प्राचुर्यमूहे(1.7) कलिचुर्युपाख्या ॥

कार्तवीर्यस्य कलिचुरिरिति नाम प्रसिद्धं तत्र कविरन्वर्थतामूहते(1.8) चुर स्तेये इत्यस्य धातोः क्रिया चुरिक्रिया तस्यां हरणेर्थोत्स्कृतयुगस्य कलिरुद्यतः. कार्त(1.9)वीर्यः कृतस्य दत्ताभयः तेन ध्रुवं कलिचुरिसंज्ञा राज्ञो भूमण्डले प्रसिद्धिमवहत् ॥(1.10) 93.

तदीयमेधाभरणायमानं
क्रमागतं नाम समुद्वहन्तः .

---

1 Read संख्या°. 2 Ms. °रौ°. 3 Ms. पादं lc. on margin. 4 Ms. प्राधुर्य°.
5 Ms. तत्रा° written under दत्ता°. Is it तत्र दत्ताभयः ?

आसन्प्रवृत्ते कलिघर्मका(l.11)ले.
कालीवने केचन भूमिपालाः ॥

क्रमागतं भूपगणसमं तन्नाम धारयन्तः केचिद्राजा(l.12)नः कलिग्रीष्मे प्रवृत्ते सति कालीवनमावृण्वन्. ग्रीष्मे च वननिवासौचित्यम् ॥ 94.

तेषा(l.13)मगात्साहसिकाभिधानः
प्रधानभावं प्रधनाध्वगानाम्.
यस्य प्रसन्ना दृढशेसिलेखा
का(l.14)[लीव देवी रिपु]पार्थिवस्य ॥

प्रधने युद्धे पान्थानां तेषां मुख्यत्वं साहसिकनामा राजा(l.15)···
·········काली देवीव दृष्टा ॥ 95.

सत्वं विना साह(l.16)⏑—⏑——
—⏑—⏑⏑—⏑—.
——⏑—⏑⏑—⏑—
प्रनन्यगामिन्य(l.17)⏑—⏑—— 96.

[Lines 18 to end of page missing] (*)

मार्गणवयास्य साहसिकस्तपस्विने वामदेवनाम्ने निजराजलदर्शी गुरुदक्षिणार्थे दत्वा(l.1) सर्वा भूमिं जेतुं प्रस्थितवान् ॥ 97.

चूडामणेस्तस्य महीपतीनां
चूडामणिज्ञोपि न वेद तत्वम्.(l.2)
अहं हि दैवज्ञदृशानुगामी
दैवाभिगामी स [illegible] तत्प्रतापः ॥

चूडामणिनाम दैवज्ञशास्त्रं(l.3) तत्र निपुणोप्यहमस्य राजशिरोमणे-

1 Ms. 'ष'. 2 Is it नीयमा'?

स्तत्वं न जानामि यतोहं दैवज्ञस्तत्प्रतापस्तु दैवमप्य(1.4)तिवर्तते. यावान-स्य प्रतापस्तावान्वाङ्मनसातिक्रान्त इत्यर्थः ॥ 98.

यत्कार्मुकारोपणमात्र(1.5)यत्न-
सापेक्षमाशाविजयं विजानन्.
स भाग्यसंपत्परिवार एव
बभ्राम सामन्तशिखाम(1.6)णिर्गाम् ॥

धनुष्कर्षणमात्रप्राप्यं दिग्जयं जानन्स राजा भाग्यसम्पदेव परिवारो यस्य(1.7). केवल इत्यर्थः. स चक्रवर्ती भुवं यदभ्रमत् ॥ 99.

विधास्यतस्साहसमानुचर्या-
च्छायामपि च्छे(1.8)त्तुमिवास्य रात्रौ.
विरोचने चुम्बति पश्चिमायां
पपात जातु त्रिपुरी पुरस्तात् ॥

रात्रौ साहसं(1.9) करिष्यतोस्य च्छायामप्यनुचरत्वाच्छेत्तुं वारयितुमिव सूर्ये पश्चिमदिग्गते सत्यग्रे त्रिपुरी(1.10) नाम प्राप्ता ॥ 100.

अयं पृथिव्यामपि पादचारी
कष्टं द्विपात्सिंह इवैकवीरः.
सहस्रपाद(1.11)स्मि दिवि प्रयामि
कथं रथेनेति रविर्ननाम ॥

द्वौ पादौ यस्य सोयं सिंह इवाप्रतिमल्ल(1.12)वीरो भुवि पादाभ्यां चरति. रथादि त्यक्त्वा चरतीति यावत्. अहं सहस्रपादस्मि अतो दिवि रथेन (1.13)कथं गच्छामीत्यस्मादिव रविरदर्शनं गतः ॥ 101.

---

1 Ms. °मा°. 2 Ms. °तम्सा°. 3 Ms. °स्त्रा°.

चीर्णं चपाकान्तमशुद्धपक्षे
दृष्टुं विसृष्टे(l 14)रिव सागरेण .
प्रदीपितेजोत्रधदन्दशूकै-
रमुच्यत यौर्जलदैरकस्मात् ॥

कृष्णपक्षे क्षी(1.15)- 102.

[Lines 16 to end of page missing](**50)

कम्पितुमारम्भमकरोत् ॥ 103.

आजन्मनस्साहसंसादरत्वा-
त्स साहसस्यैव शुभं निमित्तम् .(1.1)
यथार्थनामा पिशुनं विदित्वा
घने घनं गर्जति नन्दति स्म ॥

नित्यं साहसकरणात्सार्थकनामा स(1.2) राजा सन्निमित्तं बाहुकम्पं साहसस्यैव सूचकं ज्ञात्वा घनं कृत्वा मेघे गर्जति सति साहसि(1.3)को राजातुष्यत् ॥ 104.

ततो घनानां निचयैर्निशातै-
र्निरशेषतस्तारकधाम्नि शान्ते .
निशातलुत्वान्नि(1.4)शशामं नादं
निकाममायाविनमेष वीरः ॥

निविडैर्मेघैस्तारकाणां धाम्नि स्थाने तेजसि(1 5) वा शान्ते निशावसानादत्यर्थं विस्तीर्णं शब्दमेष वीरश्श्रुतवान् ॥ 105.

अथ ध्वनेस्संमुख(1 6)मस्य गत्वा
भयानकेनेव रसेन पूर्णाम् .

---

1 Ms 'स्था. 2 Is it 'पने' ? 3 Ms. 'दमाद'. 4 Ms 'निनन्द' lc.
on top margin. 5 Ms गजति. 6 Ms. 'शास ना'. 7 Ms 'मस्य'.

श्मशाननामानमसौ गभीरां
पुर्यास्त्रिपुर्याः परिखां(l.7)मपश्यत् ॥ .

ततोस्य शब्दस्य संमुखं गत्वासौ भयानकेन रसेन पूर्णामिव त्रिपुरी-
नामनग(l.8)रीसम्बन्धिनीं श्मशानाख्यां परिखामपश्यत् ॥ 106.

प्राणोर्मीति कुलकम् ॥

प्राणार्थिहो(l.9)त्रीकृतकालकार्म-
पुरत्रयाख्याहुतिपंचकस्य .
तृप्तिर्नृकीटेन मयापि का ते
ब्रह्माण्ड(l.10)कोटीशतघस्मरस्य ॥

आकृष्टः पाशो यैस्तैः कालदूतैरिव खड्गहस्तैः पुरुषैः केशेषु गृ(l.11)-
हीत्वा महाकालायतनं प्रवेश्यमानमेवं क्रन्दन्तं स राजा ददर्शेति सम्बन्धः .
ग्रस्तकाल(l.12)कामत्रिपुराख्यपंचाहुतेस्तथा ब्रह्माण्डकोटीशतमासिनस्ते नृणां
मध्ये कीटेन मया(l.13) का तृप्तिः ॥ 107.

सर्वाङ्गशुद्धस्य सुधारुचेर-
प्यालोकयामो हृदि कालिमानम् .
त्रैलोक्यकर्णो(l.14)- 108.

[Lines 15 to end of page missing](*)

शेषोपि वलैकरूपो
गोरक्षणं साहसिकः करोति .

तव दर्शनं यद्यप्राप्तं तर्हि सहसा बले(l.1)न करणेन त्वयैव योप्र-
णीत्वं प्रापितः स प्रकाश्यताम् यो शेषो न शेषोपि वलैकरूपो वलसहायो
हलधरसमोयं साह(l.2)सिको गोरक्षणं भूमिरक्षणं करोति ॥ 109.

---

1 Ms. स्मशा°. 2 Ms. पणिपा°. 3 Ms. प्राजा°. 4 Ms. °काय°. 5 Ms. °नैको°.
6 The verse referred to by this part of comm. is lost in the lacuna at the end of the page. 7 Ms. °क° to °र° l.c. on top margin. 8 Ms. °मयोयसा°. 9 Ms. गोरक्षणं l.c. under l.8.

यः कोपि वा साहसिकोस्ति लोके
यस्यास्ति वा क्षत्रियतावदाता .(13)
कृपाकृपाणाभरणोस्ति यो वा
स पातु मां मृत्युभयादमुष्मात् ॥

यो वा साहसिको यो(14) वा शुद्धक्षत्रियो वा दयाखड्गभूषणो दया- मय इति यावत् सोस्मान्मृत्युभयान्मां रक्ष(15)[तु] ॥ 110.

[श्रुत्वेति त]त्कालगुरूभवद्भि-
र्मेघैस्स संक्रामणदीक्षयेव .
सौदामिनीदृष्टिभिरी(16)[क्ष्यमाणः]
——⏑निर्घोपमिदं बभापे ॥

तत्काले गुरूभवद्भिर्बहुलीभवद्भिश्च मेघै.(17)··············दर्यमाणः अत्रोत्प्रेक्ष्यते संक्रामणं वधनिषेधे प्रेरणं तद्दीक्षयेवेति(18)··········[उ]क्त- धात्······प्रतिपादनदीक्षाया हेतोश्शिष्यं दृष्ट्यां पश्यति(19)······॥111.

[अरे वराकाः करुण]प्रलापं
भाग्यैर्दशो गोचरमागतं मे .
विमुञ्चतेनं द्रुतमन्यथा चे-
त्तदा(110)⏑——⏑⏑–⏑दस्मिन् ॥

अरे वराकाः हे अधमाः करुणाक्रन्दिनं स्वभाग्यैर्मम(111)······ ······गोचरमेनं यूयं त्यजत तूर्णम् अन्यथा यदि न यूयं त्यजथ तदा(112) ··········शिनितं(?) वद्युष्माकमा·· ·· ति स्यात् युष्मानुपहरामीत्यर्थः सम(113)··············सेनापरिवारितम्···स(114) 112.

[Lines 15 to end of page missing](**51)

* * * * * * * * *

1 Ms °श्पाम° 2 Ms सोग°. 3 Ms °द्नी°. 4 Ms. °द्वन्य°. 5 Ms °ष्ठा. 6 Ms. °ग्येट°. 7 Ms °च्य°. 8 Ms °नप°. 9 Copyist's remark–पत ऊर्ध्वं त्रिचतुराणि पत्राणि गलितानीति भाति.

# [ सप्तमः सर्गः ]

* * * * * * *

गणेत्यपिशब्दार्थः . कुम्भोदरनामा भवान्या गणस्त्वं हिमाद्रिलतानां भवान्यां भगिनीनामिव य······[जाग](I.1)रुको भवसि ॥ 1.

अवलम्ब्य मृगाधिराजभावं व्रततीनामवता वनेभभङ्गम् ।
भंय—⌣⌣—⌣—(1.2)कदाचिद्विकृतं वासववारणो ररास ॥

सिंहरूपमभिनीय हिमाद्रिलतानां······[र](I.3)क्षता त्वया भयं प्रापित ऐरावणो विकृतं कृत्वा क्रन्दितवान् ॥ 2.

सदसि ध्वनितेन तेन ——⌣⌣—[न](I.4)व्यकथाप्रसङ्गभङ्गे ।
अशपद्द्विरदास्यशब्दशङ्काकुपिता पर्वतराजनन्दिनी त्वाम् ॥

······(I.5)न हरस्य कथाच्छेदे जाते गणपतिबृंहितमिति शङ्कया कुपिता गौरी त्वां सभाया·········(I.6) 3.

स्वरसेन यथा तथा वनेस्मिन्नसि राजेव समुद्यतो विहर्तुम् ।
परमेश्वरपाददूरवर्ती व्रज राजैव म(I.7)हीतले भवेति ॥

यथा तथानुवर्तिं स्वातन्त्र्येण राजेव क्रीडितुमस्मिन्वने यस्त्वं प्रवृत्तोऽतो महेश्वरपाददूरव(I.8)र्ती त्वं भूतले राजैव भव ॥ 4.

शनकैस्सुहृदा निकुम्भनाम्ना तव शापावधिमर्थिता भवानी ।
प्रचल(I.9)त्प्रतिबिम्बिताभ्रमुक्ता द्युनदीव प्रससाद चावदच्च ॥

1 Ms. 'रा'. 2 Ms. भवान्या lc. on top margin. 3 Is it भवता भयमापितः क' ?
4 Ms. 'राज. 5 Ms. 'तान'. 6 Ms. 'न्दनीत्व'. 7 Ms. lc. under l.7.

ततो निकुम्भसंज्ञेन त्वदीयेन सख्या सवि(l.10)नयं शापावधिमर्थिता सती गौरी लोलैरश्रैर्मुक्ता गङ्गेव प्रससाद च शापावधिं चावदत् ॥ 5.

उप(l.11)यास्यति भूमिपालभावं कलिकाले दशकन्धरातताथी .
इति निश्चलनिश्चयो यदासौ भविता स(l.12)म्भविता तदास्य मुक्तिः ॥

कलावपि श्रीरामो राजत्वं प्राप्स्यतीति सनिश्चयः कुम्भोदरो यदा भवि(l.13)ष्यति तदा शापमुक्तिरस्य भविष्यति ॥ 6.

गिरिजागिरमीदृशीं निशम्य व्यमृशस्त्वं न ममास्ति शाप(l.14)शान्तिः .
न हि कश्चिदय स्फुरत्युपाधिः पृथिवीं येन कलावुपैति रामः ॥

एवं गौरीवचश्श्रुत्वा त्व(l.15)मेवं विचारमका·············(l.16) 7.

[Lines 17 to end of page missing](*)

·· ··य[दृष्ट्]हीतं तन्नूनं तयैव वासनया लिप्तं त्वां मत्वा शत्रुहस्तिनो द्रष्टुं न शक्ताः ॥ 8.

गणकस्य गिरे(l.1)ति निर्विकल्पो नृपतिर्भूभरधारणानुतापम् .
उदकण्ठत नीलकण्ठलीलाष्टपलाङ्गूलनभ(l.2)स्वतापनेतुम् ॥

दैवज्ञोक्त्या त्यक्तविकल्पो राजा हरक्रीडावाहपुच्छवातेन भूभारोद्वहनताप निवा(l.3)रयितुमभ्यलपत् ॥ 9.

अजयत्पृथिवीभृतस्समस्तान्स पडङ्गेन वलेन सर्वकालम् .
झटिति स्फ(l.4)टिकाचलं मतस्थे वलमष्टाङ्गमवाप्य योगनिष्ठम् ॥

स पडङ्गेन वलेन सदा राज्ञोजयत् अष्टा(l.5)ङ्गयोगं प्राप्य स्फटिकाद्रि प्रस्थितवान् . राज्यादप्यधिकस्पृहो योगेभूदित्यर्थ . षड्भ्योष्टानामधिक(l.6)त्वादिति भावः पृथिवीभृच्छब्दस्य श्लिष्टत्वादुक्तिसंगतिः ॥ 10.

अथ गूर्जरराजमूर्जितानां मुकुटाल(l.7)ङ्करणं कुमारपालः .
अधिगत्य सुतासुतं तदीयं परिरक्षन्नभवद्यथार्थनामा ॥

1 Ms °हेम° 2 Ms. °लिना° 3 Ms. °म°. 4 Ms °ष्ट° 5 Ms. Read °ज क°. 6 Ms °स्य°.

तेजस्विनां चू(1.9)डारत्नं गूर्जरेन्द्रं तदीयं दौहित्रं प्राप्य रक्षन्कुमारपालस्सत्यार्थनामाभूत् . कुमारोऽप्राप्तराज्यो रा(1.9)जपुत्रस्सोमेश्वरस्तस्य पालनान्नाम सार्थकम् . कुमारपालस्तदीयो भ्रातृपुत्रः ॥ 11.

प्रथमस्सुध(1.10)वासुतस्तदानीं परिचर्यां जनकस्य तामकार्षीत् .
प्रतिपाद्यजलाञ्जलिं घृणायै विदधे यां(1.11) भृगुनन्दनो जनन्याः ॥

घृणायां प्रतिपाद्यो जलाञ्जलिर्यस्यां तां निर्घृणां यां परिचर्यां शि-(1.12)रश्छेदात्मिकां [पर]शुरामो मातुः कृतवांस्तां परिचर्यां पूजां ज्येष्ठस्सुधवापुत्रः पितुः कृतवान् . पितुश्शि(1.13)रश्छेदमकार्षीदित्यर्थः ॥ 12.

न परं विदधे वृथा गुणित्वं जनकं स्नेहमयं विनाश्य यावत् .
स्वय(1.14)मेव विनश्य गर्हणीयं व्यतनोद्दीप इवानुरागगन्धम् ॥

स्नेहमयं जनकं केवलं न विनाश्य······(1.15)············विनाशं मरणं प्राप्य············यथा(1.16) 13.

[Lines 17 to end of page missing](**52)

—यन्तुसादिपत्तिव्यवहारेषु विसारिणा चतुर्धा .
युधि वीररसेन शुद्धिमन्तं न समीपादमुचत्कुमार(1.1)पालः ॥

रथादिषु चतुर्भिः प्रकारैर्विसरता वीररसेन शुद्धिमन्तं तं कुमारपालस्त्वसमीपान्नात्यजत् ॥(1.2) 14.

हनुमानिव शैलतस्स शैलं द्विरदेन्द्राद्विरदेन्द्रमुत्पतिष्णुः .
छुरिकामपहृत्य कुङ्कुणेन्द्रं गमया(1.3)मास कबंधतां तयैव ॥

शैलाच्छैलं हनुमान्यथोत्पतिष्णुस्तथा हस्तीन्द्राद्धस्तीन्द्रमारोहन्स कुङ्कु(1.4)णेन्द्रादेव छुरिकां हृत्वा तयैव छुरिकया कुङ्कुणेन्द्रं कबन्धतां प्रापयत् ॥ 15.

---

1 Sic. Read °न्दस्त°. 2 Is it वृणायै ? 3 Ms. °वंणात्राप°: 4 Ms. °रच्छे°. 5 Ms. °कं. 6 Ms. कृत°. 7 Read °थिय°. 8 Ms. कुअरे° 9 Ms. गेला°.

इति साहससाह(15)चर्यचर्यस्समयज्ञैः प्र[तिपादि]तप्रभावाम् .
तनयां स सपादलक्षपुण्यैरुपयेमे त्रिपुरीपुर(16)[न्द]रस्य ॥

माहमाना माहचर्य चर्या यस्य स दैवज्ञैः कथितप्रभावां तेजलस्य सुतां कर्पूरदे(17)वीं सपादलक्षैः पुण्यैरूढवान् ॥ 16.

इतरेतरचित्रचौर्यचर्याचतुरत्वेपि निकामनिर्विकारम् .(18)
परमेश्वरयोस्तयोर्युगं तत्सुतरामेकशरीरतामयासीत् ॥

तयो· परमेश्वरयोर्महाराजयोरिश(19)वयोश्च युगं कर्तृ एकशरीरतामैक्यमभेदं चागच्छत् अन्योन्य चित्रस्य चौर्यचर्याहरणं तत्र जाग(110)रूकत्वेपि सति निर्विकारम् ॥ 17.

अविभावितभावभेदलेशौ निजनामादिपदाभिधेयकल्पैः .(111)
शिशिरीभवदाशयौ यशोभिः परितापं न कदाचिदूहतुस्तौ ॥

न विभावितोऽनुमितो भावस्या(112)न्योन्यरागस्य भेदलेशो ययोस्तौ तथा सोमेश्वरकर्पूरदेवीति निजनाम्नोरादिपदे सोमकर्पू(113)रशब्दौ तदर्थकल्पैर्यशोभिर्हिमीभवच्चेतसौ तौ तापं न · ··· ॥ 18.

अथ जातु हृदीव(114) सन्निधानं ददृशे स्वप्नविधौ विधातुकामः .
त्रि———————————————(115) पद्मनाभः ॥

हृदये स्थितिं कर्तुकाम इव स्वप्ने · ·········(116) 19.

उदयावसरे हरेरभेदं———(117) 20.

[Lines 18 to end of page missing](*)

य प्रतिपादयांचकार ॥

माश्चर्यचित्तो राजा तत्त्वप्रद्वयं सृष्टिकर्तुस्सकलकर्मसाक्षिणो ज्योतिर्विदेव(11)र्णयन् ॥ 21.

1 i e 'इत्यस्य देशस्य पुण्यै- (See VI- 10) 2 Ms 'शो. 3 Ms 'यथो 4 Ms 'वच'.

स जगाद यदैक्षत क्षपाग्रे क्षितिपस्तद्भविता चिरादमोघम् ,
यदुपस्यवलोकितं(l.2) तु देव्यां कलितस्तस्य न कालतोतिपातः ॥

राजा प्रदोषे यदपश्यत्तच्चिरेण सफलं भविष्यति(l.3) यत्तु देव्या प्रातर्दृष्टं³ तस्य चिरकालत्वं नाकलितम् ॥ 22.

उचितामिव वाडवाग्निमैत्रीं मकराङ्कस्थि(l.4)तितः करोति भौमः ,
गगने न ममास्ति कापि शोभेत्यधुना कुम्भमिवालसः प्रविष्टः ॥

मकरो रा(l.5)शिविशेषस्तस्याङ्को मध्यम् . मकराङ्कश्च समुद्रः . तत्र स्थित्योपपन्नां वाडवाग्निमैत्रीमिव भौमः क(l.6)रोति दीप्तो वर्तते इत्यर्थः . भौमस्य हि मकरराशिरुच्चस्थानम् . आकाशे मम न कापि शोभेत्यत इ(l.7)-वालसश्शनैश्चरः कुम्भं राशिविशेषं घटं च प्रविष्टः . अलसगामित्वादाकाशे शोभाभावः ॥ 23.

द(l.8)नुजारिमिवानुनेतुकामो दनुजानां गुरुरेति मीनराशिम् .
अधिरोहति मेषमेष पूषा तुरगा(l.9)णामिव खेदशान्तिकामः ॥

दनुजारिं विष्णुं प्रसादयितुकाम इव शुक्रो मीनराशिं समुद्रं(l.10) चैति तथाश्वानां विश्रमार्थमिवार्को मेषं राशिं······मध्यमधिरोहति॥ 24.

विहसन्निव मेषराशिनं तं(l.11) वृषभं याति वृषाङ्कशेखरोपि ,
उपलिप्सुरिवोभयस्वभावं मिथुनं संनिदधाति सोमसूनुः ॥(l.12)

मेषो हुडस्तद्गामिनं रविं हसन्निवेन्दुर्वृषं राशिमनड्वाहमपि आयाति वृषाङ्कशेखरस्त्वात्तस्य वृष(l.13)स्थितिर[चिता]··········स्थिररूपं प्राप्तुकाम इव बुधो मिथुने संनिहितः . द्विस्वभा(l.14)[व]·········[उभ]यो र्वीन्द्रोर्वा स्वभावमुपलब्धुकामो मिथुनं हि द्वन्द्वम् ॥ 25.

---

1 See Canto VIII, verse 46. 2 See p. 185, verse 31. 3 Ms. 'नंता'.
4 Ms. आवाति lc. under l.12. 5 Ms. 'न्दो'. 6 Ms. 'षु' etc. lc. under l.14.

तिमिरा(। 15)⏑⏑⏑⏑⏑मभ्युपैति .
पृथिवीम⏑वं शिखीति बुद्धया यजमानः(। 16) 26.

[Lines 17 to end of page missing] (**53)[1]

कुम्भाख्यराशिद्वये निपतनम्. अन्योपि स्वकार्यमन्येन संपादितं संभाव्य स्वगृहे निप[तणो भव](। 1)ति . तुङ्ग इति पाठो नार्थः तयो राश्योस्तयोस्तुङ्गत्वासंभवात् प्रकृतार्थाननुगुणत्वाच ॥ 27.

अ⏑⏑⏑(। 2)भिरेप दीप्तिमद्भिस्तपनाद्यैः कलिकालिकां विहाय .
ध्रुवमेकपदे कृतीयुभूपुर्नृप पश्चाग्नि [तपश्चरत्य](। 3)नेहा ॥

ध्रुवमयमनेहा कालः पञ्चाग्नि तपश्चरति . अत्र हेतुमाह . कृतीयुभूपुः कृतयु[गं भवितु](। 4)मिच्छुः कलिमालिन्यं त्यक्त्वा······भिर्दीप्तिमद्भिरु- ······ ··[कृ]ती कृतकृत्यो भवि[तुमिच्छ](। 5)ति स मलं त्यक्त्वा पञ्चाग्नि तपश्चरति ॥ 28.

इति शुद्धिमति क्षणेत्र गर्भे स्वयमाधत्त हरिस्त्वमेव दे(। 6)व्याः .
अचिराद्भविता पुरस्तदेषा क्षितिरुन्मूलितरामराज्यगर्वा ॥

एवं शुद्धेस्मिन्क्षणे देव्या गर्भे(। 7) विष्णुस्स्वयं स्वमात्मानमधत्ताहितवान् तत्ततो हेतोरेषा भूमिरचिरेण त्यक्तरामभद्रराज्यदर्पा पुरो भ(। 8)विष्यति . रामराज्यादप्यधिकस्य विभवस्य प्राप्तेः ॥ 29.

इति वादिनमादिनात्रसानं वसनाल(। 9)ङ्करणादिदानचर्यैः .
परितः परितोष्य पार्थिवस्तं गणकाग्रेसरमुत्सवं चकार ॥

एवं वा(। 10)दिनं तं गणकं वस्त्रादिभिस्संमान्य राजा प्रदोषं यावदुत्सवमकरोत् ॥ 30.

---

1 Ms. only one letter 'मि' or 'नि' in the middle of l 17. 2 Ms. 'कालि' lc under l.3. 3 Ms. lc marks here but no lc. on margin. 4 Ms. 'यु'. 5 Ms. 'नम'.

गणितासु गतासु या(1.11)मिनीषु प्रजगल्भे मुखपाण्डिमा स देव्याः ।
उदरं विशतो हरेरपश्यत्स्वपती नाभिज़ुषो य(1.12)मम्बुजस्य ॥

स्वपती शयालुस्तोदरं प्रविशतो विष्णोर्नाभिस्थस्य पद्मस्य यं पाण्डिमानमपश्यत्स मुखपा(1.13)ण्डिमाल्पासु रात्रिषु गतासु सतीषु संक्रान्त इवेत्यर्थः ॥ 31.

शनकैश्शनकैश्शशाङ्कमुख्याः कृशभा(1.14)वोत्रयत्रेषु सार्वभौमः ।
उदरस्य महार्घता भविष्यत्यतिरिक्तेत्युदपादि चिन्तयेव ॥

उदरस्या(1.15)धिका महार्घता भविष्यतीति चिन्तयेव कर्पूरदेव्या अङ्गेषु शनैश्शनैः कृशत्वमखण्डितमु(1.16)त्पन्नम् ॥ 32.

अपरेपि महस्विनः पृथिव्यां व्यवहर्तुं न यथारुचि क्षमंते ।
इति गर्भगुणानिवाभ्यध(1.17)त्त क्रमशोस्याः प्रतिपद्य मान्द्यमग्निः ॥

अन्येपि तेजस्विनो यथारुचि यथाभिप्रायं यथार्दी(1.18)प्ति च भुवि व्यवहर्त्तुं न समर्था इत्येतान्गर्भगुणानिव जठराग्निर्मन्दतां प्राप्याभ्यधात् ॥ 33.

अ(1.19)चिरात्तव नन्दनस्य भोज्या निखिला भूरिति भूखवती जनेभ्यः ।
यदसेवत मन्दयापि रुच्या [मृद](1.20)मास्वादमिवैत्तत चिंतेस्तत् ॥

रुचिर············थापि मन्दाग्निरपीत्यर्थः············(1.21)भि-···यद्बुभुजे तन्नूनं सा त············(1.22)······ती भूमेरास्वादं सा सर्व··········· 34.

～～～～～～～～～～～～～～～～～～～～～～～～(1.23*)
उदरेण चिरेण जातमस्यास्त्रिवलीविप्रतिपत्तिपण्डितेन ॥

य एकमेव वलं वलाख्यमसुरमभिनत्तस्ये(1.1)न्द्रस्यायुधं वज्रस्तस्य

1 See above, verses 19 and 22. 2 Ms. °चिवे°. 3 Ms. °बुवे, 4 Ms. °न्दु°. 5 Ms. °मुरम° lc. on margin.

साम्यं त्यक्तवतां उदरेण जातमिति भावे क्तः . तिस्रश्च ताः(1.2) वल्यस्त्रिवल्यः त्रयाणां वलानां समाहारास्त्रिवली त्रिवलीनां त्रिवल्याश्च विप्रतिपत्तौ पराभवे(1.3) [पण्डि]तेन . एकवलभेदी यस्तस्य त्रिवलीभेदिना सह महदन्तरम् ॥ 35.

हरिमध्यरुचिं जयत्यधस्ता(1.4)त्सति मध्ये करिकुम्भकल्पयोर्नौ .
अभवच्छुचिरद्य सास्ति नेति स्तनयोरश्यामुखत्वमाविरासीत् ॥(1.5)

हरिः सिंहस्तस्य मध्यमुदरं तस्य शोभां क्रान्त्वा जयत्युदरेऽधस्तात्सति हस्तिकवाटसदृशयोराव(1.6)योर्या शोभा पूर्वमासीत्साद्य नास्ति. गर्भेण मध्यस्य स्थौल्यादिति भावः . इतीव स्तनयोरश्याममुखत्वं(1.7) चूचुकाग्रकार्ष्ण्यं कालमुखत्वं चासीत् ॥ 36.

मुखमग्रिमुशन्ति यस्य सन्तो भविता तेन पुनः स्तनन्धयेन .(1.8)
नृपवामदृशस्तु पूर्वमेव स्तनयोश्श्यामिकया मुखं चुचुम्बे ॥

सन्तोऽग्निं यस्य मुखमुपदिशन्ति(1.9) तेन विष्णुना पुनः पश्चात्स्तनपायिना भविष्यते श्यामिकया तु देव्याः स्तनयोर्मुखं प्रागेव चुम्बि(1.10)तम् . अग्नि. कृष्णवर्त्मा स यत्र प्राप्नोति तत्र पश्चाच्छ्यामिका भवति अत्र तु विपर्ययः ॥ 37.

विनिवे(1.11)शयति स्म यत्र चास्मात्कथमप्युत्क्षिपति स्म पादयुग्मम् .
सुचिरस्य स्तुवेव भाविवध्वा प्रतिवि(1.12)न्यासमतिप्रणम्यमानम् ॥

सा यत्र च स्थाने पादद्वयमक्षिपदस्मात्स्थानात्सा पादद्वयं कष्टेनोद(1.13)त्क्षिपद्भाविन्या स्नुपया सुवा न्यासे न्यासे प्रणम्यमानं कृतप्रणाममिव ॥ 38.

रविणा शशिनं भृतं(1.14)कलाभिस्सकलैरेव करैरिवार्पिताभिः .
दधतीं कमलां सहस्रपत्रे स्वमुखस्योपरि सा द(1.15)दर्श सुप्ता ॥

---

1 Ms. वक्रादपि कृर्मेनरपः crossed after °ता. 2 Ms. °वं°. 3 Ms. °सदृयो°.
4 Ms °नम्°. 5 Ms. °च्छा°.

सकलैस्सहस्रसंख्यैः करैरर्पिताभिस्सहस्रसंख्याभिः कलाभिर्भृतं पूरि-(1.16)तं चन्द्रमिव सहस्रपत्रं पद्मं स्वमुखस्योपरि धा[रयन्तीं लक्ष्मीं साप]-श्यत् ॥ 39.

ज्वलदा(1.17)ननलम्बिदन्दशूकं विहगं जातु ददर्श हेमपत्रम् .
विगलद्यमुनार्कबिम्बदिग्धं पुरतो(1.18) मेरुमधीरतामिवाप्तम् ॥

ज्वलति दीप्ते आनने लम्बी दंदशूकस्सर्पो यस्य तं तथा हे(1.19)मम-यपक्षं विहगं गरुडमधीरतामाप्तमपश्यत्. अत्रोत्प्रेक्ष्यते विगलती यमुना य(1.20)·········बिम्बेन दिग्धं सहितं सुमेरुमिव . गरुडस्थानीयो मेरुः अर्कस्थानीयं मुखम्(1.21) [सर्प]स्थानीया यमुना ॥ 40.

वलयीकृत[भोगशेषतल्प]स्थितमात्मानमलक्षयत्कदाचित् .(1.22)
[गुरुगर्भभरोष्मणः शमाय त्वरितं]—⏑ ⏑——⏑—[प्रविष्ट]म् ॥

सा देवी आत्मानं वलयी(1.23**54)कृतो भोगः कायो येन तथाविधे शेषे एव तल्पे स्थितमपश्यत् अतस्संभाव्यते गुरुर्यो गर्भभर(1.1)स्तेन ऊष्मा तापस्तस्य शमार्थं तूर्णं चन्द्रमण्डलमिव प्रविष्टम् ॥ 41.

स्वमवैक्षत चन्द्रकान्तशाला(1.2)वलभीशृङ्गनिषण्णं कदाचित् .
उपदर्शनवाञ्छयोपनीतं धवलद्वीपमिवोदरस्थिते(1.3)न ॥

सा जातु स्वात्मानं चन्द्रकान्तमये शालावलभीशृङ्गे निषण्णमारूढ-मपश्यत् अतस्सं(1.4)भाव्यते उदरस्थितेन हरिणा दर्शनार्थं श्वेतद्वीपमिवा-नीतम् ॥. 42.

अथ पुष्पशरस्य बन्धुमन्यं(1.5) पृथिवीं माधवमभ्युपैष्यतीति .
उपयोगमपश्यतीव किञ्चित्स्वगतं गच्छति माधवे सीमा(1.6)सिम् ॥

1 Ms. °स°. 2 Ms. °म्बीदशू°. 3 Ms. °रु°. 4 Ms. पुरो° crossed and °म° written under it. Is it °मं पुरोप° ? 5 Ms. lc. mark after °तं: 6 Ms. म°. 7 Ms. has ९. on margin. 8 Ms. भाण्ड. 9 Ms. °मय°. 10 Ms. °वस्स°.

जनकत्वादुद्दीपकत्वाद्वान्यं लोकोत्तरं कामस्य बान्धवं विष्णुं भूः प्राप्स्यतीत्य(। 7)तस्त्वात्मानमनुपयुज्यमानं पश्यतीव माधवे वैशाखे समाप्तिं गते ॥ 43.

तमसः प्रशमाय(। 8) सत्त्वमूर्त्तेरवतारावसरं विविञ्चतीषु .
कलिबन्धुतयेव बिभ्रतीषु कृशिमानं क्रमशस्तम(। 9)स्विनीषु ॥

कलिबन्धुभावेन हेतुना तमस. पापस्यान्धकारस्य च शमनार्थं सत्व-मूर्त्तेर्विष्णोरवतारसमयं विमृ(। 10)शन्तीष्विव तमस्विनीषु रात्रिषु कृशिमानं तुच्छत्वं क्रमेण धारयन्तीषु. तमस्विनीष्विति सा(। 11)कूतम् ॥ 44.

अचिराद्दिवसेश्वरस्य वंशः परमामृद्धिमवश्यमेष्यतीति .
दिवसेषु विकस्वरीभव(। 12)त्सु स्मयमानेषु च पुष्कराकरेषु ॥

सूर्यवंशोचिराद्वृद्धिं प्राप्स्यतीत्यत एव दिनेषु वर्धमा(।.13)नेषु सत्सु पद्मसरस्सु च विकसत्सु सत्सु ॥ 45.

नरकद्विपि भूधरोज्जिहीर्षाजुषि सोमेश्वरवल्लभोदरस्थे(।.14) .
अलसालसगामिनीव शून्यं जलधिं द्रष्टुमिवाक्षमे दिनेशे ॥

दिनेशेऽलसालसं(। 15) गच्छति सति अतस्संभाव्यते भूमिभारोद्धर-णेच्छाधारिणि हरौ देवीगर्भस्थिते शून्यं संप(। 16)न्नं जलधिं द्रष्टुमसमर्थे ॥ 46.

सलिलेपि शयालुना विमुक्ता नृपदारोदरगोचरे(। 17)ण निद्रां .
दिवसेष्वनुगन्तुमाविशन्त्यामिति तस्याममुमेव जीवलोकम् ॥

समुद्रे उचित(। 18)निद्रेणापि नृपदाराणामुदरे गोचरो यस्य तेन समुद्रे निद्रा त्यक्तेति तस्यां निद्रायामर्थाद्विष्णुं(। 19)मेवानुगन्तुममुं जीवलोकं दि-नेष्वाविशन्त्याम् ॥ 47.

---

1 Ms °मनुमनर्षि°. 2 Ms क° to °ना lc under l 9 3 Ms विवन्तिषु 4 Ms. ■° to °पि lc on margin 5 Ms °षु च after °धे 6 Ms. °न्यपण्णो°. 7 Ms गुरु° crossed after °ण निद्रा on margin 8 Ms °नुम°. 9 Ms मुमेवधि lc. after °न्तु° on margin Is it °न्तु मुमेविद्ये° ? 10 Ms °मनु°. 11 °मनु° crossed after °न्तु°.

निवसत्यपरत्र पुष्करा[क्षे सकलं मा स्म](1.20) पिबत्पयोधिमौर्वः.
इति हैमवतीभिरद्भिरर्कं तमिवापूरयितुं विशत्युदीचीम् ॥

अन्यत्र(1.21) विष्णौ वसति सति वडवाग्निरशेषं समुद्रं मा स्म पिब-
दित्यत इव हिमाद्रि············(1.22)पूरयितुमुत्तरादिशं रवौ प्रविशति
सति ॥ 48.

मणिदीपपतत्पतङ्गमालाद ⏑——⏑ [विभा](1.23)वितानुभावैः.
प्रविवेश पुरः कृतप्रवेशं शकुनैरि ⏑ ⏑ — ⏑ — ⏑ —.

·······[प](1.24*)तन्तीनां पतङ्गमालाना············विभावितो
दृष्टोनुभावः स्वभावो येषां तैश्शकुनैराश्रितं म(1.1)नोहरं सूतिकावासं देवी
प्रविष्टा ॥ 49.

ज्येष्ठत्वं चरितार्थतामथ नयन्मासान्तरापेक्षया
ज्यैष्ठस्य(1.2) प्रथयन्परन्तपतया ग्रीष्मस्य भीष्मां स्थितिम्.
द्वादश्यास्तिथिमुख्यतामुपदिशन्भानोः प्रतापो(1.3)न्नतिं
तन्वन्गोत्रगुरोर्निजेन नृपतेर्जज्ञे सुतो जन्मना ॥

ज्येष्ठे मासि निजेन जन्मनोत्पत्त्यान्यमासे(1.4)भ्यो ज्यैष्ठमासस्य ज्येष्ठत्वं
यथार्थतां कृतकृत्यतां नयंस्तथा परन्तपतया वैरितापनेन च ग्रीष्मस्य भीष्मां
स्थितिं कुर्वन्द्वा(1.5)दश्यां जन्मना तस्यास्तिथिषु प्राधान्यं दिशन्गोत्रादेर्भानोः
प्रतापौन्नत्यं कुर्वन्सुतो राज्ञो जातो ज्येष्ठत्वं(1.6)·········[इ]ति व्याख्यानं
न संगच्छते ज्यैष्ठ इति व्युत्पत्तिसिद्धेः ॥ 50.

निश्शेषाणां शिवा(1.7)नामुपरि कृतपदस्साहचर्याधिकारी
सर्वस्यास्तीर्थजातेस्सकलसुरतरुग्रामणीसो(1.8)दरश्च.

1 Ms. 'धिमोपः. 2 Ms. 'न्त्युदी'. 3 Ms. 'वहाग्ना'. 4 Ms. 'वैः. 5 Ms. 'ग्रामा'.
6 Ms. 'ष'. 7 Ms. 'वौ'. 8 Ms. ष' to 'तां i.e. under 1.4. 9 Ms. 'यस्त'.
10 Ms. सुतंराज्ञोतो'.

वालः कोप्येप राजंत्वमुपगतवानित्यकस्मात्सरस्व-
त्यस्मिन्नुत्पन्नमात्रे मुंखमल(। 9)मकृत व्योमंमूर्त्तेर्मृडस्य ॥

मर्वेपा शिवानां श्रेयसामुपंरि कृतं पदं चरंणं(। 10) येन तथा सर्वतीर्थानां साहचर्याधिकारी तुल्यः पवित्रत्वात्सर्वेषां कल्पवृ(। 11)क्षप्रधानानां सोदरश्चैप वालः कोप्यद्भुतोपूर्वो राजा चंन्द्रश्चेति सरस्वती वीणी व्योमंरूपस्य(। 12) भगवतो मुखमभूपयन्. आकाशाद्वागुच्चरितेत्यर्थः. चन्द्रो ह्येकस्यैव शिवस्य शिरसि(। 13) स्थित. अयं तु सर्वेपां शिवानां. चन्द्रो गङ्गाया एकसहचर अयं तु मर्वस्यास्तीर्थ(। 14)जातेः. स पारिजातस्यैव सोदरः अयं तु सर्वेपां कल्पवृक्षाणामिति भद्रम् ॥(।.15) 51.

श्रीश्रीकण्ठचरित्रकाव्यविवृतौ विश्वस्य निश्वस्य च
च्छायाभाजि किरातकाव्यविवृतौ वि(।.16)श्रम्य [रम्य]श्रियि.
पृथ्वीराजजयाख्यकाव्यविवृतौ मंवेशमिच्छाम्यहं
शास्त्रौघजले(। 17)दमेदुरमतिर्ज्योत्स्नाकरो लावणिः ॥

श्रीलोलराजसुतपण्डितभट्टनोन-
राजा(। 18)त्मजो विवरणेन स जोनराजः.
सर्गं सुखं व्यधित सप्तममत्र पृथ्वी-
राजाख्यराजवि(। 19)जयाभिधंकाव्यराजे ॥

पृथ्वीराजविजयविवरणे सप्तमस्सर्गः ॥(। 20)

---

1 Ms राजा° 2 Ms. सु°. 3 Ms व्योत्र°. 4 Ms प्रेयमांसुप° 5 Ms. Copy leaves space between सु° and °प°. and before °ये but no letter seems missing. 6 Ms °रव 7 Ms वा° 8 Ms °वे. 9 Ms °जे च° 10 Ms. वर्जी. 11 Ms व्योस°. 12 Ms. °तिज्यो°. 13 Ms. °द°.

# [ अष्टमः सर्गः ]

अथ शब्दगुणं व्योम सत्यमित्यवदन्निव ।
सङ्गीतकभसङ्गेन पुरन्दरपुराङ्गनाः ॥

अ(1.21)थाप्सरसो[1] गीतातिशयेनाकाशं शब्दगुणं सत्यमित्यकथयन्निव ॥ 1.

दिव्यदुन्दुभिजीमूत(1.22)—————भाविनी ।
पुष्पवृष्टि[र]रोचिष्ट किञ्जल्कतडिदुज्ज्वला ॥

दिव्यदुन्दुभिरेव जी(1.23)··········नी तथा किञ्जल्क एव तडित्तयोज्ज्वला पुष्पवृष्टिरशोभत ॥ 2.

पुष्पवर्ष(1.24)मिलद्दिव्यभृङ्गपक्षसमीरणैः ।
[प्रमृ]ष्टानीव यान्ति स्म दिङ्मुखानि प्रसन्नताम् ॥(1.25**55)

पुष्पवर्षे मिलन्तो ये दिव्यभृङ्गास्तेषां पक्षवातेन प्रमृष्टानीव दिङ्मुखानि प्रसादं प्रापुः ॥(1.1) 3.

ईत्यन्तं कुलकम् ॥

सनाथां पृथिवीं मत्वा राजपुत्रस्य जन्मना ।
रजोऽपि परपृशुस्तस्यास्त्रासा(1.2)दिव न मारुताः ॥

राजपुत्रेण जातेन सस्वामिकां पृथ्वीं[3] संभाव्य भयादिव वायवो रजोऽपि भूमेर्न [प](1.3)स्पृशुः ॥ 4.

अकाण्डे न प्रवेष्टव्यं भजास्विति हविर्भुजा ।
मृत्युर्न्ययम्यतेवार्चिःकराग्रैर्दक्षिणामु(1.4)खैः ॥

---

1 Ms. °प्सरो. 2 Ms. पु° to °त lc. under 1.25. 3 Ms. has पृ. on margin. 4 See verse 10 below. 5 Ms. स्तस्मा°. 6 Ms. °ष्ट पृथ्वीं lc. under 1. 3.

भवता प्राणिषु प्रवेशोसमये न कार्य इत्यग्निना दक्षिणाभिर्ज्वालाहस्तैर्निषिद्ध(l 5) इव . यमस्य दक्षिणाशापतित्वाज्ज्वालानां दक्षिणाप्राणां निषेधकत्वमुचितम् ॥(l 6) 5.

स्ववंश्यमेलकोत्कर्ष पश्यन्तौ शशिभास्करौ .
यशःप्रतापवैशद्यदीप्तिपात्रीवभूवतुः ॥(l 7)

निजकुलजातयोस्संगमेनोत्कर्ष पुत्रजन्मलक्षणं पश्यन्तौ यशःप्रतापाभ्यामिव वैशद्यकीर्त्योः पात्रीवभूवतु. ॥(l 8) 6.

गुणवद्भिर्धृता लक्ष्मीः पद्मैरस्मत्प्रसूतिभिः .
इति वैमल्यमाजग्मुरव्याजं सलिलाशयाः ॥(l.9)

अस्मज्जातैर्गुणिभिः पद्मैश्च श्रीर्धृतेतीव सरांसि वैमल्यं गुणं प्रापुः॥ 7.

विभाव्य स्वामिनः प(l 10)त्नीं समुत्पन्नजगन्निधिम् .
भूरप्यसूययेवाभूद्दूरोद्भिदुरशेवधिः ॥

समुत्पन्नो जग(l 11)न्निधिर्विष्णुर्यस्यास्तां महिषीं विमृश्य स्पर्धयेव भूरपि प्रकटीकृतहेमकुम्भाभूत(l.12) . हेमकुम्भप्रादुर्भावोक्तिर्यालरक्षणौचित्यादत्यर्थ संगच्छते ॥ 8.

धर्मकर्मक्रियाविघ्न(l.13)हरे जाते नृपात्मजे .
प्रसेदे यजमानानां न केषामन्तरात्मना ॥

यज्ञादिविघ्नहरे(l 14) पुत्रे जाते सति सर्वेषां याज्ञिकानां चित्तेन प्रसादः प्राप्तः तज्जन्मना चेतः प्रसन्नमभू(l 15)दात्मनः प्रसन्नत्वादिति भावः ॥ 9.

इति विष्णुमयं मूर्त्तिभेदं मानुषतां गतम् .
मत्वेव दे(l 16)वदेवस्याप्यनन्दन्ताष्टमूर्तयः ॥

---

1 Ms. 'हाप्र. 2 Ms. 'कपु'. 3 See Supra, Canto I. 34. 4 Ms lc. under lc 7. 5 Ms. दीप्त्योः on margin. 6 Ms. 'तैषु'. 7 Ms. श्रीर्धृ'. 8 Ms lc under l.10 9 Ms. यज्ञि'.

हरिमवतीर्णं मत्वाष्टमूर्त्तेरष्टौ मूर्त्तयोतुष्यन्निवेत्थम्.(1.17) क्षित्यादीनां रजोभावादावानन्दोत्प्रेक्षणम् ॥ 10.

नृत्यन्तीनां सुरस्त्रीणां त्रुट्यद्भिर्हारदाम(1.18)भिः.
जेतुं मरुत्तसम्राजं मुक्तावर्ष इवाभवत् ॥

नृत्यवशाच्छिन्नैर्हारैर्हेतुभिर्मुक्ता(1.19)वर्षं मरुत्तं राजानं जेतुं जितं कर्तुमिवाभूत्. अन्तर्भावितण्यर्थोत्र जयतिः ॥ 11.

प्रक्रान्त(1.20)मित्याद्यष्टभिः कुलकम् ॥

आहृतैर्व्योमगङ्गातो वातेन कनकाम्बुजैः.
नृत्तप्रवृत्तनागा(1.21)रिभ्रंष्टपत्राङ्किता इव ॥

आकाशगङ्गातो वातेनानीतैस्सुवर्णपद्मैर्हेतुभिर्नृत्यद्[रुद्र](1.22)पतत्पक्षभूषिता इव ॥ 12.

स्वनितेन मृदङ्गानामप्सरो[नृत्त]योनिना.
लक्ष्मीमहो[त्सवोत्साह](1.23*)गर्जदैरावता इव ॥

अप्सरसां नृत्ते जातेन मृदङ्गशब्देन हेतुना श्रीमहोत्सवे उत्साहेन गर्जन्नै(1.1)रावणो यासु. पत्युरवतारान्महोत्सवः. स्त्रियो हि भोगलम्पटत्वाद्भर्त्तारमनेकरूपमिच्छन्ति.(1.2) ऐरावणस्य गर्जनं लक्ष्म्या गजवाहत्वात् ॥ 13.

नृत्यदेववधूवक्त्रगलद्धर्माम्बुशीकराः.
पृथिवीं(1.3) सुधया सेक्तुं प्रवृत्तेन्दुशता इव ॥

नृत्यन्तीनामप्सरसां मुखेभ्यो गलन्तो घर्मकणा यासु ताः(1.4) भूमिममृतेन सेक्तुं वर्षितुं प्रवृत्तानीन्दुशतानि यासु ता इव ॥ 14.

---

1 One verse missing. See Notes. 2 Ms. °तमांसाज्यां. 3 Sic. It should be प्रक्रान्तेमन्त्रमष्टाभिरित्यन्तं for there are 10 verses, not 8. 4 Ms. °रिभ्रं°. 5 Comm. °वणः. 6 Ms. °वृष्टेन्दु°. 7 Ms. भुमि°.

उत्सवालोकनायातब्रह्महं(1.5)सपरिच्युतैः .
पत्त्रांशैर्विगलत्पूर्वराजकीर्त्तिच्छटा इव ॥

उत्सवस्य वीक्षणार्थमागतस्य(1 6) ब्रह्मणो हंसेभ्य· पतितैः पत्तकर्णैर्हे-
तुभि पतन्ती पूर्वराजानां कीर्त्तिच्छटा याभ्यः . सत्कीर्त्त्यपेक्ष(1 7)या पूर्व-
राजकीर्त्तेरल्पत्वाद्विगलनम् ॥ 15.

ध्वनिभिर्दिव्यशङ्खानामसंख्यैर्मुखरीकृताः .
स्वं(1.8)कुल्यैः पाञ्चजन्यस्य गीयमानगुणा इव ॥

अगणितदिव्यशब्दमुखराः पाञ्चजन्यस्य वं(1 9)श्यैर्हेर्गुणा गीयमाना
यासु ॥ 16.

अनभ्रंवर्षपूर्पतः प्रसवद्भिस्सहस्रधा .
पटवास(1 10)कषायाक्षचन्द्रांशुकलुषा इव ॥

मेघान्विना वर्षकणे. पतद्भिस्सहस्रसङ्ख्यैः कर्पू(1 11)रादिक्षोदकलुपित-
नेत्रेन्दुवाप्पाविला इव ॥ 17.

दास्यत्यानन्दितो भास्वान्कस्मैचिद्यदि वा(1 12)जिनः .
तदनूरुगतिः का स्यादिति वाचालचारणाः ॥

स्वकुले हरेरवतारेण हृ(1.13)ष्टोर्कः कस्मैचिद्यश्वान्दास्यति तदाऽवि-
द्यमानोरोररुणस्य गतिः केति सुरचारणाः ॥(1 14) 18.

प्रगीतरोहिणीवक्षःप्रसभारोहणोत्सुकम् .
स्वलाञ्छनमृगं रोद्धुमपि व्यग्रसुधाकराः ॥(1 15)

गातुं प्रवृत्ताया रोहिण्या मुखे बलेन रोहणे लुब्धं स्वाङ्कमृगं रोद्धुं
सुधाकरोऽपि व्यग्रो(1.16) यासु ॥ 19.

---

1 Ms कीर्त°. 2 Is it सकु° ? 3 Ms पाञ्ज°. 4 Read °व्यगह्ना°.
5 Ms °नन्°. 6 Ms °चक्रा°. 7 Ms °त्तन्दान्दितो 8 Ms °जिन.
9 Ms °एए, 10 Ms. °कर.. 11 Ms क्षस्य.

प्रसृतैर्मृगशीर्षस्य चन्द्रशुद्धान्तसीमनि .
स्वगीतपरगीताभ्यामानन्दाम्बुभि(l.17)रुक्षिताः ॥

चन्द्रावरोधेषु निजगीतेन परगीतेन च निर्गतैर्मृगशीर्षस्य हर्षबाष्पै(l.18)-
स्सिक्ताः ॥ 20.

प्रमोदाम्बुप्रवाहेण देवानां क्षालिता इव .
अतिप्रसन्नतां जग्मुर्गलत्क(l.19)लिमला दिशः ॥

देवानां हर्षबाष्पस्रोतसा धौता इव दिशो गलत्कलिमलो याभ्यस्ताः
(l.20)[प्रसा]दं प्रापुः ॥ 21.

प्रक्रान्तमेवमष्टाभिर्दिक्पालैः प्रमदोत्सवम् .
सुतैस्तद्वीर्यपिण्डस्य नृ(l.21)[प]तिर्निरवाहयत् ॥

एवं लोकपालैरारब्धं पुत्रस्य संबन्धिनमुत्सवं तेषां लोकपालानां(l.22
f.56[b])वीर्यस्य पिण्डस्य राशेः पुत्रस्य राजा समापयत्. पिण्डस्य चाष्टा-
ङ्गानि[7] ॥ 22.

[अदेयमपि यत्] मादादनर्थिभ्योपि पार्थिवः .
अशो(l.1)धयदृणं पित्र्यमिति किं नाम कौतुकम् ॥

अदेयं छत्रचामराद्यप्ययाचकेभ्योपि राजादान्(l.2) पितॄणामृणमशोधय-
दिति नाश्चर्यम्. पितरो ह्यर्थिनः पितॄणां चर्णशुद्धिरवश्यं कार्या. अ(l.3)यमर्थः
ऋणमस्मै सन्नयतीति[8] वाक्यात्पुत्रे जाते पितुरृणान्मुक्तिः. पित्रा गृहीतं च
ऋणं(l.4) पुत्रश्शोधयतीत्यर्थान्तररर्णितम् (?) ॥ 23.

ददाने नृपतौ रत्नचामीकरकरम्बकम् .
विमुक्ति(l.5)मौक्तिकप्रायैरपि वर्द्धैरवाप्यत ॥

1 Ms. °तैश्रुग°. 2 Ms. चन्द्र°. 3 Ms. °त्क°. 4 Ms. °मिनि°.
5 Ms. पृ on margin. 6 Ms. राधि:. 7 °न्च, °मस्य, पिण्डस्य चाष्टाङ्गानि lc.
above l. 1; पृ° lc. under l. 1. 8 ऋणमस्मिन् संनयति Aitareya Br. 7.13.4,
Shānkhāyana Shr. Sutra, 15.17. 9 Ms. °त्रैधते. 10 Is it °त्यर्थान्तर-
भणितम् (!)? The figure is पर्यायोक्ति.

राज्ञि रत्नादि ददति वंद्धैराभरणीकृतैर्हारादिभिर्विमुक्तिः कण्ठा(16)दे-रवरोहणं प्राप्तम् निजकण्ठहारा अपि दत्ता इत्यर्थः . अपि शब्दात्कारावद्धानां मुक्ति.(17) किमर्थमाख्यायते इत्यर्थापत्तिरार्थी ॥ 24.

उद्यत्कर्पूरकस्तूरीकश्मीरजरजश्छलात् .(18)
मुक्त्वेव वैरमन्योन्यं दृष्टं ज्योत्स्नातमोरुणैः ॥

उत्तिष्ठत्कर्पूरादिधूलिव्याजाज्ज्योत्स्नादिभिर्वैरं त्यक्त्वा(19)न्योन्यमिव दृष्टम् . तत्कालं भयवशात्सर्वै राजादिभिर्वैरत्यागः कृत इति भावः ॥ 25.

असाध्य(110)मित्यादि कुलकम् ॥

असाध्यं कोशतां प्राप्तैर्मेरुरोहणसागरैः .
अशक्यं निधिनाथे(111)न कोशाध्यक्षत्वमीयुषा ॥

असाध्यमित्यादि महोत्सवविशेषणम् . कोशीभूतैर्मेरुमुखैः करणैरन्ये-(112)नासाध्यं कर्त्तुमशक्यं तथा कोशाध्यक्षेण वैश्रवणेनाशक्यम् ॥ 26.

कष्टं कल्पद्रुममयैर्निष्पा(113)द्यमपि निष्कुटैः .
क्रीडाद्रिभिरनिर्वाह्यं चिन्तामणिमयैरपि ॥

कल्पवृक्षकृतैर्गृहारा(114)मैः कष्टेन संपाद्यम् चिन्तारत्नमयैश्शैलैरप्य-शक्यम् ॥ 27.

अवाप्ते कामधेनूनां विराट्त्वे(115)पि दुर्घटम् .
रक्षाभिरपि दुस्साधमणिमादिभिरष्टभिः ॥

कामधेनूनां विराटत्वे वि(116)राटराजभावे प्राप्तेप्यशक्यम् . सरागाभि-रप्यष्टभिरणिमादिभिस्सिद्धिभिरशक्यम्. शक्ति(117)भिरित्यार्षः पाठः ॥ 28.

---

1 Ms वन्धै. 2 Ms "हारा.भि" le under 16. 3 Ms "जच्छ". 4 Ms. "सैत्र. 5 Ms "भिर्रे". 6 Ms."तैमे" 7 Ms "रिभि". 8 Ms. "श्राप्य" corrected to "रक्षाय". 9 Ms प्राप्ते le on margin. 10 Where can it fit in the text ? "रिभि शक्तिभि would be no worse than "रिभि मिद्धिभि ! Or, is some one criticising the commentary ?

स्वप्नकर्षपरीक्षार्थमुपदिष्टमिव श्रिया .
निर्माय पृथिवीपालः पु(1.18)त्रजन्ममहोत्सवम् ॥ 29.

पृथ्वीं पवित्रतां नेतुं राजशब्दं कृतार्थताम् .
चतुर्वर्णधनं नाम पृ(1.19)थ्वीराज इति व्यधात् ॥

स्वमाधिक्यं दर्शयितुं लक्ष्म्येवोपदिष्टं पुत्रजन्ममहोत्सवं कृत्वा रा-
(1.20)जा भूमिं पवित्रयितुं राजशब्दं च चरितार्थतां नेतुं पृथ्वीराज इति
चतुरक्षरं पुत्र[ना](1.21)माकरोत् ॥ 30.

पूर्णैः पुण्यैस्तमुत्सङ्गे कृत्वा कारणमानुषम् .
पूर्णपुण्याभवद्धा[त्री·पवित्र](1.22)त्वमवाप च ॥

म्लेच्छवधेन कारणेन मानुषं तं पृथ्वीराजं पूर्वपुण्यैरगण्यैरङ्क·······
···(1.23*)············पूता चाभूत् ॥ 31.

यथाकामार्पितार्थित्वं यद्बालस्यैव[1] पप्रथे .
तन्मन्ये सुरभिस्स्तन्यं तस्मै धात्रीतनुर्ददौ ॥

तस्य बालस्यैव सतोर्थिनां कामपूरणं[2] यत्प्रसिद्धं तस्मादहमेवं मन्ये
धात्रीरूपा कामधेनुस्तस्मै स्तन्यमदात् . स्तन्यप्रदानानुसारेण बास[3]ना-
नुषङ्गात् ॥ 32.

स्तनं श्रीखण्डधवलं कस्तूरीलिप्तचूचुकम् .
पपौ दक्षिणपूर्वाभ्यां दि[4]ग्भ्यां सारमिवार्पितम् ॥

श्रीखण्डेनेव श्वेतं कस्तूरीलिप्ताग्रं स्तनं स पीतवान् दक्षिणपू[5]र्वा-
भ्यां दिग्भ्यामर्पितमिव सारम्. तयोस्तदुत्पत्तेः ॥ 33.

बभौ स्तनस्य गौरस्य मुखे गृह्णन्स[6] चूचुकम् .
कलङ्करूपं हृच्छल्यं शशाङ्कस्योद्धरन्निव ॥

---

1 Ms. इवा. 2 Is it 'पिता' (Raghu, I.6)? 3 Ms. 'स्मै le. under 1. 8.
4 Ms. 'क्षणु'. 5 Ms. पू.

गौरस्य स्तनस्य चूचुकमाम्ये गृ(l 7)हणन्म हृच्छल्यं कलङ्कं चन्द्रस्यो-द्धरन्निवाशोभत. स्तनश्चन्द्रत्वेन चूचुकं कलङ्कत्वेन संभावितम्.(l 8) मुग्ध-मिति पाठो न तथार्प. ॥ 34.

तस्य धात्रीकुचाज्जातु कुङ्कुमं वदनं विशत्.
गाढतां शा(l 9)रदादेशानुरागं हृदयेनयत् ॥

धात्रीस्तनान्मुख प्रविष्टं कुङ्कुम कर्तृ शारदादेशे(l 10)नुरागं मूर्त्तता-मिव चित्ते नीतवान् ॥ 35.

वंशशुक्त्युद्भवान्धात्रीहारमुक्तामणीन्स्पृशन्.
गि(l.11)रिसागरसारस्य ग्राहित्वं तत्करोग्रहीत् ॥

वंशाच्छुक्तेश्चोत्पन्नान्धात्रीहारमणीन्स्पृशंस्त(l.12)त्करोऽग्रिमपुद्रमारमा-हित्वं गृहीतवानिव. स्तन्यपाने हि कण्ठभूषानिरोधो बालानां स्व(l 13)-भाव: ॥ 36.

ताम्रपर्णीव तद्धात्री स्तनयोस्संनिधिं व्यधात्.
मौक्तिकानीव निर्यान्ति वदनाद्व(l 14)दतोस्य यत् ॥

तद्धात्री स्तनविषये ताम्रपर्णीव संनिधानमकरोत् यतो वदतोस्य मुखा(l 15)न्मुक्ताफलानीव निर्गच्छन्ति. अव्यभिचारगतार्थत्वादनुपात्ते वचनरूपे विषये मुक्तानां((l 16) विषयित्वम्. वदतस्सेति(?) पाठ आर्प: ॥ 37.

अव्यक्तवर्णया तस्य भाविन्या शुद्धवर्णया.
स(l 17)रस्वत्या च लक्ष्म्या च मुखपद्ममचुम्ब्यत ॥

वर्णशब्दोऽक्षराणां यशसश्च वाचक:. वा(l 18)ल्येनाव्यक्तवर्णया पुरत-

1 Ms 'शोभत Ic. under l 8 2 Correct नीतवान्. 3 Ms 'गृहीं'.
4 cf. 33 above 5 Ms 'टने'.

श्शुद्धवर्णया भविष्यन्त्या सरस्वत्या लक्ष्म्या च तस्य मुखपद्मं चुम्बितम् (1.19). सरस्वत्या मातृत्वाल्लक्ष्म्याः प्रियात्वाच्चुम्बनमुचितम् ॥ 38.

अव्यक्ता न तथा भाति न व्यक्तापि त(1.20)[था] यथा .
व्यक्ताव्यक्तेन रूपेण रुरुचेस्य सरस्वती ॥

अतिबाल्येनाव्यक्ता बाल्यातिक्रमे च(1.21) व्यक्तास्य वाङ् तथा भाति यथा किञ्चिद्व्यक्तेन रूपेण वाक्शुशुभे . रुरुचेति पाठ आ[र्षः](1.22) . सरस्वती नदी चेत्यर्थान्तरध्वनिः . तत्पक्षे अव्यक्तं मुक्तयेकपदं परव्याप्तिकं च व्यक्तं(1.23**57) भोगैकपदमपरव्याप्तिकं चेत्यागसिकार्थे·········(1.1) 39.

[सर्वलो]केक्षणप्रिया .
रवेरिवाविशिष्टार्थकरपादा गतिक्रिया ॥

ईक्षणं दर्शनं नेत्रं च तत्र सर्व(1.2)लोकानां प्रिया तथार्थः प्रयोजनं पद्मार्थश्च सोविशिष्टो यस्य तत्करपादं यस्यां सास्य ग(1.3)तिः रिङ्खणं शुशुभे ॥ 40.

जितराजीवलावण्ये मनोज्ञस्खलनाकुला .
मुखे व्यक्तिं ययौ तस्य(1.4) वाणी पादद्वये गतिः ॥

पद्मसुन्दरे मुखपादद्वये चास्य गतिर्व्यक्तिं गता स्खलनं वर्णव्य(1.5)-त्यासः पतनं च तेनाकुला यतस्ततो मनोज्ञा च ॥ 41.

शुकेष्वध्याप्यमानेषु धात्रीभिस्तेन भू[रि](1.6)शः .
पर्वते पर्वते राम इत्याकर्ण्योन्मनायितम् ॥

पर्वते पर्वते राम इति वचनं धात्री(1.7)भिश्शुकेषु पाठितेषु तच्छ्रुत्वा तेनोत्कण्ठितचित्तेन संपन्नम् . पूर्वजन्मस्मरणादिति भावः ॥ 42.

---

1 Ms. °पद्मं lc. under line 19. 2 Which, then, is the अनार्ष reading ? 3 Ms. पू: रा. on margin. 4 Is it °र्थस्याप्रस्तुतस्य ध्वननम्? 5 Ms. रणा°. 6 Ms. सोविशि°. 7 Ms. °द्वये lc. under l. 5. 8 Ms. °विव्य°.

द(1.8)शावताराभरणं कण्ठे रक्षार्थमाहितम् .
अनन्यरक्षमात्मानमशंसत्तस्य रक्षितुः ॥(1.9)

अस्य बालस्य रक्षार्थं[1] कण्ठे स्थापितं दशावतारसंज्ञमाभरणं कर्त्तृ
तस्य रक्षितुरात्मा(1.10)नं नान्यस्माद्रक्षा यस्य तमशंसत् . हरेरेव दशा-
वतारत्वात् अस्य च नारायणांशता(1.11)त्वात् ॥ 43.

त्रैलोक्यरक्षकस्यास्य किमर्थोऽसीति कान्तिमान् .
स्वेनैव स्वं जहासेव कण्ठे व्या(1.12)घ्रनखाङ्कुरः ॥

त्रिभुवनरक्षितुरस्यास्मि निष्प्रयोजन इत्यसौ व्याघ्रनखो दीप्तिसारा-
(1.13)त्मनैवात्मानमहसदिव ॥ 44.

चूडाकरणसंस्कारसुन्दरं तन्मुखं बभौ .
पाश्चात्यभागसंभा(1.14)व्यलक्ष्मेव शशिमण्डलम् ॥

पश्चाद्भागे सकलङ्कमिवेन्दुबिम्बं तन्मुखं चूडाकर्म(1.15)शोभनं बभौ ॥45.

अत्रान्तरे पुनर्देवीवपुः प्रैक्षत पार्थिवः .
स्वप्नदृष्टभुजङ्गेन्द्रभोगका(1.16)न्त्येव पाण्डुरम् ॥

राजा देवीगात्रं स्वप्ने दृष्टस्याहिराजस्य भोगकान्त्येव पाण्डु पुनरप-
श्यत्(1.17) ॥ 46.

प्रसूतपृथिवीराजा देवी गर्भवती पुनः .
उदेष्यत्कुमुदा फुल्लपद्मेव सरसी बभौ ॥(1.18)

जनितपृथ्वीराजनामपुत्रा पुनर्गर्भिणी देवी बभौ उद्भेत्स्यमानकैरवा
फुल्लपद्मेव(1.19) सरसी ॥ 47.

अन्तर्वर्त्नी विशेषेण देवी पुत्रेण पिप्रिये .
ज्येष्ठानुष्ठितसंस्कारं गर्भस्थेने[व पा](1.20)ठिता ॥

1 Ms. 'पं माहितस्य'. 'माहित' corrected to कण्ठे. 2 See VII. 22.
3 Ms. 'दे'. 4 Ms. 'न्सर'.

सगर्भा महिषी तेन पुत्रेणाधिकमतुष्यत् गर्भस्थितेन पुत्रेण ज्ये[ष्ठ-
······शि](1.21)चितेव ॥   48.

माघस्याथ तृतीयस्यां सितायामपरं सुतम् ·
प्रसादमिव [पार्वत्या मूर्तं प](1.22)रमवाप सा ॥

मूर्त्तं गौर्याः प्रसादमिव सा द्वितीयं पुत्रं गौरीतृतीयस्यामवाप-
[त्] ॥   49.

——(1.23*)—— ⌣ ———————— ⌣ ——— .
———पदानां यत्कृतार्थत्वाय पस्पृशे ॥

यु(1.1)द्धेष्वस्य हस्तिदलनलीलां भविष्यन्तीं जानतेव हरिराजनाम्नायं
स्वस्य कृतार्थत्वाये(1.2)व स्पृष्टः . हरिराजो हि हस्तिमर्दनः ॥   50.

उष्णशीतलयोर्मध्ये पावनं ज्येष्ठमाघयोः ·
सोमे(1.3)श्वरभुवोर्जन्म वह्निगङ्गाम्भसोरिव ॥

सोम उमासहित ईश्वरः सोमेश्वरो राजा च तद्भुवोर्ग(1.4)णेशकुमार-
यो राजपुत्रेयोश्चोष्णशीतयोर्ज्येष्ठमाघयोर्मध्येग्निगङ्गाजलयोरिवं जन्म पाव-
नमभूत् ॥(1.5)   51.

निदाघमाघजन्मभ्यां पीत्वां(?) तीव्रत्वमाययौ ·
ताभ्यामातपशीताभ्यामिव प्रत्यर्थिकर्णयोः ॥(1.6)

निदाघे माघे च जन्म ययोस्ताभ्यां राजपुत्राभ्यामातपशीताभ्यामिव
वैरिकर्णयोः पीत्वां(1.7) तीव्रत्वं प्रापत् ॥   52.

अथ भ्रातुरपत्याभ्यां सनाथां जानता भुवम् ·
जग्मे विग्रहराजेन कृतार्थेन शि(1.8)वान्तिकम् ॥

---

1 Sic.   2 Ms. गो°.   3 Ms. °जापु°.   4 Ms. °नामृ°. जन्म पावन° lc on margin.   5 Sic. Is it पीडा ?

ताभ्यां भ्रातृपुत्राभ्यां रक्ष्यमाणां भूमिं जानता विग्रहराजेन कृतकृत्येन सता शि(1 9)वसमीपं प्राप्तम् ॥ 53.

सुतोप्यपरगाङ्गेयो निन्येऽस्य रविसूनुना ।
अन्तिं रविवंशस्य पृथ्वीराजे(1 10)न पश्यता ॥

वीरत्वब्रह्मचारित्वाभ्यां द्वितीयो भीष्मो विग्रहराजस्य पुत्रो यमेन नीतः पृथ्वी(1 11)राजेन हेतुनार्कवंशस्यौन्नत्यमिव पश्यता ॥ 54.

कैलासं जग्मुषो यातं पश्चाद्विग्रहभूभुजः ।(1.12)
कविबान्धव इत्येकं भूयावशरणं पदम् ॥

मृतस्य विग्रहराजस्य पश्चात्कविबान्धव इत्येवं(1 13) पदमशरणं यातं सम्पन्नम् ॥ 55.

प्रत्यानेतुमिवाकाण्डे पूर्णोपि सकलैर्गुणैः ।
अपितृर्वैरि(1 14)तनूजोपि प्रवस्थे पृथिवीभटः ॥

विग्रहराजं प्रत्यानेतुमिव गुणवान्पृथ्वीभटोपि प्रस्थितः ॥(1 15) 56.

मुक्तेति सुधवावंशं गलत्पुरुषमौक्तिकं ।
देवं सोमेश्वरं द्रष्टुं राजश्रीरुदकण्ठत ॥

गलन्ति(1 16) पुरुषा एव मौक्तिकानि यत्र तं सुधवावंशं त्यक्त्वा राजलक्ष्मीस्सोमेश्वरं द्रष्टुमुत्कण्ठिताभूत् ॥ 57.

आत्म(1.17)जाभ्यामिव यशःप्रतापाभ्यामिवान्वितः ।
सपादलक्षमानिन्ये महामात्यैर्महीपतिः ॥

यशःप्र(1 18)तापाभ्यामिव पुत्राभ्यां सहितो राजा महासचिवैस्सपादलक्षनामानं देशमानीतः ॥ 58.

---

1 Ms. °स्यो°. 2 Ms. °त्यक 3 Ms. °व. 4 Ms सदा°.

कर्पूर(l.19)देव्यथादाय दानभोगाविवात्मजौ .
विवेशाजयराजस्य संपन्मूर्त्तिमती पुरीम् ॥

मूर्त्ता श्रीरिव(l.20) [कर्पू]रदेवी दानभोगप्रविव पुत्रौ गृहीत्वाजयराजस्य नगरं प्रविष्टा ॥ 59.

तस्यां प्रविष्टमात्रायां(l.21) [गङ्गायामि]व सागरः .
देशस्संपूर्णभावं च पावनत्वं च लब्धवान् ॥

यथा गङ्गायां समुद्रस्त(l.22)[था तस्यां] प्रविष्टायामेव देशास्संपूर्णतां पावकतां च प्रापत् ॥ 60.

त्यक्त्वा पितुर्गिरा राज्यं यत्र रामो(l.23) [वनं ययौ] .
कुलं कलङ्कयांचक्रे तदाद्यैः सुधवासुतः ॥

यस्मिन्कुले रामः पितुराज्ञया रा(l.24**58)ज्यं त्यक्त्वा वनं गतः तत्कुलमाद्यस्सुधवासुतोदूषय[त्] ॥ 61.

[सुतः] काञ्चनदेव्यास्तं कलङ्कं यदशोधयत् .(l.1)
तद्रामावतरस्यैव पृथ्वीराजस्य चेष्टितम् ॥

काञ्चनदेव्याः पुत्रस्तं पितृहत्यारूपं कलङ्कं यद(l.2)क्षालयत्तच्छ्रीरामावतारस्य पृथ्वीराजस्य कृत्यम् ॥ 62.

तथा चास्य पितृभ्रात्रोस्सिद्धं प्रासादया(l.3)त्रकम् .
अयं तु पितृनामाङ्कं नगरं निरमापयत् ॥ 63.

भग्नानां गिरिदुर्गाणां सङ्ख्याप्रतिनिधी(l.4)निव .
प्रासादान्विविधानत्र पुरो यानग्रजो व्यधात् ॥ 64.

यूथनाथमिवैतेषां मध्ये भवगदागदम् .(l.5)
प्रासादं वैद्यनाथस्य प्रजाक्षेमङ्करो व्यधात् ॥

1 Ms. °घन°.　　2 Ms. °दास्पसु°.　　3 No Comm.　　4 Ms. पूर्ण°.

ध्वंसितानां शैलकोट्टानां गणनाप्रतिनिधी(1 6)निव यान्प्रासादांस्तत्र नगरेऽप्रजोकरोत्तेषां मध्ये यूथनाथमिव संसाररोगभेषजं वैद्यना(1 7)थस्य प्रासादं प्रजाहितोकरोत् ॥ 65.

दत्ते हरिहयेनेव शुद्धरीतिमये हरौ .
प्रतिष्ठां ल(1 8)म्भितस्तत्र शुद्धरीतिमयः पिता ॥

रीतिर्धातुविशेषः . तत्प्रकृतौ हये सूर्येणेव दत्ते शुद्धरीतिः(1 9) शुद्धाचारश्च पिता तेन प्रतिष्ठापित. ॥ 66.

पितुः रीतिमयस्य रीतिवाहारूढस्य प्रतिष्ठापि(1.10)तस्याग्रे रीतिमयं स्वात्मानं प्रतिष्ठाप्य राजा स सर्गं त्रिधा रीतिमयं कविरियाकरोत् . कवि(1 11)पक्षे गौडीवैदर्भीपाञ्चाली चेति तिस्रो रीतयः ॥ 67.

एकस्थाने प्रतिष्ठाप्य ब्रह्मविष्णुम(1.12)हेश्वरान् .
त्रिपूरुषमिव श्राद्धं धन्यो निर्मितवान्पितुः ॥

एकस्मिंस्थाने ब्रह्मादींस्त्रीन्देवा(1 13)न्प्रतिष्ठाप्य पितुस्त्रिपुरुषं श्राद्धमिव सोकरोत् . प्रतिष्ठाप्येत्यविवक्षितपूर्वकालम् ॥(1 14) 68.

कृते यथेष्टफलदे तेनायतनपञ्चके .
सुरद्रुममदो जिग्ये मेरोरजयमेरुणा ॥

तेन रा(1 15)ज्ञा प्रासादपञ्चके कृते सत्यजयमेरुदुर्गेण मेरोर्मदो जित. अभिलषितफलदायि(1 16)त्वात् ॥ 69.

तन्निर्मितसुरागारैर्ग्रामैर्गङ्गानकादिभिः .
अल्पावशेषवास्तव्या मन्ये जज्ञेमरा(1 17)वती ॥

---

1 Ms दत्ते 2 No verse corresponding to this comm. The 1st, 3rd and 4th lines can be restored—पितृ रीतिमयस्याग्रे······राजा सर्गं त्रिधा रीतिमय कविरिवाकरोत ॥ 3 Ms °समो. 4 Ms. राज . 5 Ms. राज्ञेम°

सेन निर्मितानि सुरागाराणि येषु तैर्गङ्गानकादिभिर्ग्रामैर्हेतुभिरमरावती अल्पेवशेषा(l.18) वास्तव्या देवा यस्यामिति जाने. अमरावतीतोप्यत्राधिकगुणत्वादिति भावः ॥ 70.

ऋणशुद्धिं(l.19) विनिर्माय निर्माणैरीदृशैः पितुः.
तत्वरे दर्शनं कर्त्तुं परलोकजयी नृपः ॥

देव[ालयनि](l.20)र्माणैः पितुः ऋणं शोधयित्वा पितुर्दर्शनं कर्त्तुं परलोकं जितवान्राजात्वरत् ॥ 71.

ए[काकिना हि](l.21) मत्पित्रा स्थीयते त्रिदिवे कथम्.
बालश्च पृथिवीराजो मया कथमुपेक्ष्यते ॥ 72.

[इतीवास्या(l.22*)भिषिक्तस्य रक्षार्थं व्रतचारिणीम्.
स्थापयित्वा निजां देवीं पितृ(?)]भक्त्या दिवं ययौ ॥

मत्पित्रा केवलेन स्व(l.1)र्गे कथं स्थीयते कथं च बालः पुत्रो मया [उपेक्ष्य]ते इत्यत इवाभिषिक्तस्य पुत्रस्य रक्षार्थमिव व्र(l.2)तानुष्ठायिनीं देवीं स्थापयित्वा पितृभक्तस्स स्वर्गमगात् ॥ 73.

तं पृथ्वीभटपर्यन्ताश्चाहमानपुर(l.3)स्सराः.
आदित्यद्युतयस्सर्वे प्रत्युज्जग्मुर्महीभुजः ॥

सर्वेपि स्ववंश्यास्स्वर्गे तं प्रत्युद्गताः ॥(l.4) 74.

तेषामेकतमं मध्ये नापश्यत्पितृवैरिणम्.
क्वचिद्प्यन्धतामिस्रे मग्नं व्रीडावशादिव ॥

तेषां म(l.5)ध्ये एकं पितृवैरिणमेव स नापश्यत्. क्वाप्यन्धतामिस्रे लज्जयेव मग्नम् ॥ 75.

---

1 Ms. 'हेतुभि' l.c. under l. 18.

पुरः प्रदक्षिणं चक्रे(1 6) तस्य प्रत्युद्गतो नृपा ..
सर्वाङ्गसङ्गिनीर्दृष्टीर्नेष्यन्निव कृतार्थताम् ॥

सर्वाङ्गेषु सङ्गिनीर्दृष्टीः(1 7) कृतार्थतामिव नेतुमस्य प्रदक्षिणमिन्द्रोकरोत्. प्रदक्षिणेन हि पश्चात्तथा अपीन्द्रदृष्टयः(1 8) पश्यन्ति ॥ 76.

यावज्जङ्गमकैलासमारोहति सुराद्विपम्.
तावत्कैलासमेवैष निन्ये शङ्कर(1 9)किङ्करैः ॥

जङ्गमं कैलासमैरावणं स यावदारुरुक्षति तावद्गणै' कैलासमेव नीतः ॥ 77.

उभौ(?) (1 10)विशत एवास्य रुद्राद्रिमुदपद्यत .
स्वपुत्रभूपदायादकन्दर्पजयि लोचनम् ॥

पृथ्वीराज(1 11)प्रतिमल्लकामजेतृ नेत्रं कैलासं प्रविशतोस्योत्पन्नम्. ईश्वरसारूप्यं प्राप्तवानित्यर्थः ॥ 78.

अ(1 12)कस्मात्पूर्वपुरुषौ पत्न्यास्तस्य च तेजसी .
चुचुम्बतुस्तं सस्नेहं वामदक्षिणयोर्दृशोः ॥

तस्य(1 13) तत्पत्न्याश्च पूर्वपुरुषौ तेजसी चन्द्राकौं तं नेत्रयोस्स्नेहेन चुचुम्बतु' ॥ 79.

अस्मिन्क्रुद्धे न मे भाव्यम(1 14)स्मिथन्द्रकलाच्छलात् .
स्वचापपुष्पदाम्नेव तं मनोभूरपूजयत् ॥

सोमेश्वरे क्रुद्धे सति म(1.15)म न जीवितव्यमित्यतश्चन्द्रकलाव्याजात्रिजधनुःपुष्पगुणेनेव कामस्तमपूजयत्. अयं(1 16) भाव.. पूर्वमीश्वरो मह्यमक्रुध्यद्यदा तदोमया रहितो हरोभूद्न स्माप्रमादात्पुनरहं(1 17) प्राणान्प्राप्तवान् अयं तु सोमेश्वरो यदि मह्यं क्रुद्ध्यति तदा मम प्राणा न भवितारः ॥ 80.

---

1 Sic. Is it तसो.? 2 Ms. °पश्यत. 3 Ms. °म स्मर°. 4 Ms तत्रे°.

जिता(1.18) कर्पूरदेव्यास्मि कस्माद्वयितया तत्र .
केशग्रहमितीवास्य चकार त्रिदशापगा ॥

शुचि(1.19)त्वात्त्वप्रियाहं कस्माज्जितेतीवास्य गङ्गा केशग्रहणमकरोत् ॥ 81.

भूमेर्भरस्त्वदीयेन मु(1.20)[ही]तस्तनयेन मे .
इत्यालिलिङ्ग चाकाण्डे तं[1] स्वकीर्त्तिसितः फणी ॥

त्वत्पुत्रेण मम भूभारो(1.21)·········तीव निजकीर्त्तिशेषस्तमालिङ्गत् ॥ 82.

जाता स्वरूपहानिर्नः पाताले तव कीर्त्ति(1.22)[भिः] .
[चूडामणी]न्न सहते कुटिलानां सुतश्च ते ॥ 83.

इतीव कर्णयोर्बाहुद्वये शिरसि पादयोः .(1.23)
———[समा]श्लिष्टो यथाशक्ति स पन्नगैः ॥

सितस्यास्मत्स्वरूपस्य तव यशोभिर्हानिर्जाता(1.24··5[5]) तव पुत्रः कुटिलानां चूडामणीनपि कुटिलान्न सहते यद्वा वक्राणां चूडामणीन्न सहते ऽय(1.1)स्यैव चक्रवर्त्तित्वेन चूडामणिधारणौचित्यात् इतीव कर्णादौ सर्पैस्स परिरब्धः ॥ 84.

अलङ्क(1.2)रणभोगीन्द्रफणमाणिक्यमालया .
दीपवृक्ष इवाभूत्स शम्भोः प्रथमदर्शने ॥

भूषणा(1.3)हिफणरत्नश्रेण्या स हरप्रथमदर्शने दीपवृक्ष इवाभूत् ॥ 85.

मा गाः पुत्रं प्रति स्नेहं त्वं न त(1.4)स्योपयुज्यसे .
इतीव रूक्षतां निन्ये कुतोप्येतत्स भस्मना ॥

---

1 Ms. त्तं. 2 Read °त्तिश्वेतत्वे°. 3 Ms. °नै. 4 Ms. पत्र°. 5 Ms. has ९ on margin.

पुत्रे स्नेहं त्वं मा गमः यतस्त्वं तस्य नो(l 5)पयुज्यसे तस्य त्वत्तोप्यधिकगुणत्वात् इतीव भस्मना म रूक्षतां नीत. ॥ 86.

सुतस्य निर्मली(l 6)कर्तुं राज्यस्थितिमिवाहृतम् .
कलिकालं दधौ कण्ठे रुद्धावतरणं हृदि ॥

स राजा अहि(l 7)तं विपं हृदये रुद्धप्रवेशं कलिकालमिव कण्ठेवहन् पुत्रस्य राज्यं निर्दोषीकर्तुमिव(l 8). आहृतमिति पाठो नार्यः अहितमिति पाठस्साधु' ॥ 87.

ये श्रूयन्ते त्रयस्तापास्ते शूलारोपि(l.9)ता इव .
प्रजाक्षेमाय तत्पाणौ शिखात्रयमिषाद्बभुः ॥

आणवद्यस्तापा ये श्रूयन्ते ते(l.10) तद्धस्ते शिखात्रयव्याजात्प्रजासुखार्थं शूले आरोपिता इव बभुः ॥ 88.

अपश्यद्यूपमारूढमात्मा(l 11)नं चन्द्रपाण्डुरम् .
यशसेव निर्जनेव नीयमानं शिवालयम् ॥

शशिशुभ्रं यूपमारोहन्तमा(l.12)त्मानं सोपश्यत् स्वयशसेश्वरनिकटं नीयमानम् ॥ 89.

बलात्पुरुषकारेण जेतव्यस्यात्मजन्मना .(l 13)
मुण्डमालोकयामास करामलकवद्विधेः ॥

बलाद्धेतोः पुरुषेणं करणभूतेन पृथ्वीराजेन जेतव्यस्य(l 14) विधेर्मुण्डं करामलकमिव सोपश्यत् ॥ 90.

ज्योतीरूपेषु पुत्रस्य संक्रान्तेष्विव तेजसि .
शुद्धा(l.15)भिर्लोकपालानामस्थिस्रग्भिरभूष्यत ॥

---

1 Comm °हितम्. 2 Ms. °पान्दुः (?). 3 Read °षेण°. 4 Ms पृथ्वीराजेन is on margin. 5 Ms. °षेतु°.

पुत्रसम्बन्धिनि तेजसि त्रिपये लोकपालानां प्र(l.16)शस्तेषु तेजस्सु सङ्क्रान्तेषु सत्सु शुद्धाभिस्सतीभिर्लोकपालानामस्थिमालाभिस्स भूषि-(l.17)तः. अशुद्धमपि वस्त्रं वह्नौ पतितं शुद्धं भवति ॥ 91.

पुष्करं कलिरूपेण कलिं हन्तुमिवा(l.18)गमत् .
विदार्य कृत्त्या तस्यैव क्रीडया पिदधे वपुः ॥

पुष्करं तीर्थं पद्मं च हस्तिरूपेण ह(l.19)न्तुमागतमिव कलिं पाटयित्वा तच्चर्मणा लीलया गात्रं प्यधान् ॥ 92.

इति लज्जाकरं जन्म(l.20) मर्त्यात्सूनोर्हरन्निव .
परमेश्वरसायुज्यं देवस्सोमेश्वरो ययौ ॥

अमर्त्यपतेरपि पुत्रस्य मर्त्या[ज्ज](l.21)न्म लज्जाकरं सन्निवारयन्निव सोमेश्वरः परमेश्वरसायुज्यं गतः ॥ 93.

वैद्यनाथप्रतिष्ठायाः(l.22) प्रभावात्स शिवालये .
मरुत्तश्वेतयोस्तुल्यप्रतिपत्तिरजायत ॥

देवप्रतिष्ठायाः प्रभावा(l.23*)[च्छंक]रावासे मरुत्तश्वेतसमानादरस्सं-पन्नः ॥ 94.

पुष्करस्नातकायातनारदादिमुखादसौ .(l.1)
पुत्रराज्यस्थितीश्शृण्वन्रुद्रलोके स पिप्रिये ॥

पुष्करे स्नात्वागतानां नारदादीनां मुखात्पुत्रसा(l.2)म्राज्यं श्रुत्वा स रुद्रलोके च प्रीतोभवत् ॥ 95.

प्रसादपात्रमाकर्ण्य श्वेतन्यायेन तत्र तम् .
मृत्युर्विश(l.3)ति नाकाले तत्पुत्राधिष्ठिताः प्रजाः ॥

1 Comm. °मागतम् (?) 2 Ms. पद्मावि°. 3 Ms. सत्याल्°. 4 Ms. °नोर्नंदन्नि°. 5 Ms. °रसांइ°. 6 Ms. °प्रयात्र°. 7 Ms. lc. under l. 1.

शैलममुं तं प्रमादपात्रं श्रुत्वा तत्पुत्रपालितं देशं यमो(1.4) नाशाय-
काले विशति अत्रापीत्युभयोश्श्लोकयोरैक्यम् ॥ 96.

पादाधिष्ठितपृष्ठं तं वृषमारोहतीश्व(1.5)रे ।
पश्यन्त्यद्यापि सासूयं नन्दिप्रभृतयो गणाः ॥

पादेन तत्पृष्ठमधिष्ठायेश्वरे वृषमारोहति(1.6) सति नन्दिरुद्रादयो गणा-
स्तमीश्वरं सासूयमद्यापि पश्यन्ति. परस्योत्कर्षासहनमसूया . तदु(1.7)त्कर्षं
न सहन्ते इत्यर्थः ॥ 97.

स्वयं निर्मितपूर्वस्य सरसः परिशुद्धये ।
गृहीतामिव वात्सल्यसौम(1.8)नस्यमहोदधेः ॥ 98.

पितुर्मन्दाकिनीं मूर्ध्नि भगवद्भावलाञ्छनम् ।
स वारुणस्य त्राणस्य प्रतिष्ठा(1.9)फलमैक्षत ॥

ईश्वरसायुज्यज्ञापिकां गङ्गां वरुणत्राणप्रतिष्ठायाः फलं स दृष्टवान्(1.10)
स्वेन निर्मितस्य सरसो शुद्ध्यर्थं पौरसौमनस्यसमुद्राद्गृहीतामिव ॥ 99.

स सर्वपूर्वपुरुषान्पश्यन्नु(1.11)द्रत्वमागतान् ।
आत्मैव पुत्र इत्यर्थं श्रौतं सत्यममन्यत ॥

ईश्वरभावं प्राप्तान्सर्वान्पूर्वपुरुषा(1.12)न्पश्यन्स राजा पुत्र आत्मेति
वैदिकं वचनं सत्यं मतवान्. स्वस्यापि रुद्रत्वप्राप्तेरिति भावः ॥ 100

कि(1.13) भूयसा गिरिशवत्स सर्वगननामगात् ।
पृथिवीराजकीर्त्तानामियत्तामिव वीक्षितुम् ॥(1.14)

यद्वाकेन किम् . ईश्वरतुल्यं स राजा सर्वगतोऽभूत् पुत्रयशसामियत्ता-
मिव द्रष्टुम् . पृ(1.15)थ्वीराजयशांसि सर्वव्यापीन्यभूवन्निति तात्पर्यम् ॥ 101.

---

1 i.e. 95, 97. 2 Ms. 'त्स'. 3 Ms 'मेन' 4 Ms 'मोगृ'. 5 Ms. 'ङ्ग' i.e.
e.g. 1. 10 6 Ms 'स्मृ'. 7 cf. ... Shatapatha Br. 11, 9, 4, 23

यो मां प्रागुदमूलयद्दशमुखं[1](l.16)स्तस्यापि यो निर्ममे[2]
मूलोन्मूलनमात्मजत्वमगमत्सोप्यस्य पुण्यात्मनः .
कुर्वाणो मम वर्त्तते(l.17) स च दिवारात्रौ यशोराशिभि-
र्वृद्धिं विन्ध्यवदित्यमन्यत शिवं तेन त्रिनेत्राचलः ॥

यो राव(l.18)णो मामुदखनत्तस्यापि मूलानामुत्खननं योकरोत्सोस्य पुत्रत्वमागतः स च पृथ्वीराजो(l.19) यशोभिर्विन्ध्यस्येव मे वृद्धिं करोतीति तेन सोमेश्वरेण कैलासस्साध्वमन्यतेति भद्रम् ॥(l.20) 102.

श्रीश्रीकण्ठचरित्रकाव्यविवृतौ विश्वस्य विश्वस्य च
च्छायाभाजि किरातकाव्यवि(l.21)वृतौ विश्रम्य रम्यश्रियि .
पृथ्वीराजजयाख्यकाव्यविवृतौ संवेशभाजोष्टम-
स्सर्गोगादि(l.22)[ति] जोनराजकवितुः खिन्नस्य शास्त्राध्वनि ॥

श्रीलोलराजसुतपण्डितभट्टनोन-
रा(l.23""60)जात्मजो विवरणेन स जोनराजः .
सर्गं व्यधात्सु⏑ ⏑ – ⏑ ⏑ –त्र. पृथ्वी-
राजाख्यराजविज[याभिधका](l.1)व्यराजे ॥

पृथ्वीराजविजयविवरणेष्टमस्सर्गः ॥

---

1 Ms. °स्वः त°. 2 Ms. °र्दमे. 3 Ms. has पृ. on margin.

# [ नवमः सर्गः ]

इति हृद्गतेन द[यितेन रु](1 2)द्गता-
मुपजग्मुषा मुषितमोहचोदटा .
अपवर्गपद्धतिमिवानुपप्लवां
तनयश्रियं नृपवधूर(1 3)शिश्रियत् ॥

एवं रुद्रभावं गतेन हृद्गतेन भर्त्रैव निवारितमोहोत्पत्तिः कर्पूरदेवी निर्बाधां मोक्ष(1 4)वीथीमिव पुत्रलक्ष्मीमधारयन् ॥ 1.

तनयोऽभ्यपिच्यत यदा तदापत-
न्गगनादनभ्रमलिनादपां(1 5) कणाः .
असमञ्जसव्यवसितापसारण-
प्रथितप्रहाम्बुजलशीकरश्रियः ॥

यदा राजपुत्रो(1.6)ऽभिषिक्तस्तदा निरभ्रादाकाशाज्जलकणाः पेतुः असमञ्जसमनुपपन्नं यद्व्यवसितं व्यवसायः(1 7) प्रजापीडनं तस्यापसारणं त्यागस्तेन प्रथिता निर्गता ये प्रहाम्बुकणास्तत्समा.[8]. उपमोपक्रमो(1 8)त्प्रेक्षेयम्. व्यथितेति पाठो नार्थ. वक्ष्यमाणविरोधात्. यद्वा व्यथितेति पाठः विपूर्वस्यायते.(1.9) निष्ठायां रूपम् ॥ 2.

शशिसूर्ययोः समुतयोर्हि मानसं
कुलपक्षपातमतिमात्रमश्नुते .
परि(1 10)पालितां स्वयमवेच्य मातरं
न महीसुतः स्पृशति जातु वक्रताम् ॥

1 Ms °वधू° 2 Ms °वेर्या° 3 Ms °तद° 4 Ms °मरध° 5 Ms °माउ°- 6 Ms °पंत्र°. 7 Ms सञ्जु°. 8 Ms गनिचुम्यो written above °र्हि under 1. 9.

हि शब्दस्तथाह्यर्थे. चन्द्रा(l.11)र्कयोश्चित्तं सपुंत्रयोः कुले पक्षपातं भजते तथा स्वमातरं भूमिं पालितां दृष्ट्वा भौमो वक्रत्वं न स्पृ(l.12)शति. असौम्यग्रहाणां वक्रत्वे प्रजापीडोत्पत्तिरिति भावः ॥ 3.

क्रतुभिस्स्वशिष्यकुलतृप्तिनि(l.13)र्वृतो
बृहतां पतिर्न भजतेतिचारिताम्.
दनुजद्विपि प्रभुपदव्यवस्थिते
प्रतिभैव का भृगु(l.14)भवस्य दुर्नये ॥

तद्राज्ये यज्ञैस्स्वशिष्याणां देवानां कुलस्य तृप्त्या सुखितो देवाचार्यो नाति(l.15)चारमेति. शुभग्रहाणामतिचारे प्रजापीडोत्पत्तेरिति भावः. दानवशात्रौ राज्ञि सति दानव(l.16)गुरोर्दुर्मार्गे स्मृतिरेव का ॥ 4.

अनयश्च एव वदनावशेषता-
मवनेस्स एव परिपालनोद्यतः.(l.17)
तदुपर्यतीव मृगयाकुतूहली
शममेतु मा तदिह सिंहिकासुतः ॥

य एव राहुं मु(l.18)खमात्रशेषत्वमनयत्स एव हरिर्भूमेः पालकः तदुपरि राजा मृगयाकरः तत्तस्मात्(l.19) सिंहिकासुतो राहुस्सिंहश्च मा शममेतु. काका एत्वेवेत्यर्थः ॥ 5.

उदरंभरिर्नरपतेर्यशो(l.20)हिमै-
र्न दिशां गणः स्पृशति दाहसाहसम्.
अत एव जातुचन न प्रतन्यते
कलिकालि(l.21)का क्वचन धूमकेतुना ॥

राज्ञो यशोहिमैः पूरितोदरो दिशां गणो दाह एव साहसं ना······

---

1 Ms. स्वपु°. 2 Ms. °वृत्तौ. 3 Ms. वृ°. 4 Ms. °र्गिये corrected to °र्गे. 5 Ms. गजाः. 6 Ms. गजा.

···(122)तथा धूमकेतुना प्रजापीडासूचकेन शिखातारकेण कलिकालिका दुर्भिक्षादि का··· · (123*) · · ······हिमे च सति दाहो न भवति[1] धूमकेतुरग्नि · ········ करोति ॥ 6.

नवभिर्ग्रहैरिति विधेयतां गतै-
र्नव(1 1)खण्डयापि धरया सुखं स्थितम्.
ग्रहचक्रवर्तितनयोपि सोन्तकः
स्पृशति प्रजास्वसमये न कं(1 2)चन ॥

शुद्धैर्नवभिर्ग्रहैर्हेतुभिर्नवखण्डया भुवा सुखेन स्थितम्. स यमोपि प्रजासु मध्ये कं(1 3)चिन्नाकालेमारयन् यतो ग्रहचक्रवर्तिनः सूर्यस्य पुत्रः, पृथ्वीराजस्य सूर्यवंश्यत्वादिति भावः ॥(1 4) 7.

अतिवृष्टिभीरुदधिः पयोमुचा-
मुपयुक्तमेव सलिलं प्रयच्छति.
स्मरतीव रामतनुना त्रि(1 5)निर्मितां
क्षितिपेन पूर्वमनलास्त्रखण्डनाम् ॥

अतिवृष्टेर्भीतः इव समुद्रो मेघानामुपयु(1.6)ज्यमानमेव जलमदात् श्रीरामेण राज्ञा कृतामाग्नेयास्त्रखण्डनां स्मरतीवाब्धिः ॥ 8.

अभिन(1 7)न्दितोपगमनाः कृपीवलैः
शबलीभवन्ति समये वलाहकाः.
चरणोदकं क्षितिपतेस्तर(1 8)ङ्गिणी
गगनस्थितेव परिपूरयत्यमून् ॥

कृपीवलैस्तुतागमना मेघा वर्षासु श्यामीभवन्ति(1 9) नारायणावतारस्य राज्ञः पादजलं नदी गङ्गाकाशस्था मेघानिवापूरयन्. गङ्गाजल(1 10)मेव

1 Ms दा° to °नि lc. on top margin. 2 Ms. °र्ग्रहै°. 3 Ms °शला°. 4 Ms °निन्दिता 5 Ms °नम् 6 Ms °लेगत° 7 Ms. °यत्य°.

मेघा ववृषुर्न तत्र सामुद्रमित्यर्थः. गाङ्गसामुद्रयोर्जलयोर्लक्षणं गुणान्तरं चायुर्वे(l.11)दशास्त्रेपूक्तम् ॥ 9.

प्रतिमुच्य भूतलजुषो निधीनपि
क्वचिदप्यगम्यत पलाय्य पन्नगैः .(l.12)
प्रतिपत्र दुर्विवरचारचातुरीं
कथमुर्वरामभिभवेयुरुन्दुराः ॥

भूतलस्थान्निधीनपि(l.13) त्यक्त्वा सर्पैः कापि गतम्. राज्ञैव निधिपालनादिति भावः। पलाय्येति पूर्वकालश्चिन्त्यः. दुर्विवरेषु चारस्तत्र चातुरीमाश्रि(l.14)त्याखवो भूमिं कथं खनेयुः ॥ 10.

न स भूतलस्य लव एव विद्यते
नृपतेः प्रतापदहनश्रितो(l.15) न यम्.
अत एव कुत्रचिदपि प्रपद्यते
शलभावली न सुलभावकाशताम् ॥

राज्ञः प्र(l.16)तापाग्निर्यं देशं नाश्रितस्स नास्त्यत एव शलभसाला सुलभाश्रयतां न प्राप्ता. शलभा(l.17) हि वह्निना दह्यन्ते ॥ 11.

विततान रात्रिचरचक्रवर्तिनो
दशकन्धरस्य किल यः कुलक्षयम्.(l.18)
स यदा पुनाति पुनरेव मेदिनीं
शुकसारणाद्यभिभवस्तदा कुतः ॥

रक्षःपते रावणस्य(l.19) यो वंशक्षयमकरोत् स एव यदा भूमिमवतरति तदा शुकानां. सारणादिना संचारादिना(l.20)······भवः कुतः. शुकसारणौ रावणमन्त्रिणौ च ॥ 12.

---

1. Ms. गङ्गासा°. 2 Ms. पत्र°. 3 Ms. रा° to °वः Ic. on margin.
4 Ms. दग्ध°. 5 Ms. °णाभि°. 6 Ms. कुतः. 7 Ms. रामरा° Is it °णो नाम राव° ?

नरनाथकीर्त्तिविभवस्य दूरतो
भवति स्म(1 21) दिव्यमपि राजमण्डलम् .
अतिमात्रमासदनतो महीभुजां
तदरुन्तुदः कथमुपप्लवो(1 22) विशाम् ॥

दिव्यमपि राजमण्डलं चन्द्रबिम्बं च राजयशसो दूरेभवत् यशसो-
तिमित्तत्वात्(1 23''61) तत्ततो दिव्यस्य राज्ञां स्वामिनां मण्डलस्य दूर-
··· · · ··· पतीनां कर्तॄणां विशां कर्मभू[ताना](1.1)मुपप्लवः कुतः .
अतिमात्रमासदनतो नैकट्यात् ॥ 13.

बहलैर्यथैव शबला बलाहकै-
र्गगनस्थली(1 2) भवति निर्गते तपे .
शरदागमं प्रति तथैव जायते
खलधान्यराशिभिरपह्नुता मही ॥

वर्षा(1.3)सु यथाभ्रैर्घनैश्शबला भवति तथैव शरदि धान्यैः कणैर्भूश्छा-
दिताजायत ॥ 14.

न तदस्ति किंचि(1 4)दपि यद्गवेष्यते
सुवसीभवज्जनपदासु सीमसु .
गृहमेधिनां तु हृदयान्यनिर्वृति-
र्न(1 5) जहाति भिक्षुमुखदर्शनं विना ॥

सुवसीभवन्तो जनपदा यासु तासु सीमसु सतीषु यद्गवे(1.6)ष्यतेन्वे-
ष्यते तन्नास्ति . सर्ववस्तूनां सुलभत्वादिति भावः . तुर्व्यतिरेके . भिक्षूणां
याचकानां मु(1 7)खदर्शनं विनाऽनिर्वृतिश्चित्तदौस्थ्यं गृहस्थानां चित्तानि
नात्यजत् . याचकदुर्भिक्षमेवासू(1 8)दित्यर्थः ॥ 15.

---

1 Ms °तुत्र. 2 Ms °न्मा° l. under l. 2 3 Is it तनु ? 4 Ms. कै°.
5 Ms- °ति° crossed after °न्य°. 6 Ms. जहति.

अपराधमेव न करोति कश्चन
क्रियते जनस्य कतमस्य निग्रहः .
कलिनाप्य(l.9)भिन्नचरणस्त्वनुग्रहं
नृपतेरवाप परिपूर्णपाद्वृषः ॥

राज्ञां प्रजासु निग्रहानुग्रहौ(l.10) युक्तावित्याह . कोपि नापराधमकरो-दतः कस्य निग्रहः क्रियते अपराधे सति दण्डस्य युक्त(l.11)त्वात् . तदेवा-पराधाभावं व्यतिरेकद्वारेण दर्शयति . कलिनापि . अपिशब्दः किंपुनस्त्रे-ता(l.12)द्वापराभ्याम् . अभिन्नाश्चरणा यस्य स वृषो धर्मोत एव चतुष्पाद्रा-ज्ञोनुग्रहं प्रापत् . परिपूर्ण(l.13)पादिति[3] चिन्त्यम् ॥ 16.

अधिदैवते शिखिनि नित्यतर्पिते
न मधौ धुनोति कुसुमानि तत्सखः .(l.14)
अतितर्पणादरुचिमानिवाचर-
त्यचलेषु नोष्मसमये भयं शिखी ॥

अग्नये स्वाहा(l.15) वसन्ताय स्वाहेति श्रुतेरग्निर्वसन्तस्य देवता . व-सन्तस्याधिदैवतेग्नौ नित्यतर्पिते सति(l.16) तत्सखो वायुर्मधौ वसन्तेषु पुष्पा-णि नाधुनोत् . ग्रीष्मे शैलेष्वग्निर्दाहं नाकरोत् यज्ञेष्वति(l.17)तृप्त्या गतक्षु-त्क इव ॥ 17.

अतिदातृतामतिकदर्यतां च न
प्रकटीकरोति जलदस्त(l.18)पात्यये .
विहितोपदेश इव मध्यमां स्थितिं
नृपशिक्षया जनपदैरुपागतैः ॥

वर्षासु(l.19) मेघोतिदातृतामतिवृष्टिमतिकदर्यतां वृष्टिप्रतिबन्धं च ना-करोत् अतस्संभाव्यते नृ(l.20)पान्वित्क्षया मध्यमां स्थितिं श्रयद्भिर्जनैः छ-तोपदेश इव . तदा हि राज्ञो नीत्या लोको यु[क्त](l.21)व्यवहारोभूत् ॥ 18.

---

1 Ms. किपु°.  2 Ms. °भ्यामभि°. °म° lc. under l.12.  3 Pāṇini, 5.4. 140. Also cf. V. 133.

परिरक्षणाभिमुखशालिपालिका-
नयनश्रिया कृतपराभवा इव .
[तृ](1 22)णमेव कुत्रचन भूरि मन्वते
न पतन्ति शालिषु शरत्क्षणे मृगाः ॥

शालिरक्षिकाया⋯⋯(1 23°)⋯ ⋯या जिता इव मृगास्तृणमेव⋯
⋯⋯⋯[तृ]णमात्रोशनदानेधिवयस(?)योग्या इत्यर्थ. कापि(1 1)⋯⋯
⋯⋯षु मृगा नापतन् . तृणमात्रेप्यनर्हाणां का शालिस्पृहेत्यर्थ. ॥ 19.

मृगयाकुतूहलिनि बाल(1 2)पार्थिवे
विमुखैर्निरुद्धगतयो मृगैरिव .
अतिदारुणा न रजनीषु हैमनी-
ष्वपि वातुमुद्यमभृतस्स(1 3)मीरणाः ॥

बाले राज्ञि मृगयोद्यते पलायितैर्मृगैर्निरुद्धगमना इव वायवो हेमन्त-
रात्रिष्व(1 4)पि नावहन् . वायुर्हि मृगवाहन. ॥ 20.

परिरक्षके सुमनसां महीपतौ
शिशिरो रिपुस्सुमनसा(1 5)मपि क्षितिम् .
पिदधाति कुन्दकुसुमैस्तथा यथा
बहुना ह्रियेव न हिमेन पत्यते ॥

सुमन(1 6)सां साधूनां रक्षके राज्ञि सुमनसां पुष्पाणां शत्रुरपि शिशिरः
कुन्दपुष्पैर्भूमिं तथाच्छाद्य(1 7)यथा लज्जयेव तुहिनेन न पतितम् ॥ 21.

वपुषा जितोप्यनुचरीकृतस्तथा
युवभिर्यथा परक(1 8)लत्रदर्शने .
परिहृत्य कार्मुकशरौ करद्वया-
त्पिदधाति दृष्टिमिव पुष्पसायकः ॥

1 Ms. °मत्रा°. 2 Ms °दा न. 3 Ms. °रष°. 4 Ms. षय°. 5 Ms. °दो.

तद्गुणैः(l.9) रूपेण जितः कामोपि तथा विधेयीकृतो यथा यूनां परस्त्रीदर्शने काम एव हस्तद्वयाद्ध(l.10)नुश्शरौ त्यक्त्वा यूनां दृष्टिं हस्ताभ्यामिव पिदधाति . तरुणाः परस्त्रीदर्शनं न कुर्वन्तीत्यर्थः ॥(l.11) 22.

सुरसद्मभिः प्रतिपदं नवैर्नवै-
स्त्रिदिवादिवाविरतमागतैर्महीम् .
निजमेव कर्म विमलं(l.12) न मानवा-
नमरावतीमनयदुद्वसामिव ॥

शुद्धं निजमेव कर्म कर्तृ मानवानमरावतीं ना(l.13)नयत् . स्वर्गादप्यतिगुणे कृते तत्रैव स्वर्गमभुञ्जतेत्यर्थः . अतस्संभाव्यते उद्वसामि(l.14)व . अत्र हेतुमाह .. प्रतिस्थानं नवैर्नवैर्निर्मितैर्देवगृहैः स्वर्गादिव भूमिमागतैः ॥ 23.

प्रथि(l.15)मानमेति रजनी यदा तदा
यदुदेति कुम्भतनयो महामुनिः .
प्रतिचत्वरानवरतोद्भवन्मठ-
द्विज(l.16)वेदशब्दरुचिरत्र कारणम् ॥

यदा रात्रिर्वृद्धिमेति तदागस्त्यो यदुदेत्यत्रोदये प्रतिचत्व(l.17)रपथेष्वविच्छिन्नमुच्चरन्तो ये मठद्विजवेदशब्दास्तेषु रुचिश्श्रवणेच्छा भवति हेतुः ॥ 24.

ग(l.18)णनातिगान्युपवनानि वापिका-
स्सरसीः प्रपाश्च दधती वसुन्धरा .
दिननायकस्य जगदे(l.19)कचक्षुषो-
प्यधुनाश्नुते दशमभागदृश्यताम् ॥

असंख्यान्युद्यानादीनि दधती भूस्सूर्येण(l.20) [द]शमभागे दृश्यतां

---

1 Ms. 'घ' corrected to 'ह'. 2 Ms. तरा lc. under l.16. 3 Comm. 'तोचरन्त'.

द्रष्टव्यस्तमेति भूमेर्नवभागेषूपदनादीनि सन्तीत्यतस्सूर्येण दशमे(121) भागे दृश्यते इत्यर्थ ॥ 25.

पृथिवी तथा सरसतामुपागता
नृपतेर्यशोभिरमृतातिशायिभिः .(122)
समुदेति हस्तयुगमात्रकाद्यथा
प्रतिरूपकं [जित]रसायनं पयः ॥

अमृतादधिकै रा(123)[जय]शोभिस्सरसत्तां भूमिस्तथा प्राप्ता यथा प्रतिरूप जितामृत जल हस्तद्वयमात्राद्(124**82)त्पद्यते ॥ 26.

न विनास्ति मासमपरो मलिम्लुच-
⏑ ⏑ – ⏑ – ⏑ ⏑ ⏑ ⏑ – ⏑ –:
[वटवस्तृतीयस](11)वनस्वरैः पुनः
कलिमेव तस्करमवन्ति रात्रिषु ॥

·········सं विनान्यो मलिम्लुचो नास्ति या(12)मिका: प्राहरिका रात्रिषु वृथैव निष्फलं जाग्रति. वटवो ब्राह्मणपुत्रास्तृतीयसवने वेदध्वनिभिस्तं क(13)लिमेवापन्ति रक्षन्ति. वेदध्वनिं श्रुत्वा कलिचौरः पलायित इत्यर्थ. ॥ 27.

प्रपतन्ति कस्यचन(14) नास्त्रसंपदः
प्रथिते प्रतापदहनेपि भूपतेः .
विनिधाय वारिदगणेष्वतो भिया
शिशिरीक(15)रोति मघवा शरासनम् ॥

राज्ञः प्रतापाग्नौ प्रथिते सति कस्याप्यस्त्राणि न पतन्ति प्रभवन्ति(16) दीप्यन्ते च अतोस्त्रज्वलनाभावाद्धेतोर्मेघेषु विन्यस्येन्द्रस्स्वधनुश्शीतलीकरोतीत्युत्प्रेक्षा ॥ 28.

---

1 Ms इट°. 2 Is it °चो रजनीषु जाग्रति वृथैव यामिका ? 3 Ms °रेषु°.
4 Ms °चमि° 5 Ms छन्दु le under 12 6 Ms °शेष°.

न यथा त(1.7)था व्यवहरत्युपर्बुध-
श्शुभमेव चिन्तयति सर्वसद्मनाम्.
विजहत्सु शूरतनयेषु शस्त्रितां
स्वप(1.8)दे न लोहचरणोपि दृश्यते ॥

उपर्बुधोग्निस्स्वेच्छया न व्यवहरति सर्वगृहाणां शुभमेव ध्याय(1.9)ति तथा शूरा वीराः शूरोर्कश्च तत्पुत्रेषु शस्त्राणि त्यजत्सु सत्सु शूरतनयो लोहचरणः स्वस्थाने न दृ(1.10)श्यते ॥ 29.

यमकिङ्करेष्वपि निरुद्धसंचरे-
ष्वविशन्न यातुपतिसैनिकाः क्षितिम्.
मरुमेदिनी(1.11)ष्वपि विहाय विक्रियां
मधुरत्वमेव वरुणेन सेव्यते ॥

यमकिङ्करेष्वपि रुद्धप्रवेशेषु सत्सु(1.12) यातुपतिसैनिका राक्षसा भुवनं न प्रविष्टाः. क्षारत्वं त्यक्त्वा वरुणेन मरुषु माधुर्यं सेवितम् ॥ 30.

परिर(1.13)क्षतीव कमलस्थितां श्रियं
सरसामुपान्तविपिनेषु मारुतः.
धनदस्य जाग्रति वसुंधराधवे
न(1.14) निधिप्रजागरमकुर्वतोरगाः ॥

सरसामन्तेषु वायुः पद्मलक्ष्मीमिव रक्षति तथा राज्ञि रक्षा(1.15)र्थं जाग्रति सर्पा निधिरक्षार्थं प्रजागरं नाकुर्वन् ॥ 31.

नृपतिस्स्वयं स्फुरति वैष्णवं मह-
स्तदुपर्यु(1.16)परिस्क्रियत रुद्रतेजसा.

---

1 Ms. °न्युप°. 2 Ms. सक्रियां. 3 Ms. °कः. 4 Ms. °विद्याः. 5 Cfr. verse 10, supra. 6 Ms. °परिक°.

रविसंख्यया विवदमानमानम-
त्तदशेषमेनमधिराजमण्डलम् ॥(1.17)

राजा स्वयं वैष्णवं तेजो भवति तत्राप्येकादशानां रुद्राणां तेजसोपबृंहितः अतो द्वादशतेजो(1.18)मयस्सम्पन्नः ततो रविसंख्यया द्वादशसंख्यया अविवदमानं विवादरहितं द्वादशविधं रा(1.19)जमण्डलं समस्तमप्येनमानमत् ॥ 32.

इति मूर्त्तयोष्ट परमेश्वरं यथा
वरुणप्रभंजनहुताश(1.20)नादयः ।
जगदीशमित्थममुमप्युपासते
विरचय्य तेजसि पदं वशंवदाः ॥

वरुणादयो(1.21)ष्टमूर्त्तयः परमेश्वरं यथा सेवन्ते तथा तस्य तेजसि स्थानं कृत्वा य··:·······स्ता अमुं राजानं सेवन्ते ॥(1.22) 33.

धृतसर्वरुद्रमहसः क्षमापते-
र्जननी निजारभत पत्तनं निजम् ।
उपलभ्यते तदुपल∼(1.23)नीतये
सममेव रुद्रवृषभैः कुतूहलम् ॥

रुद्रतेजोमयस्य राज्ञो माता यन्नगरं निर्म· ····(1.24*)············ सममेव लब्धम् ॥ 34.

इति रामराज्यसुख(1)[संप]दां पदं
समपादि यत्कलियुगेपि मेदिनी ।
कुलकौमुदी कलिजुरेरवाप त-
त्पतिदेवता(2)व्रतफलं विपक्किमम् ॥

कलावपि रामराज्यसुखश्रियां स्थानं भूमिर्यत्संपन्ना तत्कर्पूरदेवी(3)पतिव्रतात्वफलं पक्वम् । तस्याः पातिव्रत्याचरणादेव भूस्सुखेनासीदित्यर्थः ॥ 35.

1 See I 68, II. 13 2 Ms. तथा lc. under I. 22 3 Ms. 'क्किमम्'

गुरुशुक्रयोस्स(1.4)चिवयोरुपर्यधो
वलंविद्विषा च वलिना च वर्त्यते.
इति मध्यमं भुवनमाश्रितस्तयो-
रुभयोरपि(1.5) प्रतिभया भयाय यः ॥ 36.

स कदम्ववास इति वासवादिभिः
स्पृहणीयधीर्व्यसनमध्यपाति(1.6)भिः.
अवगाहते सहचरस्सुमन्त्रितां
परिरक्षितुं क्षितिधरस्य सद्गुणान् ॥

जीवे सचिवे सति(1.7) वलंविद्विपेन्द्रेण दिवि परिवर्त्यते. स्वार्थेणिच्. शुक्रे सचिवे सति वलिदानवेन पाताले वर्त्यते(1.8) इति बुद्ध्येव यः कदम्ववासनामा सचिवस्तयोर्भयार्थं मध्यमं स्वर्गपातालमध्यस्थं भुवनं भू(1.9)मिमाश्रितस्स सहचरो राज्ञष्षड्गुणान्रक्षितुं मन्त्रित्वं धारयति व्यसनपतितैरिन्द्रादिभिः(1.10) काङ्क्षणीयबुद्धिः ॥ 37.

हनुमन्तमेनमपि रुद्रमामन-
न्त्यपरानसौ दशसु दिक्षु रक्षितुम्.
नृ(1.11)पतेर्यशो नियुयुजे स्वयं पुन-
स्सकलक्रियानुचरभावमश्नुते ॥

जना एनं कदम्ववासं ह(1.12)नुमन्तं रुद्रमामनन्ति तथा हि राज्ञो यशो रक्षितुं दशसु दिक्षु सैन्यान्विसृष्टवानसौ(1.13) कदम्ववासः स्वयं निखिलकार्येष्वनुचरत्वं भजते ॥ 38.

कपिलक्षणं कपि(1.14)लतां वहन्निति
प्रतिभाधनैः प्रतिपदं परीक्षितः.

---

1 Ms. फल°. [illegible] Comm. षड्गुणान्. 3 Ms. वलिवि°. 4 Ms. °न्तमपि. 5 Ms. हनु-(1.13)मान् crossed with vertical strokes after °सौ. 6 Ms. पुनः crossed with vertical strokes after °सः. प्रायः written under स्वयं. 7 Ms. °क्षणां.

न यशोमयेन वपुषा वितीर्णवा-
न(l 15)वलम्बमेव चतुरोपि योर्णवान् ॥

तेजस्विभावात्कपिलतां कपिलक्षण हनुमच्चिन्हं(l 16) वहन्स यशोमयेन शरीरेण न वितीर्णवानतरत्काका तीर्णवानेवेत्यर्थः बुद्धिमद्भिः प्र(l 17)तिस्थानं कृतपरीक्षः ॥ 39.

रथकेतुसंनिधिमिवागतः पुरा
कपिलः किरीटकिरणैः कि(l.18)रीटिनः .
दनुजस्य येन महसादहत्पुरीं
तदिवाधुनापि वदनैर्बिभर्ति यः ॥

रथे के(l 19)तुस्तत्र स्थितिमागतोर्जुनस्य ध्वजीभवन्नित्यर्थः अतोर्जुनस्य मौलिरश्मिभिरिव कपिलो(l 20) हनुमान्पुरापि कदम्बवासरूपत्वेपि तदिव मुखेन वहति येन सहसा रावणस्य नगरीमदहत(l 21) . [मौ]लिरश्मयः कपिलत्वेपि हेतुस्संभावितः ॥ 40.

मणिभिर्विलङ्घितचरस्य(l 22) [वारि]धेः
क्षितिभर्तुरोषधिभिरुद्धृतस्य च .
निजतेजसैव परिवारितः क्रमा-
दविचिन्त्यमन्त्र(l 23)[महि]मत्वमेति यः ॥

पूर्वं लङ्घितस्य समुद्रस्य रत्नैस्तथोद्धृतस्य शैलस्योषधिभिरिवं निज(l.24)-[प्रभ]या परिवारित इव योतुलमन्त्रमाहात्म्यत्वमेति. मन्त्रौषधिमाहात्म्येन हि मन्त्रमहि(l 25**63)मा स्फुरति ॥ 41.

स्वपरिश्रमोद्धृतविलङ्घितक्षमा-
धरसिन्धुनायकपरिच्युतानिव .

1. Sic Is it 'नत्रि' ? 2 Ms. मुखें'. 3 सहसा Ic under l. 20. Text. मह°.
4 Ms. °योग्निमर्त्य crossed with vertical strokes after 'प्रेम'. 5 Ms °शस्य
6 Ms. °दत्तस्य. 7 Ms °रिव Ic. on margin.

⏑ ⏑ – – ⏑ (1.1)तुङ्गिमगभीरते गुणा-
वितरेतराव्यवहितौ दधाति यः ॥

स्वपरिश्रमेणोद्धृतोल्लङ्घितौ यौ(1.2) क्षमाधरसिन्धुनायकौ औषधिपर्वत-समुद्रौ ताभ्यां पतिताविव तुङ्गत्वगाम्भीर्ये गुणौ अन्योन्य(1.3)मव्यवहितौ संमुखश्रितावविरोधकरौ यो दधाति . तुङ्गत्वं गाम्भीर्यविपर्ययः गाम्भीर्यं तुङ्गत्व(1.4)विपर्ययः . अविरोधकाविति चिन्त्यम् ॥ 42.

फलशङ्कया विहितझम्पयोः पुरा
शशिसूर्ययोश्चकितयोश्च्युतं महः .
परिवृ(1.5)द्धतामिव नयत्यहर्निशं
दधदन्वयाभरणदासकर्म यः ॥

चन्द्रार्कौ फले इति भ्रान्त्या दत्तो(1.6)त्प्लुतित्वाच्चकितयोश्चन्द्रार्कयोः पतितं तेजः कर्मभूतं यो वृद्धिं नयति . अत्र हेतुः चन्द्रार्कयोरन्वया(1.7)-भरणं पृथ्वीराजस्तस्य दास्यं धारयन् ॥ 43.

सचिवेन तेन सकलासु युक्तिषु
प्रवणेन तस्किम(1.8)पि कर्म निर्ममे .
मुखपुष्करं शिशुतमस्य यत्प्रभोः
परिचुम्ब्यते स्म नवयौवनश्रिया ॥

स(1.9)मस्तेपूपायेषु सामादिषु चतुरेण कदम्बवासेन तत्कर्म कृतं येन बालस्यापि राज्ञो मुख(1.10)पद्मं यौवनोचितया लक्ष्म्या परिचुम्बितम् . यौवनोचितं समस्तपृथ्वीजयं बाल एव कृतवानित्य(1.11)र्थः ॥ 44.

---

1 Can it be °तिमानत्रु° ?. 2 Ms. श्र° to °त्व्यम् lc. after °वः under l. 4. *Querry.* Is it written by some one who revised the Comm. ? The word described चिन्त्य is not the author's, but the Comm's. In the text °तत्व्यत्र° would also suit. Cf. p.196, note 10.

जलदाः क्षमापरिवृढस्य देवता-
तनुमाश्रितस्य चिकुरीभवन्ति ये .
शितिकण्ठता(1 12)ण्डवनिदानमाप तं-
दूध्वनितं तदीयमिव वाचि सन्निधिम् ॥

विष्णुरूपमाश्रितस्य पृथ्वी(1 13)राजस्य ये मेघाः केशीभवन्ति तदीयं ध्वनितं गर्जितमिव वाचि सन्निधानमकरोत् मयूर(1.14)नृत्तकारणम् ॥ 45,

अवलम्ब्य जानुयुगलं श्रितामिव
प्रणयेन वैरिनगरागतां श्रियम् . (1 15)
क्षितिपस्य सान्त्वयितुमिच्छुना शनै-
र्भुजयोर्युगेन युगदघ्नता दधे ॥

शत्रुनगरेभ्य आगतां(1 16) लक्ष्मीं जानुद्वयमवलम्ब्य तिष्ठन्तीं सान्त्वयितुमिच्छुनेव तस्य भुजद्वयेन रथकाष्ठपरिमा(1 17)णता जानुव्यापित्वं दधे ॥ 46.

रसनासहस्रयुगले यया यया
भुजगाधिपस्य किल विद्य(1 18)या श्रितम् .
उपगम्यते मिलितया तया तयै-
रयवलम्बते स्म सुविशालतामुरः ॥

शेष(1 19)स्य जिह्वासहस्रद्वये यया यया विद्यया श्रितं तया तया विद्यया मिलितया पृथ्वीराजे(1.20) आगम्यते इवोरो विस्तीर्णतामधात् ॥ 47.

पृथिवीभरेण सह दिग्गजाष्टका-
त्सह दानसार(1 21)भरेण चाहृता .
पुरतोनुपार्श्वगतभाग्यमध्यगा
गतिरेति मन्थरतया समागमम् ॥

1 Ms. °ल°. 2 Ms. °मिल°. 3 See pp 18 and 42, note 2.

अ[प्र](1.22)भ्यो दिग्हस्तिभ्यस्सकाशाद्भारेण दानसौरभभरेण सह चानीतेव गतिर्मन्थरत्वमागता . म(1.23)न्थरगामित्वे हेतुरुत्प्रेक्ष्यते. पुरतः पार्श्वगतभाग्यमभ्यगतत्वादिव गतेर्मन्थरत्वम ॥ 48.

सुच[रित्र(1.24)कीर्त्तन]विचक्षणान्कवी-
निव वक्रिमाणमुपदेष्टुमुत्रना .
स्मरचापचापलजिगीपया भ्रुवो-
रपरेव(1.1)[का]चिदुददीपि चातुरी ॥

राजयशःकीर्त्तनपरान्कवीन्वक्रत्वलक्षणाश्रयां भंङ्गिं कौटिल्यं चोप(1.2)देष्टुं प्रवृत्तेव काव्यवाच्या परा लोकोत्तरा चातुरी स्मरधनुजिगीपयेवोददीपि दीप्ताभूत् ॥ 49.

अपि(1.3) दृष्टिपातवशवर्त्तिनो विधे-
रुपयातयेव वदनारविन्दतः .
धनदान्तकाभिहितवामदक्षिणा-
श्रि(1.4)तबन्धया नयनयोश्श्रियोदितम् ॥

विधेर्ब्रह्मणः स्थानपद्मादागतयेव यतो दृष्टिपातमात्राय(1.5)त्तस्य श्रिया तस्य नेत्रयोरुदितं श्रितम् . कीदृश्या धनदान्तकाभ्यां वैश्रवणयमाभ्यामभिहितो वाम(1.6)दक्षिणाश्रितो बन्धो यस्यां सा . दृष्टिपातवशवर्त्तित्वे अयं भावः तदृष्टिपातोनुकूलः प्रतिकूलम(1.7)पि दैवमनुकूलयति प्रतिकूलस्त्वनुकूलमपि प्रतिकूलयति अत एव वामे नेत्रे यमोनुकू(1.8)ले धनदः . उपहितेत्यार्षः पाठः . उपहित उपरञ्जितो वामदक्षिणो स्थितिबन्धो यस्याः ॥(1.9) 50.

रणसाहसाय हरितां वराहतां
क्षितिधारणाय मिलितां भुजद्वये .

---

1 Ms. °वाम°. 2 Comm requires उत्पनार°. 3 Ms. °स्थितिव°. 4 Ms. °रोयं. 5 Ms. वास°. 6 Ms. °हचयेह°. 7 Ms. °लतां.

मुखयोर्द्विदंष्ट्रुरिव भू(l 10)तपूर्वयो-
र्दंगभून्मुहुर्मुहुरपाङ्गचुम्बिनी ॥

अस्य दृष्टिर्नेत्रान्तगामिनो पुन. पुनरभूत अत.(l 11) संभाव्यते रणार्थं स्थितां भूमिधारणार्थमादिसूकरनां भूतपूर्वयोर्मुखयोर्द्दंष्ट्रमिच्छुरि(l 12)व अथ भुजद्वये थितामुं ॥ 51.

कपिलस्य पश्चिममुखस्य या रुचिः
कुपितेषु तामपि कदा(l.13)चिदुद्वहत् .
अपरत्र वर्तितुमिवाविचक्षणा
वदनं बलात्परिचुचुम्ब दिव्यता ॥

पंचानन(l.14)स्य विष्णोः कपिलं मुखमित्यागमः. कपिलवर्णस्य पश्चिममुखस्य या रुचिरातात्रता ता(l 15)मपि कुपितेषु कोपेषु बिभ्रतस्य मुखं दिव्यता देवतात्मता रमणीयता च बलाच्चुचुम्ब अ(l 16)तस्संभाव्यते तस्मादन्यत्र स्थातुमकुशलेव ॥ 52.

वदने दृशोश्च वनजश्रिया स्थितं
हरिता च(l 17) वामनतया संहोदरे .
शिरसि भार्गवत्वमभिरामकृष्णता
चिकुरेषु सर्वविषयेषु बुद्धता ॥(l 18)

वनजं पद्ममुत्पलं च तच्छोभया मुखे दृशोश्च स्थितम्. केशेषु मनोहरासितता स्थिता. सर्व(l 19)पदार्थेषु प्रबुद्धता स्थिता. वनजा मत्स्यकूर्मवराहाः हरिर्नरसिंह वामनो बलिजित् भार्गव. परशु(l.20)रामः अभिरामश्रीरामः कृष्णो वासुदेवः बुद्धस्सुगतः ॥ 53.

नव लक्षणान्यपि पुरातनान्यमूं(l 21)-
[न्यवलम्ब्य] भूपतिरथच तद्बलम् .

1 Ms सिदितां 2 Ms °तन, 3 Ms °देस 4 Sic Read कोपेषु? 5 Ms म°. 6 Ms. नराहा° lc. under l 20 7 Ms. °न्यभू°. 8 Ms. °रथग°.

निरुपप्लवां रचयितुं क्षितिं यतो
दशमावतारकरणीयम(1.22)[ग्रहीत्] ॥

एतानि नवसंख्यानि पूर्वजन्मभवानि अपि लक्षणान्यवलम्ब्याश्रित्य राजा तद्बलमवहत् (1.23**64). तत्समबलोभूदित्यर्थः. ततो भूमेरुपद्रवं निवारयितुं दशमावतारे कर्तव्यमग्रहीत् ॥ 54.

अयशस्वि[ता](1.1)प्रथमबीजकल्पया
विजितस्य रूपविषयान्मनोभुवः.
वदनाधिवाससमिलितालिरेखया
कृ(1.2)तपूर्वरङ्गमिव कूर्चलेखया ॥

मुखपद्मसौगन्ध्यागतभ्रमरमालासदृश्या तथा रूपेण जि(1.3)तस्य कामस्य अपयशोबीजसदृश्या श्मश्रुलेखया कृतोर्थोयौवनस्य कामजयस्य वा पूर्वरङ्गो(1.4) येन तत् ॥ 55.

अवतंसकुण्डलमरीचिरोचितं
शशिबिम्बतां स्पृशति गण्डमण्डलम्.
परितापस(1.5)म्पदमिवान्यपार्थिवै-
र्जनितां न्यपोहितुमृतस्य तिष्ठतः ॥

भूषणकुण्डलरश्मिभूषितः कपोलः(1.6) चन्द्रकान्तिं धारयति मुखमध्ये वसतस्तस्यान्यराजैः कृतं तापमिव वारयितुम् ॥ 56.

यदि चापकौ(1.7)शलकलामवाप्नुया-
ममुतो भवेयमभयस्तदीश्वरात्.
इति चेतसा च वपुषा च निर्जितो-
प्यभिको(1.8) रतेरनुचरत्वमाययौ ॥

1 Ms. अपि lc. under l. 23. 2 Ms. °म्बाश्रि°. 3 Scil. गण्डमण्डलं,(verse 56).

यद्यहमेतस्मात्पृथ्वीराजाद्धनुर्विद्यामाप्नुयां तदा हरोन्निर्भयः स्यामित्यत (19)इव रतेरभिरू. कान्त कामोऽयंस्य राज्ञोनुचरत्वमागत. . शान्तेन चेतसा कान्तेन च देहेन जितः ॥(1 10) 57.

प्रथमं शरेण पृथिवीभृतं ततो
भुजयोर्बलेन शिवचापतां गतम् .
किल यो बभञ्ज विशिखाः(1 11) शिलाभिदो
यदमुष्य संप्रति किमेतदद्भुतम् ॥

अस्य राज्ञश्शराशिशिलाभिद' पाषाणविदा(1 12)रका यद्भवन्ति तन्नाश्चर्यम् यतो य. पूर्वं शरेण क्रौञ्चाद्रिमभिनन् ततो भुजबलेन शिवचापत्व(1 13)मापन्नं पृथिवीभृतं मन्दरपर्वतं बभञ्जास्फोटयत ॥ 58.

जविना हयेन विहरन्नलङ्घय-
न्नृप(1 14)तिर्यदेकमन इत्यदः कियत् .
अतिरंहसोऽस्य दधते हि वाजिनः
पटुतामनेकमनसां विलङ्घने ॥(1 15)

वेगवताश्वेन संचरमाणो राजा यदेकमप्रतिमल्लमन. शकृटमलङ्घयन्नितवानित्यद. किय(1 16)द्भवति . न किंचिदित्यर्थः . अस्याश्वा ह्यधिकवेगा अनेकमनसा जये सामर्थ्यं दधते . चित्तादप्यति(1 17)वेगास्तदश्वा इत्यर्थः . अनेकमनोजयशक्ता यदेकमनो जयति तत्र किंचिन् एकापेक्षयानेके(1 18)षामधिकत्वात ॥ 59.

हयमेष यं यमधिरोढुमिच्छति
प्रसभं प्रयाति स स तार्क्ष्य(1 19)तामिव .
विशिखं च कुत्रचन यं यमस्यति
प्रतिपद्यते स स महास्त्रतामिव ॥

---

1 Ms इग' lc under l 8    2 Ms. 'प' lc. under l. 10    3 Ms. 'णि'.
4 Ms क्रोश'.    5 Ms. दम्नि .

यं यमश्वम(1.20)यमारोहति स सोऽश्वो गरुडत्वं प्राप्नोति यं यं शरं च क्वापि क्षिपति स स शरो महास्त्रतामिवाप्नोति ।।(1.21) 60.

अपि यं यमाश्रयति मत्तवारणं
स स सोदरत्वमिव गच्छति श्रियः.
करपुष्करं नयति यं य(1.22)मप्यसिं
स स नन्दकत्वमवनेः प्रपद्यते ।।

तस्य वाहभूतो हस्ती श्रियस्सोदर ऐरावणस्तद्भावमि(1.23)व गच्छति तत्करस्थः खड्गो भूमेर्नन्दकत्वं ह्लादकत्वं विष्णुखड्गत्वं च प्राप्नोति ।। 61.

[अतिच(1.24*)ञ्चलं य]दतिदूरवर्त्ति य-
द्यदतीव तीक्ष्णमपि कर्कशं च यत्.
मदनस्य चित्तमिव नावहेलया
सुभिदं(1.1) [ब]भूव न तदस्य धन्विनः ।।

अतिचलत्वादियुक्तं यल्लक्ष्यं तदस्य सुभिदं शोभना भिदा भेदो य-(1.2)स्य तन्न नाभूदभूदेवेत्यर्थः. यथा चित्तं कामस्य सुभिदं तच्चातिचलत्वादिसहितम् ।।(1.3) 62.

सकलाभिरिन्दुवदनाभिरात्मनो
रजनीषु कण्ठगत एव वीक्ष्यते.
बहुवल्लवीपतिदशोप(1.4)योगिनीं
बहुरूपतां पुनरपि श्रयन्निव ।।

सर्वाभिस्स्त्रीभिस्स राजा स्वप्ने कृतालिङ्गनो दृश्य(1.5)ते अतस्संभाव्यते बहूनां षोडशसहस्रसंख्यानां वल्लवीनां गोपीनां पतित्वे उपयुक्तामने(1.6)-करूपतां पुनरपि श्रयन्निव ।। 63.

---

1 Ms. सीद°. 2 Ms. समनस्य. 3 Ms. दन्वि°.

उपगन्तुमेतदनुगत्वमर्थिता
हृदि पोस्फुरीति यदपि द्वयो(l 7)रपि ।
अपरागतस्तदपि विभ्यतो ध्रुवं
मदनं वसन्तशशिनौ न मुञ्चतः ॥

कामाद्गाढोधिक(l 8)सौन्दर्यदर्शनाद्वसन्तचन्द्रयोरेतस्यैवानुचरत्वं लब्धुं यद्यपि अभिलाषोत्यर्थं स्फुरति तथापि ध्रु(l.9)वं लोकापवादभयाद्वसन्तचन्द्रौ कामं न त्यजतः ॥ 64.

इति यौवनेन विनयानुयायिना
क्रिय(l 10)माणसेवमवलोक्य पार्थिवम् ।
अनुरक्तभाव इव शिश्रिये बला-
न्न कया निविश्य हृदि राज(l.11)विद्यया ॥

एवं विनयानुगतेन यौवनेन तं राजानं कृतसेवं दृष्ट्वा तस्य बुद्धौ श्रित्वा कया न राज(l.12)विद्ययानुराग इवाश्रितः । अनुरागवत्य इव राजविद्यास्तं भेजुरित्यर्थः । यं च पुरुषा अपि(l.13) कामयन्ते तं प्रति सर्वाः स्त्रियोनुरागिण्यो भवन्ति ॥ 65.

कुलशैलदिक्करिभुजङ्गमाग्रणी-
कम(l.14)ठेन्द्रकोलपतिकालरुद्रभाक् ।
इयमेककेन सकला मयोह्यते
पृथिवीति विंशति(l 15)मुवाह यो भुजान् ॥

कुलपर्वतादीन्भजन्ती । कुलपर्वतादिभिरूढेत्यर्थः । इयं पृथ्वी स(l-16)कला मया केवलेनोह्यते इतीव विंशतिसंख्यान्भुजान्योवहत् ॥ 66.

विदलय्य तं कुलम(l 17)हीधरादिका-
नवधार्य विस्मृतधराधृतीनिव ।

1 Ms. सन्त 2 Ms °यायिनो 3 Ms. 'मेव'. 4 Ms. 'वानु'.
5 Ms 'वंश्रियानु'.

उपगम्य दिव्यतनुतां कराङ्गुली-
दश(l.18)कद्वयेन वसुधां वभार यः ॥

तं रावणं हत्वा कुलपर्वतादीन्विस्मृतंभूधारणाभ्यासा(l.19)न्निश्चित्येव दिव्यतनुतां चतुर्भुजत्वं प्राप्याङ्गुलीर्विंशत्केन यो भुवमवहत् ॥ 67.

स पुनर्मद(l.20)ग्रजसुतासुतो भव-
न्द्विभुजोपि रक्षति चराचरं जगत् .
इति वार्तया कृतकुतूहलः क्रमा(l.21)-
द्भुवनैकमल्ल इति बन्धुराययौ ॥

स नारायणो मद्भ्रातृपुत्रीपुत्रो भवन्द्विभुज एव सम(l.22)स्तं विश्वं धारयतीति श्रुत्वा कौतुकी भुवनैकमल्लनामा बन्धुः पृथ्वीराजमागतः ॥ 68.

निव(l.23)[सन्ति] शक्रदिशि कल्पशाखिनो
मणयो यथेप्सितफलाश्च रोहणे .
शी[4]तिकण्ठवा(l.24……6[5])हनदृषानुरागिणी
सुरभिः प[वित्रयति चोत्तरां दिशम्] ॥

……………[इ](l.1)क्षिणदिक्स्थिते रोहणे रत्नानि कांक्षितफलप्र-दानि सन्ति ईश्वर……………(l.2)उत्तरां दिशं पावयति ॥ 69.

उपयाम्युदारचरितोपसेव्यतां
कथ—⏑—⏑⏑—⏑—⏑—(l.3) .
अगमद्यथा वरुणदिक्पवित्रतां
भुवनैकमल्लचरणाब्जधूलि[भिः] ॥

……………(l.4)तैः कल्पद्रुमादिसमैः पुरुषैः सेवनीयतां कथं ग-च्छामीत्यतो नू[नं]……………(l.5)यथा सा भुवनैकमल्लस्य चरणरेणुना पवित्रतामगच्छत् ॥ 70.

---

1 Ms. °तागू°. 2 Ms. °श्क°. 3 Ms. °ती° l. under l. 22. 4 Ms. सि°.
5 Ms. पृ. रा. वि. on margin. 6 Ms. रश्रा°.

युधि करशरीरनिरपेक्षतां(16) विना
प्रविशेदुपेक्षिततनोश्च किं धनैः .
इति यो दयात्यखिलदातृतामयं
स्फुटमेक एव(17) पुरुपार्थलक्षणम् ॥

देहनिरपेक्षा एव युधि प्रविशन्ति . युद्धे जयपराजययोरनिश्च(18)यात् . शरीरनिरपेक्षस्य धनैः किम् . शरीरोपयोगित्वादेव तेषामिति भावः . इत्यवो हेवोर्योऽपि(19)दातृत्वमयमेव पुरुपार्थं दधाति ॥ 71.

यदि न मदक्षिणमिषेण रक्षकौ
प्रभविष्यतो शशिरवी द्व(110)योर्दिशोः .
विदलय्य तद्विरचयिष्यदेव यः
कनकाचलं सकलमेव पात्रसात् ॥

दक्षिण(111)पार्श्वभ्रमणव्याजेन चन्द्रार्कौ मेरुसम्बन्धिन्योर्द्वयोर्दिशोः पार्श्वयो रक्षकौ यदि न स्यातां तर्हि मे(112)रुं शकलीकृत्य पात्राधीनं कुर्यात् ॥ 72.

न स रोहणस्य मणिरस्ति रक्षितुं
भुवनैकमल्लभय(113)मस्य यः क्षमः .
द्विजवत्सलात्पुनरतो वदन्यतः
परिरक्षिता कलशनन्दनो मुनिः ॥

तस्मा(114)द्दातुर्यो रोहणं रक्षितुं शक्तस्स कोपि मणिरस्याद्रेर्नास्ति अगस्त्यस्तु ब्राह्मणप्रियाद्दातु(115)स्तस्माद्रक्षिताभूत् . अयं भावः . यद्यहं रोहणाद्रत्नान्यानेतुं गच्छामि तदागस्त्यब्राह्मणो द(116)क्षिणदेशे निवसं-क्षोभात्क्षोभं करिष्यति अतो भुवनैकमल्लो रत्नाहरणार्थं नागच्छत् ॥ 73.

1 Ms. °रि 2 Ms. °निवेन. 3 Ms. °का. 4 Ms. पश्च°. 5 Doublet of वदान्य. Cf p. 120, note 4, (V. 83).

अपग(1.17)र्जिता नयनयोर्न निर्वृते-
रविधायिका चिर कदाचिदीक्षिता .
तडिदीदृशीति कनक⌣—(1.18)भृताः
ककुभो विभाव्य जनता विसिस्मिये ॥

इतः प्रभृति इति यें इत्यन्तं मरुत्तवर्णनपरं कुल(1.19)कम् ॥

गर्जितवर्जिता तथा दृशां भीतेरकर्त्री विद्युन्न जातु दृष्टेत्यतो हेतोर्लोक-
स्सुवर्णपूर्णा(1.20) दिशो दृष्ट्वा साश्चर्योभूत् ॥ 74.

सुरदीर्घिकात इव मारुताहृतैः
कनकारविन्दमकरन्दबिन्दुभिः(1.21) .
प्रथमैश्शशंस पृषतैर्हिरण्मयैः
क्षितिरुप्तसर्षपकणेव मङ्गलम् ॥

वायुना गङ्गाया आ(1.22)नीतैर्हैमपद्मकिञ्जल्कैरिव नवैस्सुवर्णवृष्टिक-
णैः करणैरुप्तसर्षपेव भूर्मङ्गलमसूचयत् ॥(1.23) 75.

अथ मेरुसन्धिगतपादपल्लव-
त्कनकापगाभिरिव मेदुरोदरैः .
जलदैः मदाय [कनकानि](1.24?) भूरिशः
परिशोध्यते स्म कनक[र्णमात्मनः] ॥

..............ये पादपास्तेभ्यस्स्रवन्तीभिस्सुव(1.1)र्णनदीभिरिव पू-
रितोदरैर्मेघैर्बहुव..............कनकवर्षणाद्दणमिवं शोधितम् ॥(1.2) 76.

क्रमशस्सुवर्णगिरिपक्षतिद्वयं
शतकोटिपाटितचरं शतक्रतुः .

---

1 Ms. Sic. Is it च न ? [illegible] Is it °कपभाग्° ? 3 See verse 83, below.
4 Ms. मरुत्°. 5 Ms. °मंस. 6 Ms. यपा°. 7 Ms. °कनकर्पणा°. 8 Ms. °मेव.

विरचय्य चूर्णश इव मद्वय(l 3)वा-
न्विविधैः प्रसादमुपगम्य मन्युभिः ॥

शतकोटिना वज्रेण पूर्वं पाटितं मेरुपक्षद्वयं क्रमे(l 4)ण चूर्णं कृत्वेवेन्द्रो नानायज्ञैः प्रसन्नो ववर्ष . मन्युभिः क्रोधैः प्रसादं प्राप्येति विरोधः ॥ 77.

शनकैर्हि(l 5)रण्यरसमेव लोहितं
स हिरण्यगर्भ इव सर्वतोमुखः .
अविशङ्कशङ्करकराङ्गुलीनख(l 6)-
क्षणलूनपञ्चममुखोवमद्दिवः ॥

स हिरण्यगर्भो ब्रह्मेव लोहितं रक्तं हिरण्यरसं द्रुतसु(l 7)वर्णमेव दिवस्स्वर्गादमुचत्. हिरण्यगर्भत्वाद्धिरण्यवमनमुचितम्. सर्वतोमुखश्चतुर्मुखः(l 8) तथा निश्शङ्कं शङ्करेण कराङ्गुल्या क्षणेन लूनं पंचमं मुखं यस्य सः . यद्वा तु सुवर्णवर्षमपत(l.9)त्तच्छिन्नशिर[स्मो ब्र]ह्मणो रक्तमेवापतदित्यर्थः ॥78.

शिववीर्यपानमतिदुष्करं पुरा
विरचय्य हव्यम(l 10)पि नव्यमश्नता .
अधिरुह्य शून्यमिव दूरमम्बरं
वमनं व्यधीयत हिरण्यरेतसा ॥

अतिदुर्धरं(l 11)मपि शिववीर्यपानं पूर्वं कृत्वा नवं हविश्च भुंजानेन हिरण्यरेतसाग्निना वमनमिव कृतम(l.12) वमनस्य जुगुप्सनीयत्वाच्छून्यं दूरमाकाशमधिरुह्य . हिरण्यरेतस्त्वाद्धिरण्यवमनोक्तिस्सं(l 13)गच्छते . दुर्धरं भुक्त्वैव यः स्नेहं भुङ्क्ते स च वमति ॥ 79.

अवचित्य पूर्वममरापगान्तरा-
त्तपनीयपुष्करवनी(l 14)रिवाखिलाः ,

1 Ms °सच्छिव. 2 Is it यद्वा तत्सु° ? 3 Ms °न्मुना. 4 Ms सर्वं°.
5 Ms वचन. 6 Sic Is it °दुष्कर° ? 7 Is it दुर्धरं ? 8 Ms °च्छिन्न.

समपादि गालितवता निजोष्मणा
पृथिवीसुतेन पृथिवी हिरण्मयी ॥

गङ्गा[1](l.15)या हेमपद्मवनीरुच्चित्य स्वोष्मणा करणभूतेन द्रावयता भौमेनेव भूमिर्हेममयी संपादिता(l.16). मातुर्हि माहात्म्यं पुत्रा जनयन्ति ॥ 80.

उपनीयमान इव खेचरीगणै-
श्चरुकर्मणे खगपतौ विप(l.17)क्षताम्.
हरितालपिञ्जरितदिग्वधूमुखै-
श्च्युतमन्तरालगरुतां लवैर्लवैः ॥

अन्तराले मध्ये ग(l.18)रुतां सूक्ष्मसूक्ष्माणां पक्ष्मणामिवांशैरंशैश्च्युतम् पतितं. भावे क्तः. नभश्चरीभिश्चरुनिमित्तं ग(l.19)रुडे लुञ्चितपक्षत्वं नीते सति. खेचरीणां खगचरोरुचितत्वादिति भावः. हरितालेनेव क(l.20)पिशीकृतं दिङ्मुखं यैः. नेयं कनकवृष्टिः किं तर्हि गरुडसुवर्णमयपक्षकणा इव पतिता इ(l.21)त्यर्थः ॥ 81.

द्रुहिणाण्डभाण्डमतिमात्रसंकटां
परिपूर्य कीर्तिषु गतासु दुस्स्थताम्.
परितक्ष्य(l.22)माणमिव तत्प्रजासृजा
निरवग्रहं कनकवर्षमाचरत् ॥

तद्ब्रह्माण्डमिव निर्निरोधं सुवर्ण(l.23)[वृष्टिं व्यधा]त्. अत्र हेतूत्प्रेक्षा. ब्रह्मणा तक्ष्यमाणमिव. तक्षणे हेतुमाह मरुत्तयशस्सु ब्राह्म(l.24)-
······रयित्वा दुस्स्थतामसान्त्वं गतासु सतीषु यतोतिमात्रसंकटाम् ॥ 82.

इति यः प्रसीदति(l.25**66) विभाविलासिता-
दविशिष्टतां ग[मितवा]न्स भारतम्.

1 Ms. गङ्°. 2 Ms. °डलु°. 3 Ms. °त° lc. under l. 19. 4 Ms. उद्र°.
5 Ms. °रुमुप°. 6 Read ब्रह्माण्डं पूरयित्वा. 7 Ms. °ट्म्. 8 Ms. °स्स.

स मरुत्त——————
[भुवनैकम](1)ल्लमुपमानमिच्छति ॥

विभौ परमेश्वरे प्रसन्ने सति इलावृतंव ...... ... [भार](2)-
तवर्षं भूमण्डलमनयत्स मरुत्तोपि हरपुरे भुवनैकमल्लमुपमा...... ......
[मि](3)च्छतीत्यर्थः ॥ 83.

अहिमांशुवंशयसुभटानुयायिता-
मिति सोमवंशसु——————
[अतितप्तत्तां च](4) जडतां च परपृशु-
र्न विशास्सनातनमधूत्सवा इव ॥

चन्द्रान्वयेषु म..................(5)न्सूर्यवंशस्य पृथ्वीराजस्यानु-
चरत्वं प्राप्ते सति प्रजास्तापं च जाड्यं च नाग[च्छन्]...............(6)
इव. वसन्ते हि शीतातपयोस्साम्यम् ॥ 84.

प्राज्यप्रजाभ्युदयवर्धनदत्तं[चित्ते
दैवातिशायिवलधुम्भुव?](7)नैकमल्ले.
संकीर्णवाल्ययुवभावगुणानुभावं
पस्पर्श वर्महरतां हरि[राजदेवम्].

..............(8)मिश्रो बाल्यत्वयौवनयोर्गुणानुभावो यस्य तं हरि-
राजं वर्महरत्वास्पृशन्............(9)दित्यर्थः. प्राज्ये महति प्रजोदये
विषये सावधाने तथा दैवोल्लंघिपौ[रुष] ............(10)हरिराजो बा-
ल्यमुल्लंघयति स्मेत्यर्थः. ॥ 85.

यन्मेचनादफणिपाश[निपीडनेन
माग्राम](11)लक्ष्मणतनावभिभूतिरासीत्.

---

1 Ms. 'वसु'. 2 Ms. 'तव'. 3 Ms. 'नेक'. 4 Is it 'श्मुरुडे (or मुमटे) समाश्रिते? 5 Ms. अन्तुना. 6 Ms. 'दतु'. 7 Ms. 'वहवा.

तेनायमत्र जनने जननीपितृव्य-
मूर्त्योर्द[पथत सदानुचरो गरु](l.12)त्मान् ॥

पूर्वजन्मनि रामलक्ष्मणमूर्तौ मेघनादस्य रावणसूनोः फणिपाशैः पीडित············(l.13)भवो यदासीत्तेनैव हेतुनेवास्मिञ्जन्मनि नित्यानुयायी गरुडो मातृपितृव्यरूपेणोत्पन्नः . पूर्वं मेघ(l.14)नादेन सर्पास्त्रं दत्त्वा रामलक्ष्मणौ मत्सन्निधानाभावात्पीडिताविवेति विमृश्यास्मिञ्जन्मनि भुवनै(l.15)कमल्लरूपेण गरुडः पृथ्वीराजसेवां नात्यजदित्यर्थः ॥ 86.

मैनाकशैलवदखण्डितपक्षपाते
पित्रन्वयां(l.16)भरणताञ्जुषि तत्र वीरे .
देवी व्यराजत कुमारविनायकाभ्यां
कर्पूरदेव्यचलराजसुता सुताभ्याम् ॥(l.17)

अचलराजस्य पुत्री कर्पूरदेवी पुत्राभ्यां कुमारविनायकाभ्यामप्राप्तप्राप्तराज्याभ्यां शुशुभे पितृकु(l.18)लस्य भूषणभूतेखण्डितस्नेहे भुवनैकमल्ले सति . अचलराजसुता गौरी च मैनाकेखण्डितः पक्षा(l.19)भ्यां पातो यस्य तस्मिन्सति गणपतिकुमाराभ्यां पुत्राभ्यां शोभते ॥ 87.

नागानां दमने स एव पटिमा सत्यं तदै(l.20)कात्मतां
प्राप्तं दिव्यपथावगाहनविधौ सैवातिरंहस्विता.
पृथ्वीराजसहायतामनुभवन्नेकं सुप(l.21)र्णः पुन-
र्यश्चामीकरपक्षपातमभुचत्तन्मानवत्वं दधौ ॥

नागानां हस्तिनां फणिनां च दमने स एव पटि(l.22)मा भवति . गरुडसदृश इत्यर्थः . सत्यं गरुडेन सहैकात्म्यं प्राप्तम् . गरुडो हि सत्यः स च सत्यभाषी(l.23). दिव्यपथस्य भव्यमार्गस्याकाशस्य चावगाहने स एव वेगः सुपर्णश्शोभननागवल्लीदल············(l.24*)············[प]क्षपातं

1 Ms. °नेपि°. 2 Ms. °त्मैंद°. 3 Ms. °वैमे°. 4 Ms. °र्भया°. 5 Ms. मेना°. 6 Ms. °व्यमया°. 7 Ms. °यौश्च°. 8 Ms. दमने lc. under l. 22

लोभं सुवर्णमय[पक्ष]त्या पातं यदत्यजत्ततो हेतोर्मानव(1)·········· ·· [पृ]थ्वीराजस्य सहायतां भजन्. नागदमनादिभिर्गुणैर्यद्यं गरुड ए(2)व······ ·· ··यां सुवर्णपक्षपातमोक्षान्मानवत्वमवेह्········· सत्यशब्दस्य गरुडवाचिनो नपुंसकलिङ्ग··· ······ ॥ 88.

इति गरुडहनूमं(3)[न्मूर्तिभेदानुगत्वा-
न्नृपतिरथ] पयर्णो रामभावप्रभावम् .
तरितुमतितरस्वीभूय सप्तापि सिन्धूं(4)-
⏑⏑⏑⏑⏑⏑——⏑——मियायं ॥

एवं गरुडहनुमतोर्मूर्तिभेदस्य भुवनैकमल्लस्य कैदम्बवासस्य चानुगत्वा(5)·· ······[पृ]थ्वीराजस्सप्तसमुद्रांस्तरितुं बलं प्राप्य लोकहिताय प्रयत्नं कृतवान्(6) · ·· येन समुद्रमतरत् अहं पुनर्गरुडहनुमदवताराभ्यां भुवनैकमल्लकदम्बवासाभ्या(7) ·····[मगच्छ]दिति भद्रम्॥ 89.

श्रीश्रीकण्ठचरित्रकाव्यविवृतौ विश्वस्य निश्व(8)[स्य च
च्छायाभाजि किरात]काव्यविवृतौ विश्रम्य रम्यश्रियि .
पृथ्वीराजजयाख्यकाव्यविवृतौ(9)[ज्योत्स्नाकरो लावणिः?]
[सं]वेशं परिवाञ्छति प्रतिपदं शास्त्राध्वनि ग्लानिमान् ॥

श्रीलोल(10)[राजसुतपण्डितभट्ट]नोन-
राजात्मजो विवरणेन स जोनराजः .
सर्गं व्यधत्त नवमं सुखमत्र पृ(11)[थ्वी-
राजाख्य]राजविजयाभिधकाव्यराजे ॥

पृथ्वीराजविजये नवमस्सर्गः ॥(12)

---

1 Ms. °नभि°. 2 Ms °न्दान°. 3 Ms °त्वच°. 4 Ms lc at top of page. 5 Ms. सभस्य 6 Ms °नुम°. 7 Sic. Is it °रय जुषाणो? 8 Ms. °साभि. 9 Ms. °न्धु°. 10 Ms. °मिनाय. 11 Ms. क° to °चा° lc. on margin.

# [ दशमः सर्गः ]

अथ विघटनसज्जबाल्यसख्ये
पिशुनगिरामपथेपि यौवनस्य .
दिशि दिशि विचचार पु(l.13)ष्पचापो
नृपतिसुताशयसन्धिबन्धभूतः ॥

पिशुनगिरो भेदमुत्पादयन्ति . तासामविषये(l.14)पि यौवने विघटमानं विदीर्यमाणं बाल्येन सख्यं यस्य तस्मिन्सति कामो राजकन्याचित्तस्य राजविषये(l.15)·········तः प्रतिदिशमचरत् . पृथ्वीराजस्य यौवनं श्रुत्वा सर्वा राजकन्या रागमभज(l.16)न्नित्यर्थः ॥ 1.

प्रथमसमयविप्रलम्भखिन्ना
स्वसमसमग्रगुणावरोधभङ्ग्या .
अथ ज(l.17)नकसुतेव मूर्त्तिभेदै-
र्बहुभिरमुं परिरभ्य निर्ववार ॥

पूर्वजन्मनि विरहेणोद्विग्ना सीतेवात्मसमानां(l.18) संपूर्णगुणानामन्तःपुराणां व्याजेनानेकैर्मूर्त्तिभेदैरमुमालिङ्ग्यातुष्यत् . अन्तःपुररूपा बहूर्मूर्त्तीः(l.19) कृत्वा सीतेव तमसेवतेत्यर्थः ॥ 2.

अनुगतनवयौवनश्रियापि
व्यपनयतापि धृतिं पतिव्रतानाम् .(l.20)
समसमयमयत्नताङ्गनानां
नरपतिरूपगुणेन कञ्चुकित्वे ॥

---

1 वि° to °र्यं lc. under l. 14. 2 Ms. °डयतु°.

सयौवनशोभेनापि सतीनां धृतिं(1.21) हरतापि राजरूपगुणेन स्त्रीणां सौविदल्लत्वे समकालमेव यत्नः कृतः. पृथ्वीराजादन्यराजानाम(1.22)⋯⋯रतेषु स्त्रीणां स्पृहा नाभूदित्यर्थ.. श्रीधृत्योः स्त्रीलिङ्गत्वादपि विरोधवाचक क(1.23) ⋯ ⋯ रस्त्रीगाङ्गेया(?)⋯भवन्ति ॥ 3.

अपि सलिलशयस्य यस्य सेवा-
मकुरुत तं(1.24**67) परिरब्धुमुत्सुकानाम् ·
⏑⏑⏑⏑⏑[मसूययेव] निद्रा
नयनपथं न ज[गाम कामिनीनाम्] ॥

[जलशय](1.1)स्यापि यस्य निद्रा सेवामकार्षीत्तमा[लिङ्गितुं का]ङ्क्षन्तीनां स्त्रीणां नयन⋯⋯⋯[अत्रो](1.2)त्प्रेक्ष्यते असूययेवेति. यं जलेपि श्रितं [न तत्या]ज तमर्थ्यतः कथं प्रार्थ⋯⋯ ⋯⋯. 4.

⏑⏑⏑⏑(1.3)रवदेयं तं सिषेवे
विनयवशंवदता वदान्यता च ·
परिकलितव्रतीव दु⏑——
⏑⏑⏑⏑⏑⏑⏑⏑—⏑(1.4)याचन श्रीः ॥

कामातुरेव विनीतिदीर्घता च तं सिषेवे विनीतिदीर्घते⋯⋯⋯⋯
(1.5)परिचयं नास्पृशत्. विनयपूर्वं दातृत्वेपि सति तस्य लक्ष्मी रसिकैवाभूदित्यर्थः ॥ 5.

परमपुरुष[का](1.6)रदुस्थिताभ्या-
मुपगमितौ वशवर्तितां भुजाभ्याम् ·
विधिरविधुर एव भूरिवारं
रणसमयानवतारयां(1.7)चकार ॥

1 Is it मदनपरवशेव ?. 2 So Ms. Is it कदा ?. 3 or is it 'दमीरपि'? 4 Ms. 'वै.

महता विक्रमेण दुश्श्रिताभ्यामूर्ध्वायमाणाभ्यां भुजाभ्यामायत्तीकृतो विधिरनुकूल एव त(l.8)स्य बहून्वारान्संग्राममुदपादयत् ॥ 6.

अथ कुविधियदृच्छयेव नागा-
र्जुन इति निन्दितभिक्षुयोग्यना(l.9)मा .
निगडगृहपरिग्रहाय मातु-
र्ग्रह इव विग्रहराजवल्लभायाः ॥ 7.

पितुरखिलनृपाविल(l.10)ङ्घ्यभाग्या-
द्भुतवलनिर्मथनैकवीरजन्मा .
गुडपुरमिति दुर्गमध्यरोह-
न्मधुररसाहृतिदोहदेन बालः ॥(l.11)

नागार्जुनस्य यः कुविधिः कुत्सितं पूर्वकर्म तेन हेतुना या यदृच्छा तया हेतुभूतया निर्मितं मातापितृ(l.12)भ्यां कृतं भिक्षुयोग्यं भिक्षुषु प्रचुरतयाश्रितं नागार्जुन इति नाम यस्य स बालो विवेकशून्यो गुडपु(l.13)रसंज्ञितं कोट्टमारोहत् . केन हेतुना मधुरा या रसा भूमिस्तस्या आहृतौ हरणे दोहदो लौल्यं . किमर्थं स्व(l.14)स्या मातुर्निगडगृहे बन्धने परिग्रहार्थं न तु कोट्टंजयायेत्यर्थः. पितुर्विग्रहराजस्य संबन्धिनस्सक(l.15)लै राजभिरलङ्घ्यस्य भाग्यानामद्भुतवलस्य निर्मथने एकवीरं जन्म यस्य सः . बालार्थं बालाश्र-(l.16)यो ग्रहो मातुर्निगडायैव भवति तस्याः पुत्रोपयोज्यसभ्यासितत्वात् . मधरस्य रसस्याहृतौ(l.17) आहारे लौल्येन ॥ 8.

प्रशमितभुवनैकमल्लवीर्य-
ज्वलनविलम्बकदम्बवासवायुः .
समुदितपुरु(l.18)पार्थभागधेयो
निरगमदाहवसाहसाय देवः ॥

1 Ms. °भुष्मा°. 2 Ms. °द्रुत°. 3 Ms. °ड्राज°. 4 Is it बालस्य च ?. 5 Is it °योगिपथ्याश्रितत्वात् or °योग्यभैक्ष्याश्रितत्वात् ? 6 Ms. °स्यह°.

भुवनैकमल्लस्य यो वीर्यज्वलनस्तेन विलम्बो(l.19)र्यदरिदूरीकरणं तथा कदम्बवास एव वायुस्तौ प्रशमितावनपेक्षितौ येन सः यतो युगप(l.20)त्त्रिविष्टपैरूपभाग्यो देवः पृथ्वीराजो युद्धाय निर्गतः ॥ 9.

कुलमुदधिनिवासि कालदत्ता-
भय(l.21)मिव हैमवतीसहोदरस्य ।
युधि सहचरतां नरेन्द्रमूर्ते-
र्नरकरिपोः करिचक्रमाललम्बे ॥

समुद्रे(l.22) निवसत्तथा रणकाले दत्ताभयं पार्वतीसोदरस्य मैनाकस्य कुलं गिरिसमूह इव हस्तिगणो(l.23) राजरूपस्य विष्णो रणे सहचारित्वमापत् ॥ 10.

नृपतिमनुचचार चारुरिक्थ-
क्रमत इवो⏑⏑––⏑––⏑(l.24*)–– ।
⏑⏑⏑⏑⏑⏑⏑–ईवान्तरिक्ष-
भ्रम⏑–⏑––⏑[म]नन्तमश्वयूथम् ॥

अन्तरन्तरिक्षे भ्रा(l.1)·· ········ यमानमित्यर्थः अश्वकुलं राजानमन्यगच्छत् अतः संभाव्यते रिक्थं(l.2)············[सू]र्यस्याश्वानां यूथमिव ·····वेगवत् । अनन्तं बहु । पृथ्वीराजो हि सूर्य(l.3)··· 11.

[अतिभरसहनप्रवृद्ध]कीर्त्ति-
द्विपमिव शेषमहीशमेव मत्वा ।
अहिकवलनकेलि(l.4)[कोविदं त-
त्करभकुलं हयसं[1]]घमन्वयासीत् ॥

राज्ञोतिभरसहनेन प्रवृद्धां कीर्तिं द्विपन्तं शेषं(l.5)············ [भ्रा]मोद्यतमुष्ट्रकुलमश्वसेनामन्वगच्छत् ॥ 12.

1 Ms ए°. 2 Ms भ्रम°.

गलितमयुगपद्युं(1.6)गत्रयेण
क्षितिपतिना युगपत्कृतं नवीनम् .
गिरिशवृषपदत्रयं विदित्वा
धवलवलं वलव(1.7)द्वले ववल्ग ॥

अयुगपत्क्रमेण युगत्रये गिरिशवृषस्य धर्मस्य पादत्रयं गलितं सम्राज्ञा(1.8) नवीनं कृतं ज्ञात्वेव धवलवलं वृषयूथं कटकेवल्गत् ॥ 13.

नरपतिदयितेति माननीयां
क्षि(1.9)तिमिव पादयुगेन न स्पृशन्ती .
चतुरचरणचारचारुरासी-
द्गगन इवात्र पदा पदातिसेना ॥(1.10)

भूमिपतेर्भूमिः प्रियेत्यतो मान्यां भूमिं मत्वेव पदाभ्यामस्पृशन्ती पत्तिसेनाकाशे न्यस्तपदेवासीत् (1.11) चतुरो यश्चरणयोश्चारः क्रमविशेपस्तेया चारुः ॥ 14.

नृपतिरखिलकृष्णपक्षरक्षा-
मणिरिति क(1.12)र्णजुपेव किंवदन्त्या .
उपससृपुरतीतभाविराका-
रमणगणस्सुसितातपत्रभङ्ग्या ॥

अ(1.13)यमखिलानां सर्वेषां कृष्णात्पापाद्बहुलाच्च पक्षाद्रक्षार्थं मणिरिति श्रुतया वार्तयेव भूता(1.14) भविष्यन्तश्च पूर्णचन्द्राश्छत्रच्छलादागताः ॥ 15.

महितमुदधिसप्तकेन सर्वं
सकलधनेभ्य इ(1.15)वैन्द्रचापचक्रम् .
दिशि दिशि शिखिपिच्छनिर्मितानां
मघटत मण्डलमुष्णवारणानाम् ॥(1.16)

1 Read °पस्तेन. 2 Ms. °तम°.

सप्तभिस्समुद्रैस्समस्तमेघेभ्यो विसृष्टमिन्द्रधनुश्चक्रमिव मयूरपक्षकल्पितानां छत्राणां(1 17) मण्डलं दिशि दिश्यमिलत ॥ 16.

असितधवलधूयमानवाल-
व्यजनसहस्रसहायदिग्वि(1 18)भागा .
चकितकलितमोतुलग्नवल्ग-
त्कृतयुगचन्द्रकरेव भूर्बभूव ॥

कृष्णानां श्वेतानां च चम(1 19)राणां सहस्राणि सहाया येषां ते दिगन्ता यस्यां सा भू राजभयाच्चकितो यः कलिस्स एव तम(1 20)स्तस्यानुलग्ना. कृतयुगस्य चन्द्रस्येव कराः किरणाश्च यस्यां सा भूरभूत् ॥ 17.

हृदि हृदि रिपुयोपि(1 21)तां निधातुं
विभजनपूर्वमिवोपतापनाय .
ध्वजपटपटलानि पाटनाय
प्रवहतिरे प्रच(1 22)[लन्ति] सूर्यधाम्नः ॥

चलन्तो ध्वजास्सूर्यतेजोदलनाय प्रवृत्ता अतस्संभाव्यते शत्रुस्त्रीणां प्रतिचि(1 23)········ ··संतापनार्थम् रवितेजो निधातुमिवं ॥ 18.

अविरलरथचक्रचक्रधारा-'
खननविभेनं पृथक्पृथक् पृथिव्याः .(1 24)
[अपरनृपनिखाततापशल्यो-
द्धरणमिवाशयतो विधीयते स्म ॥

रथचक्राण्येव चक्रधारास्ताभिर(1 25**68)विरलं कृत्वा खननस्य व्याजात्राज्ञान्यरा[ज]कृतस्य सन्तापशल्यस्योद्धर···· ·······(1.1)स्य . 19.

---

1 Ms 'हृदि'. 2 Ms. वि'. 3 Ms. 'रिवो'. 4 Ms. 'ते छत्र'.
5 Ms lc at the bottom of page 6 See p. 39, note 4; p. 234, note 2.
7 Ms '·प'. 8 Ms 'गल'.

रथचरणविपाट्यमानधात्री-
तलतलिनोचरिताद्दिवाद्दिवक्रम्.
[करभकुलमुवाह तत्पताका-
प](1.2)टमिव तुल्यगुणं विरूपतायाः ॥

चक्रपाटितभूतलातुलिनं तनु············(1.3)यस्य तत्करभकुलं कर्तृ पताकापटमिवावहत् उष्ट्रैर्वस्यमानेषु············(1.4)गुणं कुतो विरूपत्वात्. यद्वा भूतलस्य तलिनं तनुप्रदेशः ॥ 20.

पटं◡◡◡◡–◡–◡––
[रिपु](1.5)बलनिर्दलनाय कालदूतान्.
प्रतिजिनदनिभादुपागताः स्मो
द्रुतमिव–◡◡–◡–◡–– ॥

[दु](1.6)न्दुभिश्शत्रुमारणार्थं यमकिङ्करानिवाह्वयत् वयमागतास्स्म इतीव भू············॥(1.7) 21.

कटकभरनिपीड्यमानधात्री-
नमनमितोऽन्नमितो महीध्रवर्गः.
उपजिग[मिषु]–◡––◡––(1.8)
चलितुमिवारभतात्तमो ग्रहीतुम् ॥

सैन्यभरेण निपीड्यमानधा[त्री]············(1.9)किंचिदिवोन्नमितः भूमिनमने पर्वतानामौन्नत्यसंभावनात् शत्रूनागच्छ············(1.10)क्तः पर्वतवर्गो भयवशाच्चलितुमिवारब्धवान् ॥ 22.

करभरभसभीरुभिर्भुजङ्गै-
स्त्व[रितमवेशि यदा](1.11) तलं रसायाः.

---

1 Ms. °यं°. 2 Ms. °श्र°. 3 Sic. Is it °तलातुलितं ? The text would then be °तलतुलितोचरि°. 4 Is it पटद्दविरन आत्तुद्दाव भूयो ? 5 Ms. °दीप्र°. 6 Ms. तुलं.

अतिभरविवशस्य भोगिभर्त्तु-
स्तदिव सहायदशां भयातुमीपुः ॥

करभेभ्यो रभस(l 12)भीतैस्सर्पैः पाताले द्रुतं यत्प्रविष्टं तत्प्रवेशवशैः(?) संभ्रांतस्य शेषस्य साहायकं कर्त्तुं सर्पा(l.13) अकार्षुरिव(?) ॥ 23.

पटहविरटितानुवादविद्या-
पतिभिरकारि निवेदनं दिगन्तैः ।
द्युसरिति जलके(l 14)लिनिर्वृतानां
दलति भरेण धरेति दिग्गजानाम् ॥

पटहानां विरटितस्य ध्वनेरनुवादे(l 15) प्रतिशब्दे विद्यापतिभिर्विदग्धै-र्दिगन्तैर्गङ्गाजलक्रीडाप्रवृत्तानां दिग्हस्तीनां भरेण भूस्फुटतीवे(l 16)··· ··· ·· ·· ॥ 24.

⏑ ⏑ कमदलयन्दमाय(?)मस्मि-
न्सति नृपतौ तव वक्रता न योग्या ।
निगदितुमि(l.17) ⏑ — ⏑ — ⏑ — —
⏑ ⏑ ⏑ ⏑ — ⏑ ⏑ ⏑ — ⏑ — ⏑ — — ॥

············विषर········ ···(l.18) 25.

[Lines 19 to end of page missing] (*)

············मुरसहस्रेण शेषे············ति गृहीतमूर्त्तिसहस्रो धलधद्······(l 1)·········कृतां भूमिमवहत् । नासौ शेषनिश्वासाः किं तर्हि भूमिधारणार्थं कृ(l 2)············ ॥ 26.

तुरगखुरपरम्परापरागैः
प्रथमतरं गतमस्तमन्तरिक्षम् ।
पुन(l 3) ⏑ ⏑ ⏑ ⏑ — ⏑ — ⏑ — —*
[क]चिदपि मातुमिभैरशक्नुवद्भिः ॥

---

1 Ms नमेन crossed before 'भी'. 2 Ms. 'क्रीडा' &c. under l. 15.
3 Is it 'रिव निरमायि देहकान्त्या ?

अश्वखुररजोभिराकाशं विनाशं(l.4)············नैर्हेतिभिस्स्वशरीरश्रिया पुनरिव निर्मितम् ॥ 27.

प्रतिपदमघटन्त वै(l.5)[जयन्ती-
भुज ⏑ ⏑ –दभिभूत?]वैजयन्ताः.
दशमुखहृतपूर्वराजराज-
प्रमुखविमानमदच्छिदो नि(l.6)[वेशाः] ॥

············[म]ण्डपा मार्गे मार्गे संपन्नाः वैजयन्त्यः पताकास्ता एव भुजास्तैर्हेतुभिरभि(l.7)············[जि]तश्शक्रप्रासादो यैस्ते तथा दशमुखेन हृतपूर्वाणि यानि राजराज···(l.8)············विमानानि तेषां मदच्छिदः पुष्पकादिविमानसदृशा इत्यर्थः ॥ 28.

तिसृभि(l.9)[रनुसृतेव शक्तिभिस्तं]
प्रणयपरा परिरभ्य राजलक्ष्मीः.
अविरतकरिकर्णतालवात्या-
जडिमभयं(l.10) ⏑ ⏑ – ⏑ [मुञ्चति स्म?] ॥

तिसृभिश्शक्तिभिरनुसृता सहितेतीव तं प्रणयेनालिंग्य राज्यश्रीरचिरतं(l.11)············यो[1] जडिमा ततो भयमत्यजत् तिसृणां मध्यात्कश्चिदेनं मा स्म रुञ्ज(l.12)············गातुं. परिरम्भेण च जाड्यभयं शाम्यति ॥ 29.

प्रतिपथमिलितानुलग्नतत्त(l.13)-
त्पुं[रदयिता]हृदयोपदिष्टरंहाः.
गुडपुरमथ वेष्टयांचकार
क्षितिपतिरुद्धतयुद्धतत्त्वदर्शी ॥(l.14)

अर्थाद्दृष्टुमागतानां प्रतिपथं मिलितानामनुलग्नानां तासां तासां पुर-

1 Ms. °जस्ते°. 2 Ms. या. 3 Ms. °द्दु°.

स्त्रीणां हृदयैरिवोप(l 15)दिष्टं रंहो यस्य स मनोवच्छीघ्रगामीत्यर्थ. तथो-द्धतेपु युद्धतत्वस्य दर्शको राजा गुडपुरम(l 16)वेष्टयन् ॥ 30.

दलयितुमयतन्त दुर्गभाजा-
मथ हृदयं नृपसैन्यसिंहनादाः .
असमसमरस(l 17)त्रनिर्विविक्त-
पितृपतिमङ्गलमूक्तपाठकल्पाः ॥

दुर्गप्रविष्टानां मनो दलितुं राजकटकसिं(l 18)हनादा. प्रवृत्ता. असमो यस्समरस्स एव सत्रेमनवरतान्नदानस्थानं तत्र निर्विविक्तन्प्रवेष्टुकाम(l 19) य. पितृपतिर्यमस्तस्य मङ्गलसूक्तपाठसदृशाः. सत्रे च भोक्तुकामो ब्राह्मणस्सूक्तानि पठति ॥(l 20) 31.

अवनिपतिभयादुपेत्य पार्श्वं
सह चलता कलिनेव दत्तशिक्षः .
दयितमपि विमुच्य वीरधर्म(l 21)
क्वचिदपि विग्रहराजभूरयासीत् ॥

सह चरता सहचरेण कलियुगेन राजभयान्निकटमे(l.22)[त्य दत्तो]-पदेश इव विग्रहराजपुत्रोभीष्टमपि वीरधर्मं त्यक्त्वा क्वापि पलायितः ॥ 32.

समर ⏑ (l 23) ⏑ ⏑ – ⏑ – ⏑ – –
समरसहेपु वहुष्वपि स्थितेपु .
स मरणमपवादसंज्ञमाप्तुं
समरस[योर्भयलज्जयोर्ममज्ज?] ॥(l.24)

········ ··हेपु वीरेपु वहुष्वपि स्थितेपु स राजा पुत्रसंग्रामार्थं न प्रवृ······(l 25··69)··· ·····[अय]शोनामकं मरणं लब्धुं तुल्ययोर्भय-[ल]ज्जयोर्मग्नः . अन्योपि कि ·········· 33.

1 Ms °तन्तु . 2 Ms. °स्य 3 Ms. सत्र° 4 Ms. °शलु° 5 Ms. 'र' written above 'ल'. Comm °चर°. 6 Sic Is it राजा सत्म° or राजपुत्रस्स°?

⏑⏑⏑⏑(1.1)मपदे विमुक्तसत्त्वं
⏑⏑⏑रजोपि तमोदशां प्रपन्नं.
तदपि समरसाक्षि[णोप्यहृएवन्
⏑⏑⏑⏑देवभटा?](1.2)दयः प्रवीराः ॥

राज्ञा भीतानां मारणाभावादपदे अस्थाने भ्रष्टसत्त्वं तं तमोदशां प्राप्तवद्रजो य······(1.3)दयस्तद्देवभटादयः संवव्रुः. देवभटादिभिस्तत्सत्त्वभ्रंशो गोपित इत्यर्थः. रजस्तमसी गुणौ. 34.

[प](1.4)रिवृढरहितशिरोविहीनो
भवति पुमानिति यः पृथुप्रवादः.
अहितभुजभृतां⏑ – ⏑ —
[त](1.5)मगमयच्चरितार्थतां नरेन्द्रः ॥

अस्वामिको लोकश्शिरोरहितो भवतीति यो महाञ्जनप्र[वादस्तं श]-(1.6)त्रुभटानां शिरांसि छित्त्वा सत्यार्थत्वमनयत्. विग्रहराजपुत्रे चलिते शत्रूनवधीदित्यर्थः ॥ 35.

[भुवि पति](1.7)तवतां स्वयोधमूर्ध्ना-
मनुसरणार्थमिवावनम्रमुख्या.
सममहितमहीपतेर्जनन्या
सुभटघटाः प्रभु[रानि](1.8)नाय वध्वा ॥

छेदेन भुवि पतितानां निजभटशिरसामनुगमनार्थमिवा[न]तमुख्या शत्रुराजमात्रा सह वध्वा(1.9) राजा सुभटपंक्तीरानयत् ॥ 36.

असुररुधिरसिन्धुतीर्थिकानां
नर[रुधिराच]मनं क्षपेयपानं..

1 Ms. °दे.° 2 Ms. °दयसंवव्रुः. 3 Ms. °तं. 4 Is it अहितभटशिरांसि कर्तयित्वा? 5 Ms. °थं. 6 Ms. °टाम्र°. 7 Sic. Read °चौरा.°

इति नृ(1 10)पतिशरा इवं अपातो
झगिति निपङ्गनिपङ्क्तितामगच्छन् ॥

पृथ्वीराजेनासुरसमाश्शत्रवो नित्यं · (1 11)अतोसुररक्ताध्यौ तीर्थिकानां तद्वाणानां नररुधिरेणाचमनमपेयस्य पानमयुक्तं भवतीतीव लज्जातो राज(1.12)शरास्तूणे तूर्णं प्रवेशमगच्छन् ॥ 37.

अथ विजयिनि राजनि प्रविष्टे
क्षणमपि निर्गमनं श्रियोतिभीमा .
अरु[ण](1 13)दजयमेरुगोपुरस्य
प्रतिभटमूर्धभिरेव तोरणस्रक् ॥

तत. प्राप्तजये राज्ञि पुरं प्रविष्टे सति शत्रु[मस्तक](1 14)कृता अजयमेरुदुर्गस्य तोरणस्रगेवातिभीमत्वान्निर्गमनं श्रियोरुधत् . श्रीस्तत्रैव स्थिराभूदित्यर्थः ॥(1.15) 38.

मरुदिव दिशि पश्चिमोत्तरायाः
मतिबलवानधिपस्समस्त एव .
तदुपरि परमार्थपौरुष[द्धर्या हय](1.16)-
पतिरेव तिरस्करोति सर्वान् ॥

यथा वायुस्तथा पश्चिमोत्तरायां वायव्यविदिशि सर्व एव प्रभुरति[बल](1 17)वान्भवति तदुपरि हयपतिरेव सहजविक्रमसमृद्धरसन्सर्वानभिभवति ॥ 39.

तमपि मुषितग[र्जना](1 18)धिकारं
विरसलघुं शरदभ्रवद्व्यधायः .
कदशनकुशलो गवामरित्वा-
त्समुदितगोरिपदापदेशा[मुद्रः](1 19). 40.

1 Ms 'तिगि' 2 Ms. 'वाभ्र.' 3 Ms 'स्त्र' 4 Ms. 'आय'.
5 Ms. 'मोन्तरायोसति'. 6 Ms. 'मोन्तराय. 7 Ms. 'गोरि'.

नृपचरणनिपातपातकित्व-
प्रकरणसामयिकः कलेर्युगस्य .
स किल सकलराजमण्ड[लश्री](l.20)-
व्यवधिविधानविधुन्तुदत्वमैच्छत् ॥

गर्जनाख्यो देशविशेषो गर्जनं गर्जितं च तत्र मुषितोधिकार[ो यस्य तं]
(l.21)यश्शरदभ्रमिव विरसं क्षतभूमिकं निर्जलं चातो लघुमनादरणीयं हे-
लातुल············(l.22)गोघ्नत्वात्कुत्सितभोजनकारी तथा समुदिते संभू-
य स्थिते[1] गोरिरिति व्यपदेशो मुद्रा [यस्य]···(l.23*)············[प]-
दच्छेदेन पातकित्व·········णप्रकर्पणक्रिया तत्र क······(l.1)·······-
···[चन्]द्रो नृपाश्च राजानस्समस्तराजमण्डलशोभायाश्छादने राहुभ[व]
·············(l.2)··· ········छादयति ॥                                    41.

किमपरमपरीक्ष्य दीक्षितत्वं
क्षपणविधौ नररक्षसां स पापः .(l.3)
[व्यसृ]जदजयमेरुमेरुभूभृ-
त्कुहरहरेरपि दूतमेकमग्रे ॥

किमन्यत्तस्य वर्ण्यत इति शेषः . न(l.4)[रर]क्षसां म्लेच्छानां विनाश-
करणे तस्य प्रतिज्ञामविमृश्य स म्लेच्छराजोजयमेरुनामदुर्गमेव मेरुप(l.5)-
·········रे हरेस्सिंहस्येन्द्रस्य सूर्यस्य वा दूतमेकं विसृष्टवान् ॥        42.

तमित्यन्तं दूतवर्णनपरं कुलकम् ॥(l.6)

निरवधिकपिलावधप्रशस्तिं
लिखितुमतीव विशालभालपट्टम् .
कृतमिव विधिनैव बुद्धिपूर्वं(l.7)
खलतिदशां गमितं शिरो दधानम् ॥

---

1 Is it °रितस्संभूय स्थितो गो°?   2 Ms. °यमेरुभू.°   3 Ms. °समां.
4 See note 2, p. 254.   5 Ms. °ष्पि°.   6 Ms. °बम्.

गजद्वारस्थवर्गस्तमापतन्तं मन्तं कथमपि निपिपेधेति संबंधः(1 8). गलितिदशां लुब्धनं प्रापितं शिरः कर्मभूतं दधानम् अतस्संभाव्यते निरवधीनामसंख्यानां कपिला(1 9)नां गोविशेषाणां वधो मारणं तत्प्रशस्ति लेखितुमिव वेधसैव विस्तीर्णललाटपट्टं सृष्टम् . लि(1 10)खितुमिति चिन्त्यम् ॥ 43.

परिहृतकलकूर्चपक्ष्मरोम-
व्रजमिव कालिकयाप्यवद्यभीत्या .
स्वपदमु(1 11)लभगोस्तनीगुलुन्छ-
प्रतिफलितामिव बभ्रुतां वहन्तम् ॥

स्वपदे गर्जनदेशे सुलभा या गोस्त(1.12)नी द्राक्षा तद्गुलुन्छेभ्यस्संक्रान्तामिव कपिलवर्णतां दधान अतस्संभाव्यते पापभयात्कालत्वेना(1 13)पि त्यक्तकेशादिकम् ॥ 44.

दधतमपुनरुद्गमाय लूनैस्सह निकुरैरिव लुप्तमूर्धवर्णाम् .
विपिन(1.14)विहगवाशितायमानां
तनुमिव धिग्गिरमप्यशुद्धवर्णाम् ॥

धिग्गिन्द्रायाम . वनपक्षिगमसमां(1.15) गिरं दधतम् लुप्ता मूर्धवर्णा ष्टठणरषा यस्यास्ताम तनुमिव . तत्पक्षे मूर्धवर्णः कागरं अशुद्धा(1.16) [व]र्णो जनङ्गमरं यस्याम ॥ 45.

स्तनमिव हिमवत्स्नुचिन्ववर्ण
जननभुवः ककुभो हिमाद्रिमत्याः .
सिं(1 17)[न्]यसमुचितं विपाण्डिमानं
वपुपि वहन्तमवद्यरोगकल्पम् ॥

---

1 Ms. 'कैद' 2 The verse referred to by this part of the Commentary is lost. 3 Ms. '[illegible]' 4 Ms. '[illegible]'

सिचयानां वाससामुचितं पा(l.18)[ण्डुर]त्वं शरीरे धारयन्तं. पांडुवर्णमित्यर्थः. अवद्यो गर्ह्यो रोगश्श्वित्रादिः तत्समम् अतस्संभाव्यते शु(l.19)-[चि]त्वं शुद्धिश्शुभ्रत्वं च तद्वर्णं यत्रैवं कृत्वोत्तरदिशो जन्मभूमेर्हिमाद्रिव्याहृतम् ॥ 46.

कलयति कथ(l.20)[मा]ह्निकस्य शोभा-
मशुचिनि जन्मनि वाससोपि शुद्धिः.
इति वृजिनमिवेत्यं कञ्चुकित्वं
कृतपरिरंभ(l.21)⏑—⏑[मुद्वहन्त]म् ॥

अशुचिनि जन्मनि चाण्डालत्वे मलिने च जन्मनि सत्याह्निकस्य शारीरस्थस्य(l.22)............[विहि]तालिङ्गनं वृजिनं पापं कर्मभूतमुद्वहन्तम् ॥(l.23**70)[6] 47.

* * * * * * * * * * *

न्धिस्थानेषु भग्नास्सर्वेव......यस्य भाजनं दृष्ट्वा राज्ञां पडङ्ग.........
...(l.1)न केवलं जनानामङ्गान्य...भग्नानि यावद्राजाङ्गान्यपि दुर्गाङ्गे भग्नानीत्यर्थः. भयात्सर्वे दुर्गं प्रविष्टा [इ](l.2)ति तात्पर्यम् ॥ 48.

भापादोपवशाद्गिरां वलरजस्तोमैर्दिशामम्भसा-
मदणां भानुरुचां च दुष्कृतभरा[द्द्या](l.3)वापृथिव्योरपि.
काठिन्यात्कुलिशस्य मारकफलासङ्गादिपूर्णां वभा-
द्धेनूनां [च] धरण्यरोधि दशधा [तथ्या](l.4)भिर्थैर्गोरिभिः ॥

दशधा गोरिभिर्गवामैरिभिर्वधकैर्धरण्यां गौररोधि विप्लुता. तानेव दशप्रकार[न्भा](l.5)पादोपेत्यादिनाह. भापादोपवशाद्गिरां रोधः. वलरेणुनिकरैर्दिशां गवां रोधः. तथाम्भसां गवां तै[रे](l.6)व रोधः. तथादणां गवां

1 Ms. पाडु°. 2 Ms. °मश्वि°. 3 Ms. °ल्जि°. 4 Ms. °भास°. 5 Ms. °वैस.
6 Copyist's remark अत ऊर्ध्वं द्विशाणि पत्राणि प्रायः गलितानि. 7 Ms. °गौं°. 8 Ms. गौ°.

तैरेव रोधः. पापभराद्द्यावापृथिव्योर्गवोबाधा. कुलिशस्य गोः कोठिन्याज्जर्यः. (l 7)शराणां मारफलकफले[2] लोहमये मुखे आसन्नाद्धेनूनां गवां वधात्. तथा च कोशः.

वाग्भूदिग्रश्मि(l.8)वज्रेषु पश्वक्षिस्वर्गवारिषु

गोशब्दस्य स्मरणादशधा सैष्याभिधैस्सत्यार्थनामभिः ॥ 49.

कारागाराधिका(l 9)राहितरणरणकैः प्रेतनाथस्य याव-
चैर्दुर्गे गूर्जराणां त्वतनुभिरसुरैर्नड्वलाख्ये निमग्नम्.
पृथ्वीराज(l 10)स्य तावन्निखिलदिगभयारम्भसंरम्भसीमा-
भीमा भ्रूभङ्गभङ्गी विरचनसमयं कार्मुकस्याचचक्षे ॥(l.11)

कारागारे बन्धनस्थानेधिकाराय प्रेतनाथस्य जनितं रणरणकं चिन्ता यैः. पूर्वं यमकारागारस्य शून्यत्वा(l 12)च्चिन्ता नाभूत् तदा तु यमेन कारागारं प्रवेशिताः अतो यमस्य प्रत्यवेक्षाचिन्ता जातेत्यर्थः. तैर्मनूष्यरू(l 13)-पैरसुरैर्नड्वलनाम्नि दुर्गे यावन्निमग्नं तावद्दिशामभयदानस्य सीमावधिः भ्रुकुटिर्धनुषो न(l.14)मनमाख्यत्. राज्ञा यदा भ्रुकुटिः कृता तदा भटैर्धनुर्नमितमित्यर्थः. ॥ 50.

भ्रुकुटिकुटिलः पृथ्वीभर्तुर्गद(l.15)न्नवनेश्शिवं
मिलदरुणिमा भाले कोपि व्यभाव्यत कालिमा.
जलधर इवाकस्मार्दम्भदेन संहार्चि(l 16)षा
चिकुरसरणिं माप्तः कर्तुं प्रतापहतिं द्विषाम् ॥

राज्ञो भ्रुकुटिरूप. कुटिलश्च तथा मिलन्न(l.17)रुणिमा कोपरागो यस्य स कालिमा कार्ष्ण्यं ललाटे जनने(?) व्यभाव्यत दृष्टः शत्रूणां प्रतापं हन्तुं वैद्यु(l.18)तेनाग्निना सह केशसीमां प्राप्तो मेघ इव. नेयं भ्रुकुटिः किन्तु मेघः न चायं कोपरागः कि(l 19)न्तु विद्युदग्निः. विद्युत्सहितो मेघश्शत्रूणां प्रतापाग्निं शमयितुं संप्राप्त इति सम्भावनमिति भ(l 20)द्रम् ॥ 51.

1 Ms °ष्णोका°. 2 Ms. °य 3 Sic Is it °रफलके? Is the text °मारफलका°?
4 Ms. तिष्या°. 5 Ms °नैसूं°. 6 Ms नमू°.
7 Ms °रै°. 8 Ms. मदा°. 9 Ms. वैरिया crossed before के°.

श्रीश्रीकण्ठचरित्रकाव्यविवृतौ विश्वस्य निरवत्य च
च्छायाभाजि किरातकाव्यविवृतौ(1.21) विश्रम्य रस्यश्रिवि.
पृथ्वीराजजयाख्यकाव्यविवृतौ संवेशमिच्छाम्यहं
शान्त्येदजन्वदृमेदु(1.22)रमतिर्ज्योत्स्नाकरो लावणिः ॥

श्रीलोलराजसुतपण्डितभट्टनोन-
राजात्मजो विवरणेन स [जो](1.23)नराजः.
सर्गं चकार दशमं सुत्रमत्र पृथ्वी-
राजाख्यराजविजयाभिधकाव्यराजे ॥(1.24)

पृथ्वीराजविजयेविवरणे श्रीजोनराजकृते दशमस्सर्गः ॥

1 Ms. [illegible] 2 Ms. [illegible] 3 Ms. [illegible] 4 Ms. [illegible]

# [ एकादशः सर्गः ]

——————⌣——————⌣तेजसा .
तेजोन्तरतिरोधानं व्यानञ्ज नृपतेर्मुखम् ॥

अ · · · (11)··· ··· स्पृष्टं राज्ञो मुखं तेजोन्तराणामन्येषां तेजसामन्तर्धानमकरोत् ॥ 1.

दर्पणेष्विव सं(12)क्रान्तं मुखेषु भुजशालिनाम् .
सहस्रमुखतां प्राप तस्य शूरस्य तन्महः ॥

आदर्शेष्विव वीराणां मुखे(13)षु संक्रान्तं तस्य शूरस्य रवेश्च तेजस्सहस्रप्रकारतां प्रापन् ॥ 2.

ततः कदम्बवासेन धैर्यवासेन मन्त्रिणा .
वि(14)ज्ञप्तस्सत्यदासेन सभाव्यासेन पार्थिवः ॥

धैर्यवासत्वादिगुणविशिष्टेन कदम्बवासाख्येन मन्त्रिणा(15) राजा विज्ञप्तः ॥ 3.

राजन्नवसरो नायं रुषां भाग्यनिधेस्तव .
किं क्रमेलकभक्ष्येषु तार्क्ष्यः फणिषु कुप्यति ॥(16)

भ ·····वतो नायं रोषकाल. उष्ट्रैर्भोक्तुं शक्येषु सर्पेषु गरुडः किं पराक्रमते ॥ 4.

तिलोत्तमामिवोद्दि(17)श्य रसामतिमनोरमाम् .
सुन्दोपसुन्दभङ्ग्या ते स्वयं नंक्ष्यन्ति शत्रवः ॥

---

1 Ms. °नेष्या°. 2 Ms. °म्रिपु. 3 Ms. गरुड. written above क्रमेलक.(!)

यथा तिलोत्तमामुद्दिश्य(1.8) सुन्दोपसुन्दौ नष्टौ तथा तव मनोज्ञां लक्ष्मीमुद्दिश्य शत्रवस्त्वयं नाशमेष्यन्ति ॥. 5.

इति तस्मिन्वदत्येव(1.9) महीनं विनयानतः .
तेजसेव भ्रमद्दृष्टिः प्रतीहारो व्यजिज्ञपत् ॥

एवं तस्मिन्कथयत्येवं वि(1.10)नयेन नतोऽतस्तेजसेव सम्भ्रान्तदृष्टिः प्रतीहारो विज्ञप्तवान् ॥ 6.

हृदयमान्तमिवानन्दं विकस्वरमुखो(1.11) वमन् .
लेखहस्तः पुमान्प्राप्तो देव गूर्जरमण्डलात् ॥ 7.

आकर्ण्येति प्रतीहारभारतीं भारतेश्वरः .(1.12)
तूर्णं प्रवेशयेत्यूचे स च दूतमवीविशत् ॥

एवं प्रतीहारविज्ञप्तिं श्रुत्वा त्वमेनं प्रवेशयेति(1.13) राजा तमेवं प्रत्युक्तवान् प्रतीहारश्च दूतं प्रवेशितवान् ॥ 8.

मुखे प्रसादसंवादसंमतैस्स मितैः(1.14) पदैः .
गूर्जरोपज्ञमाचख्यौ घोरं गोरिपराभवम् ॥

मुखे प्रसादस्य संवादेन प्रियैरल्पैः पदैः(1.15) स दूतो गूर्जराणामुपज्ञाद्यज्ञानं. प्रथमं गूर्जरैरेव कृतमित्यर्थः . गौरीणां म्लेच्छानां पराभवं कथि(1.16)तवान् . उपज्ञोपक्रमंमिति नपुंसकम् . उपज्ञा ज्ञानमाद्यं स्यादित्यमरः. ॥ 9.

उच्चैश्श्रवस्स्वसा(1.17) लक्ष्मीरमुनैव कलङ्किता .
इति क्रोधेन निश्शेषैः परित्यक्तं तुरङ्गमैः ॥

उच्चैश्श्रवसस्सोदरी श्रीर(1.18)··········दूषितेतीव रुषा सर्वैरश्वैस्त्यक्तम् ॥ 10.

---

1 Ms. °गतः. 2 Ms. °स्वेव. 3 No Comm. 4 Ms. °रति.
5 Ms. °यं गो°. 6 Panini, 2. 4. 21. 7 Amara. 2. 692.

द्विजराजो मम भ्राता द्विजराजाश्रयः पतिः .
कथं(1 19) [मातङ्ग]सङ्गो मे न्याय्य इत्युज्झितं श्रिया ॥

द्विजराजश्चन्द्रो ब्राह्मणश्च मम भ्राता भवति द्विजराजो गरुडस्तदा-
(1 20)··· · ··तो मम मातङ्गैर्म्लेच्छैश्चाण्डालैश्च सङ्गः कथमुचित इति
लक्ष्म्या त्यक्तम् ॥ 11.

अपचि(1 21)[अमु]श्चन्द्रगुर्मसमर्थैरिवासुभिः .
पृष्ठव्रणमुखेनैव त्यक्तनिरशेपसंनिकं ॥

अशुचित्वान्मुं(1 22*;*7i)खं द्रष्टुमशक्तैरिव······पृष्ठव्रणमार्गेणैवो-
ज्झितसमं[स्त] · ··· · (1 1)इत्यर्थः ॥ 12.

निशम्य दुर्यशोमात्रसैन्यं हयपतिं गतम् .
विज्ञापयितुमारभे पार्थिवं [पृथिवीभटः] ॥(1 2)

अपयशोमात्रमेव सैन्यं यस्य तं हयपतिं गतं श्रुत्वा पृथिवीभटो रा-
जानं विज्ञप्तवान् ॥ 13.

——— —⌣ (1 3)मंसाद्य स्वामिन्या स्मावमन्यथाः .
भाव्यर्थदर्शिनात्मानं धन्यं मन्यस्व मन्त्रिणा ॥

हे स्वामि·· ·····(1 4)त्वं मावमंस्थाः भविष्यन्तमर्थं जानता कद-
म्बवासेन मन्त्रिणा करणभूतेन त्वमात्मानं धन्यं मन्यस्व ॥ 14.

[तिलोत्तमे](1 5)व हि रमां रञ्जयन्ती त्वयि गोपतौ .
स्वयं जगाम लोभान्धगोरिक्षयनिमित्तताम् ॥

गोर्भूमेस्स्वर्गस्य ·········[त्व](1 6)यि सानुरागा लक्ष्मीस्तिलोत्तमा
यथा लोभान्धानां गोरीणां म्लेच्छानां क्षयकारित्वं गता ॥ 15.

---

1 Ms ब्राह्मणश्च ie under 1 20 2 Ms द्विग॰ 3 Ms सम 4 Ms ॰ष्ठुसमम॰. 5 Ms ॰वासु॰ 6 Ms ॰ष्ट॰ 7 Ms ॰नेव 8 Ms ॰त्वा-मुन्दुसं॰. 9 Ms has र on margin. 10 Ms. ॰मम॰. 11 Ms. ॰ना॰. 12 Ms. ॰व्यायेरांश॰. 13 Ms. भन. 14 Ms. रमा.

इ———⏑—(1.7)——मन्तर्हरिरभ्यधात् .
उपमानं श्रियः केयमिति प्रासङ्गि—⏑— ॥

.............क्यान्त......(1.8)वदत् केयं लक्ष्म्या उपमानं उक्तेति शेषः ॥ 16.

इतिहासशताभ्यासव्यासः क्ष्मावास[सन्निधौ](1.9) .
इतिहासशुचिं वन्दी भूयोप्युदहरद्गिरम् ॥

पुरावृत्तज्ञाने व्यासो वन्दी राजान्तिके एव.........(1.10)तां वाचं पुनरभ्यधात् ॥ 17.

तिलोत्तमेति ललिता काप्येषा चतुरक्षरी .
देव व्यस्तसमस्तस्वारप[श्लेषोः] (1.11)पंचसायकी ॥

तिलोत्तमेत्यक्षरचतुष्टयं पञ्चबाणस्य पञ्चशरा भवन्ति व्यस्तसम-............(1.12)गुणस्य उकारस्य विश्लेषेण पञ्चाक्षरतोदयात् ॥ 18.

रूपस्योत्तममुञ्चित्य रम्भादि⏑⏑लंति[1].(1.13)
परीक्षापूर्वकारी यां ससर्ज चतुराननः ॥ 19.

भवद्रुमफलं मत्वा यन्मुख—⏑——⏑— .(1.14)
मिथस्सुन्दोपसुन्दाभ्यां युद्ध्वा चक्रे पदं दिवि ॥

यन्मुखदर्शनमेव जन्मवृक्षस्य............(1.15)सुन्दाभ्यां स्वर्गे युद्ध्वा स्थितिः कृता ॥ 20.

आनन्दसम्पदो मा गात्तन्मुखस्या[र्ध]भागिताम् .
[इतीव?]—⏑—(1.16)व्याधिमन्दमिन्दुं व्यधाद्विधिः ॥

तस्य मुखस्य संबन्धिन्या हर्षश्रियोर्धभागी चन्द्रो मा......(1.17)-राजयक्ष्मणा हतं चन्द्रं विधिः कृतवान् ॥ 21.

1 Is it 'दिकललंतिकाम्'? 2 No. Comm. 3 Ms. 'ता' 4 Ms. चन्द्र crossed after 'र्ध'.

रूपायत्ततां यातं तथास्यास्सुरयोषितः ।
[अनुरक्त?](।18)मिवोपास्ते चित्रस्थामपि तां यथा ॥[1]

रूपं······विधेयं तथाभूयदनुरागादिव रूप······[लि](।19)खि-
तामपि तां सेवते ॥ 22.

तथा च पूर्वचारित्रं त्वदीयं यत्र चित्रितम् ।
देव तत्रेयमभ्ये[ति पश्य धा](।20)त्रीसुतामपि ॥

तथा हि त्वदीयं पूर्वजन्मचरितं यत्र यत्र लिखितमस्ति त·········
····· [सीं](।21)तामप्यभ्येत्यनुकरोति ॥ 23.

इति पृथ्वीभटेनोक्ते दूतं संतोष्य पार्थिवः ।
विसृज्य म[न्त्रिणः सर्वानपि](।22)शश्चित्रमण्डपम् ।
वन्दिनेत्युक्ते दूतं प्रतिमुच्यामात्यान्विसृज्य स चित्रस्थानम······
(।23*) 24.

———⏑——————⏑—⏑— ।
———⏑————————जो व्यजिज्ञपत् ॥

समस्तानां रा·············(।1)···सयाङ्गुल्या चित्रं दर्शय······
···[विज्ञ]नवान् ॥ 25.

लूनैरत्र दशाननस्य भगवान(।2)[ष्टाभिराद्य?]र्मुखै-
र्मन्ये मानवदेव शस्तुरकरोदष्टावधीनास्तनूः ।
कृत्तं यद्वदनं त्वनेन नवमं मायच्छदस्मात्फ(।3)[लं]
[त्वत्तो मृत्यु]मतोधिकं त्वसुलभं मत्वाप्यरात्सीत्करम् ॥

हे मानवानां देव कृत्तैरष्टाभिर्मुखैर्हेतुभिर(।4)[ष्टौ पृथि]व्यादीस्तनूर्मूर्ती रावणस्यायत्ताः कृतवान् ततो रावणेन नवमं मुखं यल्लूनं फलं त्वत्स्कृतं मरण(।5)[मदात्] ततो दशमशिरश्च्छेदारम्भे हरोस्य करं रुद्धवान्

1 Ms °स्मरस्यापिन.
2 Ms °तम°
3 Ms °ने°.
4 Ms. °ते°.
5 Ms °नूम्°.
6 Add तस्य.
7 Ms. °श्छे°.

अहं मन्ये[1] त्वत्कृतमरणादधि(l.6)[कं]······सत्वा. अयमर्थः. अष्टशिर-
श्छेदफलान्निजाष्टमूर्त्तिषु प्रभुत्वदानादधिकं नवमेशिर(l.7)[श्छेद]फलं ना-
रायणहस्तेन मरणं रावणस्य मया दत्तम्. दशमं शिरोसौ यदि मद्भक्त्या
[लुनाति](l.8) तदा किमतोधिकं फलं ददामीति दशमं शिरश्छिकीर्तिषो रावण-
स्य महेश्वरो हस्तं रुद्ध्वा(l.9)[नि]ति संभावनम्॥ 26.

पयोधेरुत्पन्नान्करितुरगधन्वन्तरितरू-
न्दविष्ठीभूतायां जननभुवि खिन्ना(l.10)[निव] विदन्.
इमानेतां लङ्कां यदपि दशकण्ठो यदनय-
त्तदप्येते सीदन्त्यपहृतिकुकीर्तेरसह(l.11)[नात्]॥

समुद्राज्जातानैरावणोच्चैश्श्रवोधन्वन्तरिपारिजाताञ्जननभुवि जन्मभुवि
समुद्रे दविष्ठीभू(l.12)[ता]यां दूरं गते सति खिन्नानुद्विग्नानिव जानन्. ज-
न्मभूमिस्समुद्र एषां दूरस्थ इत्युद्विग्नानामै(l.13)[रा]वणादीनां संभावना-
दित्यर्थः. रावणस्तानिमानैरावणादींल्लंकां यदनयत्तथापि हृतापह(l.14)[र]-
णलज्जया ते सीदन्ति॥ 27.

विजित्य ब्रह्माण्डभ्रमणनिपुणं पुष्पकमयं
विलासप्रासादं पुर(l.15)⌣हत(?) लङ्कां दशमुखः.
असन्तुष्टो भ्रातुस्तदपि नियतं नेतुमलका-
मुदस्यन्कैलासं वरदमिम(l.16)[मीशं] ज्वलयति॥

ब्रह्माण्डेपि भ्रमणं तत्र निपुणं पुष्पकसंज्ञं विलासप्रासादं प्राप्याप्य-
सन्तु(l.17)ष्टो रावणो लङ्कां नगरीं यदह(?)त्तदपि ततो नूनमसन्तुष्टो रावणो
भ्रातुरलकां हर्त्तुं कैला(l.18)[समु]त्क्षिपन्रावणो वरदमीश्वरं ज्वलयति॥ 28.

---

1 Ms. त्वत्कृतात् crossed after °न्ये.    2 Ms. °श्छे°.    3 Ms. °वर°.
4 Is it °रठोसम°?.    5 Ms. °धान्व° See p. 163, note 5.    6 Is it यदहरत स°?
or यदनयत स°?.    7 Is it °दहत्त°? or °दनयत्त°?

उत्क्षिप्तोयं मुहूर्तं स्फटिकगिरिरितश्चक्रवर्त्तिन्यमु(l 19)[ष्मि-
न्नन्त]स्संक्रान्तिभाजि प्रथमजलधरश्यामले राक्षसानां .
देवस्यार्धेन्दुमौलेर्वपुरनुपग(l 20)[तत्वेपि?] मृत्युंजयाख्यं
पुष्णाति स्पष्टलक्ष्माभरणकुमुदिनीकान्तबिम्बासनत्वम् .

सजल(l 21)[मेघनि?]कामेस्मिन्राक्षसानां चक्रवर्तिनि रावणे प्रतिबिम्बिते सति मृत्युंजयसंज्ञं रूपमधा(l 22**72)रय[तोऽ ]प हरस्य प्रकटकलङ्कचन्द्रबिम्बाननत्वं कर्म स्तु ·· · · ···(l 1)यदा कैलासो रावणेन कराग्रे पत्क्षिप्तस्तदा रावणे प्रति[बिम्बिते?]··· ·· ·[मृत्युंजय](l 2)रूपोचितं चन्द्रासनत्वं संपादयति ॥ 29.

लङ्कायां पुरि—⏑—⏑⏑⏑———⏑———⏑—(l 3)
प्रायं सोदरजातमातुरतमा यावत्प्रयुंक्ते रमा .
तावद्देवा⏑⏑—⏑—⏑⏑⏑———⏑———⏑(l 4)गि-
ग्रामण्यं कृतकप्रसुप्तममरस्तोमः स्तुतिं प्रस्तुते ॥

··········(l 5)दग्रामावसादं समुद्रमुखाच्छ्रुत्वात्याकुला लक्ष्मीस्त्वां या[व]······(l 6)ण क्रीडामहार्ये फणि····· पे कृतकं कृत्वा त्वां प्रसुप्तं बुध्वा स्तुतिम·· ···अयमर्थः रावणो(l 7) ··द्भुतानामै[राव]णादी······सुपद्रवनिवारणार्थं लक्ष्मीस्त्वां यावत्प्रेरयति [तावद्देव]वर्गस्स्तुतिं कर्त्तुं प्र(l.8)-वृत्तः ॥ 30.

आवेदितेषु दशकन्धरदुर्नयेषु
लज्जाभरानतमुखैस्त्रिदशै[: पुरस्ते] .
एतानि पश्य तनु[भृ(l 9)न्ति?] भृशं ज्वलन्ति
पातालसंतमसजिन्ति तवायुधानि ॥

राक्षसमात्रेण वयं जिता इति लज्जा(l 10)भरेण नम्रैश्च सद्भिर्देवै रावणाप[न]येषु तवाग्रे निवेदितेषु सत्सु देवतारूपमूर्त्तीनि तवायुधानि भृशं ज्व-(l.11)लन्ति . अतः पाताले संतमसं जितवन्ति क्रोधादिति भावः ॥ 31.

1 Ms. °:क्रा° 2 Ms चन्द्रा°. 3 Ms. °स्व. 4 Ms. °सस°. 5 Ms तना°.
6 Ms. देवनारूप lc. under l.10.

पश्यामी चरणनखांशुभिस्त्वदीयै-
र्गङ्गाम्भश्चिररचितानुचर्यचर्याः ।
पेयूषोद्धरणदिनाधिकप्रमोदाः
क्षीरोदादमृत[भुजः ख](1.13)मुत्पतन्ति ॥

त्वत्पादनखरश्मिभिर्हेतुभिर्गङ्गाजलेनेव चिरं रचितानुचर्यचर्या ······
(1.14)···नखरश्मिभिः कृतगङ्गास्नाना इवेत्यर्थः अमृतभुजोमराः पेयूष-
स्योद्धरण······(1.15) दो येषां ते क्षीराम्बुनिधेर्दिवं गतास्त्वं पश्य । अयमर्थः
रावणकृतमवमानं·········(1.16)प्रणम्य देवा गता नाकम् ॥ 32.

नाकेसदां परिषदि प्रतिमुच्य यान्त्यां
संवाहने चरण[योर्विहितो](1.17)द्यमायाः ।
श्रीर्हारमध्यमणिदर्पणबिम्बितेयं
गर्भप्रवेशमिव वाञ्छति कर्तुमुर्व्याः ॥

······(1.18)मुच्य देववर्गे गते सति त्वत्पादसेवोद्यताया भूमेर्हार-
मध्यप्रतिबिम्बिता लक्ष्मीरन्तः प्रवेशं कर्तुमि(1.19)वेच्छति । अयमर्थः श्री-
स्त्वामिनोतिप्रियां भुवं मत्वा तत्प्रवेशे इव प्रवृत्तेति अन्यश्च·········
[क](1.20)रोति ॥ 33.

शान्तां कान्तां च बिभ्रत्स्वतनुमिव तनुं पुत्र[कामेष्टियाजी?]
सावित्रस्यैष राज्ञो मुनिसदसि प(1.21)रामृश्यतामृश्यशृङ्गः ।
शृङ्गं श्रुत्वा ललाटे⏑ ⏑ ⏑तरलितः काममस्यैव मध्या-
दग्ने[रुद्धृत्य पा](1.22)त्रं कनकमयमयं पूर्णपात्रीकरोति ॥

नाम्ना शमित्वेन च शान्तां कान्तां कान्तिमतीं······(1.23)मूर्तिं द-
धत्सावित्रस्य सूर्यवंशस्य राज्ञो दशरथस्य पुत्रकामेष्टियाजक ऋश्य···-
······(1.24*)···········णो शृङ्गं श्रुत्वा साश्चर्योयं दशरथोग्नेर्मध्यात्सु-

1 Ms. 'रादा'-   2 Ms. श्रीहा'-   3 Ms. वांन्छ'.   4 Is it ऋनुकत'?

वर्णपात्रमुत्पाद्या(।1) ······· तीत्यर्थः. अयमर्थः दशरथस्य पुत्रकामेष्टि-
मृश्यशृङ्गो[1] यदाकरो(।2)त्तदाग्नि ········चरुपूर्णां दधत्पुरुषः प्रादुर्भूतः
ततो दशरथस्तां सुवर्णपात्रीमृश्यशृ(।3)ङ्गाय दत्तवान् ॥ 34.

योयं पयश्चरुरयं तुहिनांशुबिम्ब-
मेतत्तले कनकभाजनमेष भानुः.
अग्नेरुदेति(।4) पुरुषोयमिति क्षयाय
धामत्रयं घटितमत्र निशाचराणाम् ॥

यः क्षीरचरुस्स चन्द्रः क्षीरच(।5)र्वाधारभूतं हेमपात्रं स सूर्यः अग्नेर्यः पुरुषो निर्गतस्सोयमग्निरिति निशाचराणां क्षयार्थं धामत्रयं संघ(।6)टितमिति संभावनम् ॥ 35.

अम्भोधेरुदरे चिरस्य जनितं तेजोवधं निद्रया
संमृज्येव महर्षिमन्त्रनिन(।7)दैः पुत्रीयया चानले.
वीर्यं वैष्णवमुद्गतं चरुमिषादेतद्धरित्रीभुज-
स्साविभ्रस्य करद्वयेत्र पुरुषः(।8) कोप्येष विन्यस्यति ॥

चिरं समुद्रमध्ये निद्रया जनितं तेजोवधं मन्त्रध्वनिभिरग्नौ पुत्रीयेष्ट्या च होमेन(।9) संमृज्य निवार्येव चरुरूपमुद्गतं विष्णुतेजः कोपि दिव्य एष पुरुषस्साविभ्रस्य राज्ञो हस्तद्वये न्यस्यति(।.10). अयमर्थः तेजोजलयोरन्योन्यप्रतिपक्षभूतत्वात्समुद्रान्तर्निद्रया हरेस्तेजोवधो जातस्तस्य च शब्दै-(।11)र्होमेन च निवृत्तिरुचिता ततो वीर्यं दशरथस्य दिव्यः पुमान्प्रतिपादयति ॥ 36.

दृष्टात्कोशलकेकयेन्द्र(।.12)सुतयोरभ्यर्थिताभीष्टयो-
र्वाग्देवीरमयोरिवामृतचरोश्चित्तादिवांशावुभौ.

1 Ms °मृश्यशृङ्गो° lc on margin, °दशरथो° crossed in the text 2 Ms °त्तलुत्ते. 3 Ms समृ: 4 Ms °चराणा lc. under l 5. 5 Ms मसृ° 6 Ms °निनदैः. 7 Ms °त्वये°. 8 Ms °सुपर्न lc under l 9. 9 Ms °हैमे° 10 Ms. °कैक°.

लेभेसौ मलयेश्वरस्य(1.13) तनया पुण्यंप्रतापौ यथा
नीतेः पूर्णमिवाप्तवान्सुतचतुर्वर्गं ततः पार्थि(1.14)वः ॥

सरस्वतीलक्ष्म्योरिव पूज्यवल्लभयोः कौसल्याकैकय्योः(1.15) दत्ताच्चि-
त्तादिव द्वौ भागौ पुण्यप्रतापाविव सुमि(1.16)त्रा लेभे ततो राजा नीतेः
पूर्णं नीतिसयं सुतानेव चतुर्वर्गं धर्मार्थकाममोक्षांल्लब्धवान्(1.17). पूरणगुणे-
ति षष्ठी. अयमर्थः कौसल्या वाग्देवीवदभ्यर्चिता कैकेयी लक्ष्मीवदभीष्टा
(1.18)ताभ्यां दशरथाचित्तवच्चरुभागः प्राप्तः ताभ्यां च दाक्षिण्यात्सुमित्रायै
भागांशौ दत्तौ इति पुत्रचतु(1.19)ष्टयोत्पत्तिरित्यर्थः ॥ 37.

जन्मान्तरं स्वयमरिष्टगृहे तदेत-
द्देव त्वमत्र परिभावय रामनाम .
हस्ता(1.20)ङ्गुलीर्विनिदधद्वदने पुरैव
पौलस्त्यमूर्धगणनामिव निर्मिमाणम् ॥.

राम इति नाम यत्र(1.21) [तज्जन्मा]न्तरमर्थात्पूर्वरूपं परिभावय पश्य
अरिष्टगृहे सूतिकागृहे मुखे हस्ताङ्गुलीः क्षिं(1.22)······संभाव्यते पुरैव
प्रथममेव रावणशिरोदर्शकसंख्यामिव कुर्वत् ॥ अयमर्थः स्वभावे(1.23)-
······ङ्गुलीर्बाला आस्ये क्षिपन्ति. तत्रोत्प्रेक्ष्यते दशाननस्य. शिरोगणना-
हेतोः क्षिपतीति ॥(1.24**73[7]) 38.

सेयं कोसलचक्रवर्तितनया स्वत्पीतवामस्तनी
देवी ल[क्ष्मणपीतदक्षिणकुचा?]——‿——(1.1)हशोः .
शत्रुघ्नेन सह स्तनंधयंयुता कैकेय्यसावप्यसौ.
——‿‿‿‿——[सु](1.2)मित्रा मुखम् ॥

सेयं कौसल्या देवीहास्ति कीदृशी त्वया पीतो वामस्त[नो यस्याः]

1 Copyist leaves a blank between °स्य° and °प्र°, °र्थि° and °वः, °य्योः° and द°, °मि° and °त्रा°. 2 Ms. °तापो. 3 Ms. °र्वर्गं. 4 Panini, 2. 2. 11. 5 Ms. °गसं°. 6 Ms. °र्वन्. 7. Ms. has पृ. रा. प. vertically on margin. 8 Ms. °संभयु°.

.........(1 3)पीतो दक्षिण: कुचो यस्याः अतस्सापत्नेये स्नेहाधिक्याद्दृष्टयोर्गोङ्कयोयात्रेत्यारोप:(?) भरतशत्रुघ्नाभ्यां पीत(1 4)स्तनी असौ च कैकेयी असौ सुमित्रा सपत्नीविनयात्रत्रमुख्यस्ति . हेतुरुत्प्रेक्ष्यते . निष्प्रयोजनास्तन्य(1 5)भरात् . स्नेहदाक्षिण्यवशात्कौसल्याकैकेयीभ्यां सुमित्रातनययोः पोषितत्वादिति भावः ॥ 39.

अ[न्वितौ](1 6) रामभरतौ रविनारायणाविव .
इमौ लक्ष्मणशत्रुघ्नौ विनतानन्दनाविव ॥

सूर्यनारायणावि(1 7)व रामभरतौ अन्वितावबियुतौ सह लिखिताविह स्त. विनतानन्दनौ अरुणगरुडाविव लक्ष्मण(1 8)शत्रुघ्नाविह स्त:. अयं भाव: रविनारायणौ कश्यपसुतौ तयोर्द्वैमातुरौ विनतासुतौ यथा त(1.9)था रामभरतयोर्लक्ष्मणशत्रुघ्नौ ॥ 40.

उपनयनगृहं तदेतदस्मिन्मुनिरयमाभरणाय(1 10)ते वसिष्ठः .
अधरिततपनैर्महोभिरस्य प्रबलयतीव निजं वपुः कृशानुः ॥

तदुपनयनगृह(1 11)मेतत् . अस्मिन्नुपनयनावासेयं वसिष्ठो भूषणीभूतः सूर्याधिकैरस्यैव तेजोभिरत्राग्निस्त्वकी(1 12)यं प्रबलामिव कुरुते . आज्यादिजाता तेजोवृद्धिर्वसिष्ठतेजोभि: कृतेति सम्भावनम् ॥ 41.

चूडापं(1 13)चकमण्डनीकृतनखज्योत्स्नाप्रसूनोत्करः
पर्यायेण मुनिर्विभाति भवतां पा--श्चतुर्णामयम् .(1 14)
मन्येनेन सुतेजसा विरचिते पश्चाद्गमन्त्रार्पणे
देवस्यायतनेपि जन्मनि मनाङ्नास्ति क्वचिद्दुर्न(1 15)यः ॥

क्रमेण चतुर्णां भवतां चूडापञ्चके मण्डनीकृतो नखज्योत्स्नापुष्पसमूहो येन तेजस्वि(1 16)ना पश्चाद्गस्य मन्त्रस्यार्पणे कृते सत्यस्मिञ्जन्मन्यपि क्वापि न तव दुर्नय इत्यहं जाने . पूर्वजन्मा(1.17)न्तरे यस्तेनाशीर्वादः प्रयुक्तस्तन्माहात्म्यादद्यापि भवतां सर्वत्र प्रसिद्धिरित्यर्थ. ॥ 42.

1 Ms 'दा' is under 1 4. 2 Ms 'द्वैमातुरौ'. 3 Ms. 'दोष'. 4 Ms. 'त्मार'.

अयमृषि(1.18)हपा विश्वामित्रस्तपोग्निदिधिक्षित-
त्रिजगद्भयक्रीडादानप्रतिग्रहिवेधसम् .
उपकरणतां(1.19)मानेतुं त्वां जगन्निधिमध्वरे
रघुकुलपतेर्धन्यस्याग्रे प्रसारितवान्करम् ॥

अयं विश्वामित्र(1.20) ऋषिर्दशरथस्याग्रे हस्तं प्रसारितवान् किं कर्तुं त्वां यज्ञे उपकरणतां नेतुं तपसाग्निनेव(1.21) दग्धुमिष्टं यत्त्रिभुवनं तस्याभयक्रीडादाने प्रतिग्रही वेधा ब्रह्मा यस्य तम् दश······(1.22)को भूत्वा विश्वामित्रस्त्वां यज्ञरक्षणार्थं नीतवानित्यर्थः ॥ 43.

उपाकुरुत कौशिक ‿ ‿ ‿–[त्रि](1.23)शङ्कुं पुरा
ततः कुलपरम्परागतमृणं मृजां नेप्यतः .
अनन्तवपुषा धृता ‿ ‿ ‿–‿––‿–(1.24*)
‿–‿–‿ ‿–‿–‿ ‿–‿[पा]दपातेन ते ॥

कौशिको विश्वामित्रस्त्रिशङ्कुनामानं राजानमु(1.1)[प]······त्रिशङ्कौ ऋणं पतितम् . ततो हेतोः कुलक्रमागतं त्रिशङ्कूपकाराख्य(1.2)मृणं शुद्धिं नेप्यत[स्त]व पदपातेन भूरियं सुस्थतां व्रजति शेषशरीरेण शिरसि धृता सती दौस्थ्यं म(1.3)न्यमाना . अयमर्थः . पूर्वर्णं शोधयतस्तव पादपातं शेषशिरोधराणामुत्तमं मन्यते इति ॥ 44.

देव(1.4)स्यैकशरेण भिन्नहृदया सेयं पुरस्ताटका
पुत्रस्याब्धिमुपेप्यतोऽस्त्रमरुता मार्गोपदेशोन्मुखी .
त(1.5)त्कालं स्तनशृङ्गसङ्कटविनिर्यातेन रक्तापगा-
पूरेणैव निजेन लाघववती दूरं यतो नीयते ॥(1.6)

भवत एकेनैव शरेण भिन्ना ताटका सेयमत्र लिखितास्ति इयमस्त्रवा-

1 Ms. °नश्रुति°. 2 Ms. °रणा°. 3 Ms. कर्तुं. 4 Ms. °ग्निनेव.
5 Ms. तव. 6 Ms. °पाय्यत. 7 Ms. °ङ्गोपति°.

युना समुद्रं गमिष्य(17)तः पुत्रस्य मारीचनाम्नो राक्षसस्य मार्गोपदेशे संमुखी ताटका पूर्वं समुद्रं प्राप्ता पश्चात्तत्पुत्र इत्यर्थः(18). अत्रोपपत्तिमाह स्तनावेव शृङ्गसङ्कटं ततो निर्गतेन रक्तनदीप्रवाहेण स्वेनैव यस्मादूरमपसा-(19)र्यते सप्तसमुद्रं(7) प्राप्यते ॥ 45.

न्यस्तं दीर्घतपःप्रसादनकृते स्वर्दन्तिकुम्भस्थला-
दाहृ(110)त्यैव विडौजसा सुभगतासर्वस्वमाबिभ्रता .
काठिन्यं कुचमण्डलेन दधती गात्रान्तरैरुज्झि(111)तं
पश्येमां स्वमहोभिरुद्धृतमनश्शल्यामहल्यामितः ॥

दीर्घतपसो गौतमस्य प्रसादना(112)र्थं रोपनिवारणार्थं विडौजसेन्द्रेणैरावणकवाटादानीय दत्तं सौभाग्यमेव सर्वस्वं धारय(113)······ताङ्गान्तरैस्त्यक्तं निविडत्वं स्तनाभ्यां दधतीति ·······ल्यां त्वया निजतेजोभिरुद्धृतं मनश्शल्यं शि(114)लाभावप्राप्तिलक्षणश्शापो यस्यास्तां पश्य ॥ 46.

विश्वामित्रमुनेस्तपोवनमिदं भित्त्वा सुबाहुं बला(115)-
द्देवस्यात्र सहायतामुपगतैः प्राणैस्तदीयैरिव .
सान्द्रत्वं गमितेन पन्नमरुता मायामृगत्वो(116)चितं
मारीचं पुरतोयमाशुगदशामध्यापयत्याशुगः ॥

विश्वामित्रस्येदं तपोवनं भवति अत्र(117) तपोवने सुबाहुं हत्वायमाशुगश्शरो मारीचनामानं राक्षसमाशुगदशां द्रुतापसरणमध्याप(118)यति. शरे दत्ते मारीच *पलायते इत्यर्थः. मायया मृगत्वभावे उचितां. मृगा हि द्रुतगामिनः(119). अत्र संभाव्यते साहायकं कुर्वद्भिस्सुबाहुप्राणैरिवाधिकीकृतेन पत्नवायुनेति. मारीचो भीत्या न पला(120)[यितः किं] तर्हि शरपक्षपवनेनैव दूरमपसारित इत्यर्थः आशुगस्याशुगमनाध्यापनमुचितामि(121)··········ति ॥ 47.

1 Ms पूर्वे lc under l. 7. 2 Ms 'टौन'. 3 Ms 'ज्भिता 4 Copyist leaves space between 'स्व and भा' but no letter seems missing. 5 Ms- 'द्वार' 6 Ms 'रैत्रि'. 7 Ms. 'यन्त्रेयर्थमा'.

श्वशुरवसतिस्सेयं प्राची पुरो मिथिलापुरी
प्रथममटनिन्यासादुर्वीमयं(1.22) [त्रपुरैश्वरम्?].
चरमधनमञ्चापं यस्यां पुरा धरणीसुतां
स्वभुजमहिमा देवायादात्ततो ज(1.23**74*)नकेश्वरः ॥

श्वशुरस्य जनकराजस्य वसतिर्नगरी सेयं·············(1.1)भवति यस्यां धनुष्कोटिन्यासाद्भूमिमयमीश्वरसंबन्धि वपुः··········(1.2)अनमत यथा यस्यां भवते स्वभुजबलं सीतां पूर्वं ददौ पश्चाज्जनकः ॥ 48.

अ[शुव्यह्रटनाङ्गवासनतया?](1.3) मुक्तापि गौरीशतां
गाढाकर्पणलीलया विघटनाभीतेन देहार्धयोः.
मन्दं मन्दमकर्पि यद्ध(1.4)भवता दोर्लाघवालोकने
कोदण्डं तदपाण्डितं दलितवानत्र प्रभुस्तत्रपे ॥

प्रभुर्भवांस्तत्रपे(1.5) ललज्जे. अत्र हेतुमाह कोदण्डं दलितवान्भग्नवान्. कीदृशं तदपण्डितं तस्मिन्दलने अपण्डि(1.6)तमनभिज्ञं सहसैव दलनादिति भावः. सहसा हि मारितश्चौरादिः कारणं न जानाति. केन(1.7) हेतुना दलितवानित्याह दोपोर्भुजयोर्लाघवस्यालोकने. निमित्तसप्तमीयं. तत्किमित्याह(1.8) परमेश्वरेण यन्मन्दं मन्दं कृष्टम्. कदाचित्तस्य देहार्धे गौरी स्यादित्याह गौरीशतामर्धनारीश्व(1.9)रतां त्यक्तापि. यथास्य देहार्धे गौरी नासीत्केन हेतुना धनुर्मन्दमाकृष्टमित्याह गाढं वलेनाक(1.10)र्पणं तस्य लीला विधानं तया निजदेहयोर्देहार्धयोर्विघटनायास्संधिविश्लेषाद्भीतेन. भीतौ हे-(1.11)तुमाह घटनया संयोजनेन यदङ्गमर्धनारीश्वरत्वं तस्य वासना संस्कारस्मृतिरत्रुट्यन्ती स्थिरा य(1.12)स्य तद्भावेन. अयमर्थः गौर्या वामार्धं योजितमपनीय स्ववामार्धं मया योजितमतो गाढं धनुष्क(1.13)र्पणात्तन्मा भाङ्क्षीदिति भगवान्यन्मन्दमकृपत्तच्चापमहं भग्नवानिति लज्जां प्राप्तवान्

1 Ms. °दुर्वी°. 2 Ms. has पृ. रा. ए. on margin. 3 Ms. पु- Restore पूर्वगननव पश्चाद्गुः रु°. 4 Ms. °श्चोरा°. 5 Ms. °मानं- 6 Ms. मस्ती°.

वीराणां(114) न तदुपयोग्यमिति धनुर्भङ्गो लज्जाकरः. संभावनेयम्. अथवा त्रुट्यदिति गौरी ······ हेतुः(115) अत्रुट्यन्ती स्थिरा घटना यस्य तस्मिन्नङ्गे वासना यस्य तद्भावेन यथा धनुष्कर्षणोद्गानां श्लेषो भवति(116) ततो गौरीशब्दे त्यक्तेपि स्वाङ्गसन्धिभङ्गभयाद्धनुषो मन्दकर्षणं संभाव्यते ॥ 49.

असाद्दैवतमूर्तिलोचन(117)युगाच्चन्द्रार्कतेजोमया-
दानन्दाश्रुजलायमानमुदितं राजन्यवंशद्वयम्.
निश्शेषं प्रममार्ज(118) यः करयुगं व्यापारयन्क्रीडया
पुण्यैर्नेत्रयुगं पवित्रयति नस्सोयं मुनिर्भार्गवः ॥

हर्षबाष्पक(119)णासमानं सूर्येन्दुमयादस्मान्नेत्रयुगादुत्पन्नं राजवंशद्वयं दैवतमूर्तिकमपि यो भुजद्वयव्या(120)पारमात्रेण हृतवान्सोयं भृगुपुत्रो मुनिः पुण्यैर्नौ दृष्टिं पवित्रयति. पुण्यवशादेतद्दर्शनं(121) भवतीत्यर्थः ॥ 50.

चापं चक्रायुधस्य(?) श्वसुरगृहगतत्र्यक्षविक्षेपचाप-
द्रोहव्रीडातिभारा(122)नतमुखमिलितोदात्ततावीरधर्मः.
वीर्येणार्धेन दोष्णोर्मृदुमृदु दलनातङ्कसा——(123)-
न्देवो वैलक्ष्यहासद्युतिकुसुमचयैरर्च्यते भार्गवेण ॥

जनकस्य गृहे निक्षिप्त··········(124*)··········नतमुखं कृत्वा मिलितावुदात्ततावीरधर्मौ यस्य स भगवान्किंचिद्दले(1)······वेण वैलक्ष्यहासरूपाहसितं तस्य द्युतिभिरेव पुष्पप्रसरैः पूज्यते ॥(2) 51.

अवनिमपहृतां जहौ यदेकः क्षितिपतिसाद्विदधे पुनर्यदन्यः.
समसमयमतस्स्थितं नताभ्यां जितज(3)यिनोरिह रामयोर्मुखाभ्याम् ॥

रामभद्रपरशुरामयोर्मध्यादेको हृतां जितां भूमिं तत्याज अन्यो दाश-(4)रथिः पुनरवनिं राजसादकरोत् अत इव जितस्य परशुरामस्य जयिन-

1 Ms. 'घात'. 2 Ms गोरी'. 3 Ms 'रम'. 4 Ms. 'ष्कर्षे'.
5 Ms. 'मर्दी'. 6 Is it 'निक्षेप'?.

श्रीरामस्य मुखाभ्यां सम(l.5)समयं युगपन्नताभ्यां स्थितम् . श्रीरामस्य ब्राह्मणजयित्वादन्यस्य च जितत्वाल्लज्जाया हेत्वन्तरसंभावनं ॥(l.6) 52.

आशाचतुष्टयविभङ्गुरजामदग्न्य-
कीर्त्तिप्रतापमिथुनाराचितानुचर्यैः .
कान्तानुगैरनुगतस्तनयैश्च(l.7)तुर्भि-
स्सोयं नृपो दशरथः प्रविशत्ययोध्याम् ॥

आशाचतुष्टयाद्विभङ्गुरमानंतं यज्जामदग्न्यस्य की(l.8)र्तिप्रतापरूपं मिथुनं तेनाचरितानुचर्यैरनुगतैर्जायासहितैः पुत्रैश्चतुर्भिस्सहितो दशरथस्सोयं वि(l.9)शत्ययोध्याम् ॥ 53.

ज्येष्ठप्रवासविधिरस्य न सन्निधाने
धर्मानुवन्धनघनस्य भविष्यतीति .
आकृष्यमाण इ(l.10)व रावणदुर्निमित्तै-
र्मातामहस्य भवनं भरतोयमेति ॥

धार्मिकस्यास्य सन्निधाने सति ज्येष्टस्य(l.11) प्रवसनं न संपद्यते इत्यतो रावणपापैराकृष्यमाण इव भरतो मातामहगृहं गच्छति ॥ 54.

जानक्येव(l.12) गुणानुवन्धनतया देवो धनुर्लेखया
शत्रुघ्नप्रथमेन सार्धममुना भ्रात्रेव तूणेन च .
सत्येन स्खलि(l.13)ता पितुर्वसुमती राज्याभिषेकेण मे
यच्चार्द्रत्वमुपेष्यतीति चकितो मुञ्चत्ययोध्यामयम् ॥(l.14)

गुणानां शीलादीनां गुणस्य मौर्व्याश्चानुवन्धेन नतया सीतयेव चापलतया सह तथा शत्रुघ्नेषु(l.15) प्रथमेन निषङ्गेणेव लक्ष्मणेन च सहायं रामोयोध्यां त्यजति . कथं चकितं . चकितत्वे हेतु(l.16)माह मम राज्याभि-

---

1 Ms. °मिघु°. 2 Ms. °ताघुच°. 3 Ms. °मानंतं. 4 Ms. °ग्नः प्र°. 5 Ms. भात्रे°. 6 Ms. blank before °म°.

पेकेण भूर्यदार्द्रत्वमेष्यति तदा पितुस्सत्येन स्खलिता स्खलनं प्राप्स्यते. रा(l 17)ज्यं त्यक्त्वा रामस्तूर्णं वनं गत इत्यर्थः. स्खलितेति लुट् ॥ 55.

शृङ्गवेरपुरमेतदिङ्गुदीपादपोयमिय(l.18)मालवालभूः .
अत्र नूतनजटाधरे प्रिये पाणिरुद्धनयनास्ति जानकी ॥

अत्र शृङ्गवेरपुरा(l 19)दौ रामे जटाधरे संपन्ने सति सीता हस्ताच्छादितनेत्रास्ति ॥ 56.

यदरीविपिने तपस्विनोर्नरनारा(l 20)यणयोरिवानयोः .
अयमेकपदेत्र जायते शुनदीपोतयुनस्सखा गुहः ॥

यदर्याश्रमे तपस्य(l 21)[तोर्नरना]रायणयोरिव रामलक्ष्मणयोरयं गुहनामा गङ्गाप्रवहणसहितस्तत्रैकपदे स(l 22)[खा]·· ···गुहो गङ्गामेतावनारयदित्यर्थः . गणपतिकुमारौ च नरनारायणयोर्यदर्याश्रमे सहायौ संपन्नौ ॥(l.23**75ᵃ) 57.

जनकदुहितृसोदरत्वबुद्ध्या धरणिरुहैरतिमात्रमातिथेयैः.
ज[यति —————————प्रथमत](l 1)पोवनमेष चित्रकूटः ॥

सीतायास्सोदरा वयमिति मत्वैवात्यर्थमर्थि·········[जय](l 2)ति सर्वोत्कर्षेण वर्तते प्रथममाद्यं तपोवनम् ॥ 58.

गङ्गेवोपरि शङ्करस्य न जटाबन्धं विना शोभते
मेध्या मेत्र(l 3)जपादुकेति भरतो ज्येष्ठानुवृत्तिव्रती .
पौलस्त्याभिभवावसानसमयं वक्तुं गतं नाकिना-
मावासं पितरं निवे(l 4)द्य विमुखो यात्येष रामान्तिकम् ॥

रावणकृतपराभवसमाप्तिं देवानां वक्तुमिव स्वर्गं गतं पितरं दशर(l 5)थं निवेद्य विमुखो रामेण कृतप्रार्थनाभङ्गस्तत्रैष भरतो हरस्येव मे गङ्गेव

---

1 Ms °रो ति°. 2 Ms °ताम°. 3 Ms. has पृ. रा ए vertically on margin. 4 Ms °ध्यम°. 5 Ms. °मेन.

रामपादुका जटावन्वं वि(l.6)ना न शोभते इति ज्येष्ठस्य श्रीरामस्यानुवृत्ति-
व्रती सन्नामसमीपायाति निवर्तते ॥
59.

कुचतटम[नम्र](l.7)यादत्तदिव्याङ्गराग-
च्छुरितमभि दधानो मातुलुङ्गीफलेच्छाम् .
अवनिदुहितुरैन्द्रिस्संस्पृशन्नेप(l.8) काक-
स्समुपलभतेक्ष्णोरेकशेषं स्वजात्या ॥

अनसूयादत्तेन दिव्याङ्गरागेण च्छुरितं स्तनम[ण्डलम](l.9)भि बी-
जपूरफलभ्रांतिं दधानस्सन्नतस्संस्पृशंस्तक्षयन्नेव ऐन्द्रिः काकस्स्वजात्या
काककुलेन सह(l.10) नेत्रयोरेकशेषमेकनेत्रत्वं लभते . सीतास्तनस्पर्शात्का-
कस्य श्रीराम इषीकास्त्रं दत्तवान् . रामवि(l.11)सृष्टेषीकास्त्रप्रभावात्समस्ता
अपि काकाः काणास्संपन्ना इत्यर्थः ॥
60.

रुद्धा विराधरुधिरेण धरेति(l.12) कामं
काकास्सहस्रनयनत्वमिमे चकाङ्क्षुः .
धाराधरस्य चरितेन दुरात्मनस्तु
नैसर्गिकं द्विनयन(l.13)त्वमपि व्यतीयुः ॥

रामेण हतस्य विराधनाम्नो रक्षसो रक्तेन भूर्व्याप्तेति लोभात्काकास्सहा-
स्रनेत्रक्षिसह(l.14)स्रमभ्यलपन् . धराधरनाम्नः काकस्यापराधेन स्वाभाविकं
द्विदृष्टित्वमपि ते तत्यजुः . सर्वे का(l.15)काः काणास्संपन्ना इत्यर्थः ॥
61.

करेणाकृत्वाराचमनशुचिना मूर्धनि मुनि-
र्धृतेनायं रामे नि(l.16)जमिह महस्संक्रमयति .
अशङ्काहङ्कारावगमयद्धो यः क्षितिभृतौ
कृतेच्छौ मेरोरप्युपरि भवि(l.17)तुं विन्ध्यनहुषौ ॥

योऽगस्त्यमुनिर्विन्ध्यनहुषौ क्षितिभृतौ पर्वतराजानौ अधो गमयन्नीचीकृ-

1 Text धारा°.     2 Ms. °निः धृ°.     3 Ms. °हुषो.

तवान् (l 18) कीदृशौ मेरोरप्युपरि भवितुं मेरुमपि जेतुं कृतेच्छौ तथा महा-
हंकारौ अयमगस्त्यः समुद्रा(l 19)चमनशुद्धेन शिरसि स्थापितेन हस्तेन
दाशरथौ स्वतेजस्संक्रामयति प्रतिपादयति ॥(l.20) 62.

सुरतरुपञ्चकमेषा मुनिष्वशरणेषु जयंति पञ्चवटी ।
शूर्पणखाच्छलरलक्ष्मा लक्ष्मणयत्तोयमत्रा(l 21)स्ते ॥

मुनिष्वशरणेष्वेषा पञ्चवटी कल्पवृक्षादीञ्जयति । मुनीनां रक्षणा-
त् । शू[र्पणखाया](l 22) अच्छलं छलवर्जं लक्ष्माणि कर्णनासाच्छेदो य-
स्मात्स लक्ष्मण एव यत्तोऽत्रास्ते य·· ····· (l 23*) 63.

——◡——◡[श्रवणद्वयनासि?]कौष्ठं-
पञ्चाहुतिप्रगुणितं पुरतोऽनुजेन ।
पत्नीसमक्षमिह पंचवटी◡——(l1)
[रक्षस्समिद्भिरजुहोद्द्विज]जाठराग्निम् ॥

अनुजेन लक्ष्मणेन पुरतः पूर्वं शूर्पणखाकर्णनासौ(l 2)ष्ठैनैयं पञ्चाहुति-
भिः प्रगुणितं द्विजानां क्रव्यात्पक्षिणां गृध्रादीनां जठराग्निमुदराग्निं राम-
स्सीतामे(l 3)रक्षस्समिद्भिः राक्षसैस्सह युद्धैरजुहोद्तर्पयत । अग्निहोत्रे च पं-
चाहुतयो भवन्ति । समिद्भिरि(l 4)ध्मैश्चाग्निस्तर्पितो भवति ॥ 64.

त्रिशिरसि शर्वरीचरसहस्रचतुर्दशके
तदिह कबन्धनृत्यमुदपादि(l 5) चतुर्दशधा ।
भयचकितेषु येन भुवनेषु चतुर्दशसु
त्रिपुररिपोर्व्यलम्बत दिनान्तमहानटना ॥

शर्वरीच(l 6)राणां सहस्रचतुर्दशके विगतशिरसि सति चतुर्दशप्रकारं

1 Ms जयति le- under l 21 2 Ms शीर्पन॰ 3 Ms ॰लक्ष्म le under l. 20.
4 Ms. शी॰ 5 Ms ॰काष्ट॰. 6 Ms शीर्पन॰. 7 Ms ॰ष्टे॰; blank after ॰लौ॰.

नृत्तमुत्पन्नं येन भुवनेषु(l.7) भयसम्भ्रान्तेषु सत्सु हरस्य नृत्तविलम्बो जातः. हरस्यापि नृत्तं दृष्ट्वाश्चर्यमुत्पन्नमित्यर्थः ॥ 65.

देशस्सोयं(l.8) शबररमणीगीतकाकुत्स्थकीर्त्ति-
श्रुत्युत्कण्ठावहितनिहतप्राणिसुप्रापनाकः.
मायात्मापि न्यधित(l.9) नयनस्पर्धया वर्धमान-
क्रोधः प्राणैरपि स हरिणो यत्र सीतापकारम् ॥

शबररमणीभिर्गीतायाः(l.10) काकुत्स्थकीर्त्तेश्श्रुतावाकर्णने उत्कण्ठिता-वहितास्सावधाना अत एव निहता ये प्राणिनो मृगास्तैस्सुप्रा(l.11)पस्सु-लभो नाको यत्र सः. नारायणं हि स्मरतां मरणप्राप्त्या स्वर्गप्राप्तिः. एवं-विधस्सोयं देशः ने(l.12)त्रस्पर्धयेवातिक्रुद्धो हरिणरूपो मारीचः प्राणैरपि[1] सीतापकारमकरोत् ॥ 66.

रूपं न मन्त्रमहसामपि तत्प्रकाश्यं(l.13)
[दूरं मनो] नयति यज्जनकात्मजायाः.
इत्थं विदन्निव विशन्नुटजं पुरोगं
वैरूप्यमेव विदधे दशकण्ठ(l.14)भिक्षुः ॥

यद्रूपं रामात्सीतायाश्चित्तं दूरीकुरुते तद्रूपं मन्त्रमहसां देवानामपि न प्रकाश्यम् (l.15) देवानामपि तद्रूपमसंभाव्यमित्यर्थः एवं जानन्निव राव-णभिक्षुः पर्णशालां विशन्नेव पूर्वमेव वि(l.16)रूपतामकरोत् ॥ 67.

प्राणान्स्वयौवनजवातिजवान्विसृज्य
स्वर्गस्थितं दशरथं प्रति बालमित्रम् .(l.17)
उत्कृत्तपक्षतिरिहाद्य निशाचरेण
नोद्ग्रीवतां भजति मानधनो जटायुः ॥

---

1 Ms. Blank after 'सु'.   2 Ms. 'मध्यवि'.   3 Ms. 'स्य' 'ते'.   4 Ms. lc. under l. 13.   5 Ms. 'न्विव.   6 Ms. 'शालां.   7 Ms. 'त्यप'.   8 Ms. 'यसु' (!)

वालमित्रं स्वर्गस्थं दशार(।18)थं[1] प्राणान्स्वयौवनजववदतिजवांस्तूर्णगामिन· प्रतिमुच्य जटायुर्दशास्येन लूनपक्षो नोद्ग्री(।19)वतां भजति शिरो नोन्नमयति मानधनो जटायू रावणेन हत इत्यर्थः. मानी चावमानितस्सन्शिरो(।20) [नोन्नमय]ति ॥ 68.

नीत्वा पावकतां जटायुवपुषा सर्वाशिनं पावकं
देवोयं पितृमित्रघातिनम(।21)[रिं बुध्वाचि?]राद्रावणम्.
सुग्रीवस्य चकार दुन्दुभिवपुःकङ्कालवैकर्तनि-
क्रीडापर्वतमारुतास्र(।22)⏑ ⏑ ― ― ⏑ पूतं शिरः ॥

सर्वाशित्वादपवित्रमग्निं जटायुर्देहहोमात्पवित्रीकृत्य पितृमित्रं(।23**76) जटायुं हतवन्तं रावणमरिं बुध्वा रामस्सुग्रीवस्य शिर· पूतमकरो[त्··· ··· कङ्का](।1)लः कलेवरमेव वैकर्तनिक्रीडापर्वतो यमलीलाद्रिस्तस्य मारुता[स्र············](।2)द्दिकं कृत्वा सुग्रीवं स्वपक्षीकृतवानित्यर्थ. ॥ 69.

कक्षाकुक्षिगतस्य [हृदयधैनुर्ज्याबन्धपीडाजडा-
न्स](।3)व्रीडो दशकंधरस्य निबिडं नापीडयद्यो भुजान्.
तस्मिन्वालिनि सप्तलोकविजयस्तम्भायमानान्पु(।4)र-
स्तालान्सप्त विदार्य दारुणजवो रामेषुरेष च्युतः ॥

हैहयस्य कार्तवीर्यस्य धनुर्ज्याबन्धपीडा त(।5)या जडान्रावणस्य बाहुमूलगतस्य भुजान्यो दृढं नापीडयत्तस्मिन्वालिवानरेयं बाणो दुस्सहज(।6)वस्सन्सप्तभुवनजयस्तम्भसमान्सप्त तालान्भित्वा पतितः. हैहयावष्टब्धस्य रावणस्य संबन्धनेन(।7) किं फलमिति सव्रीडत्वम् ॥ 70.

शैलेमुष्मिन्दशमुखभुजस्तम्भसंस्तम्भनार्हे
दृष्टे पुत्रे भुवि निप(।8)तिते नाकमेवोद्गते च.

1 Add प्रति. 2 Ms has पृ. रा वि. on margin. 3 Ms. 'दयाकु'. 4 Ms. हे'. 5 Ms भुजा'.

वार्ष्पैरशोकप्रमदरसयोर्यौगपद्यप्रवृत्तै-
स्साहस्राक्षैरिव घनजलै(l.9)र्विव्यथे रामभद्रः ॥

अस्मिन्पर्वते मेघाम्भोभिः रामो व्यथितः. अत्रोत्प्रेक्ष्यते साहस्राक्षै-
रिन्द्रसंब(l.10)न्धिभिर्बाष्पैरिव . कीदृशैरशोकानंदयोस्सहावस्थानेन प्रवृत्तैः.
हर्षशोकयोर्यौगपद्यहेतुमाह पुत्रे वा(l.11)लिनि हते स्वर्गे च प्राप्ते दृष्टे सति .
पुत्रस्य वधाच्छोकः स्वर्गप्राप्त्या हर्षः रावणभुजस्तंभनयोग्ये . साह(l.12)-
स्राक्षैरिति साभिप्रायम् . सीताविरहाद्रामोऽत्राद्रौ रुरोदेत्यर्थः ॥ 71.

श्रुत्वा भ्रातुरमर्त्यलोकगमनं(l.13) तत्कालसंपातिना
बार्ष्पौघेण निदर्शितार्णवपथस्संपातिना मारुतिः .
लङ्कामेत्य तथा व्यचे(l.14)ष्टत यथा स्वस्मै च पित्रे पितु-
र्मित्राय स्पृहयालुतां च मरुते निन्ये षडाशा[प]तीन् ॥

भ्रातुः(l.15) जटायोस्स्वर्गगमनं श्रुत्वा तत्कालं पतता बाष्पप्रवाहेणेव
हेतुना कर्तृभूतेन सम्पातिना पक्षिणा(l.16) निदर्शितसमुद्रमार्गस्सन्मारुति-
र्हनुमांल्लङ्कां प्राप्य व्यचेष्टत तथा शक्तिमदर्शयद्यथा स्वस्मै(l.17) पित्रे पव-
नाय पितुर्मित्रायाग्नये च षड्लोकपालान्स्पृहयालुतां श्रद्धालुत्वमनयत् . यत्पुत्रो
लङ्का(l.18)दाहकस्स वायुर्धन्यो यन्मित्रपुत्रोऽयं हनुमान्स चाग्निर्धन्य इति
लोकपालाः स्तुतिं चक्रुरित्यर्थः ॥(l.19) 72.

दत्वा देव्यै रामभद्राङ्गुलीयं
तद्दत्तं च प्रत्यभिज्ञानरत्नम् .
लङ्कादाहं स्वैर्मयूखैर्ब्रुवाणं
पा(l.20)णौ पत्युस्सत्यसन्धो निधत्ते ॥

अभिज्ञानं रामाङ्गुलीयं सीतायै दत्वा स्वरश्मिभिर्लङ्कादा[हं क]थ-

1 Ms. °लैः वि°. 2 Ms. °म्भोभिः. 3 Ms. °व्यथि°. 4 Ms. °नं° l.c. under l. 11.
5 Ms. स°. 6 Ms. °ष्पो°. 7 Ms. °ष्टत. 8 Ms. °डास°. 9 Ms. °तुक°. 10 Ms. दिव्यै.

(l 21)यन्तमिव सीतासंबन्धिनं प्रत्यभिज्ञानमणिं सत्यसन्धो हनूमान्रामस्य हस्ते न्यस्यतीति ॥ 73.

——(l 22)रामसंस्कारकुमारब्रह्मचारिणः ।
अमी कपिशिताकाशाः पिबंत्याशाः प्लवङ्गमाः ॥

. . . .. (l 23*)जा ब्रह्मचारिणः निस्संख्या इत्यर्थः कपिशितमाकाशं यैस्ते वान(l 1)[राः] ········ ॥ 74.

——[रत्ना]कररत्नं निविडयति तटाघातसातत्यहेला-
खेलन्मातङ्गनक्राहत(l 2)[गिरिशकलारब्धमाणिक्यवर्षः] ।
[अ]म्भोधेर्देवसेतुर्जलधरकरणिं गृह्णतो यस्य पार्श्वे
विद्युज्ज्वालायमा(l 3)नैर्ज्वलितमिदमितश्चाप्लुतश्च प्लवङ्गैः ॥

तटाघातेषु सातत्येन नित्यं हेलया निरिलाभिर्(?)र्मातङ्गन(l 4)क्रैराहता ये गिरिशकलास्तैरारब्धं माणिक्यवर्षं यस्य स देवसेतुर्जलनिधे रत्नाकरत्वं करोति । से(l 5)तुशैलरत्नैरेव रत्नाकरस्समुद्रो जात इत्यर्थः यस्य मेघसाम्य दधतो निकटे इतश्चाप्लुतश्च विद्युत्स(l 6)मैर्वानरैरिदं ज्वलितम् ॥ 75.

एतान्पश्य निशाचरेन्द्रनगरीचामीकराट्टालक-
द्युत्युत्कर्षदुरीक्ष्यदुस्स(l 7)हसहोवैश्वानरान्वानरान् ।
एषामेव शिरोभिरेभिरभितो रुद्धान्तरः प्रस्फुट
प्राकारः कपिशीर्षपं(l 8)क्तिरचनारिक्तोयमाभासते ॥

लङ्काप्राकारहेमाट्टालकदीप्तिभिरुत्कर्षेणाधिकं दुरीक्ष्यो दुस्स(l 9)हस्तेजोग्नियेषां तान्सहसा वैश्वानरानिति वारोपः । एषां वानराणामेव शिरोभिर्निरुद्धमध्यो(l 10)यं प्राकारः कपिशीर्षपंक्तिसंज्ञया रचनयातिरिक्त आभासते

---

1 Ms न्यम°. 2 Ms. °निगृ° Is it सर्षिगृ° ? 3 Ms. °मानज्व° 4 Sic. Read °या सेलद्भिर्मा°. 5 Ms. °भिये°.

आमुखे प्रतिभासते . हेमवप्रे कपि(1.11)शीर्षपङ्क्तिरपि बाहुल्यान्न विभाव्यते इत्यर्थः ॥ 76.

व्यतिकरितहरित्पिशङ्गरक्षःकपिबलयोधकबन्ध(1.12)न्धताण्डवेयम् .
असुलभसुरसुन्दरीविमाना रघुपतिरावणसंपरायगोष्ठी ॥

हरितां का(1.13)लानां रक्षसां पिशङ्गानां कपीनां च कबन्धताण्डवं व्यतिकरितं मिलितं यस्यां सा तथा दु(1.14)र्लभाप्सरोविमाना . बहूनां वीराणां मारणादिति भावः . रामरावणगोष्ठीयं भवति ॥ 77.

राममेव(1.15) किल शेषशायिनं शेषमेव च विचिन्त्य लक्ष्मणम् .
गाढतां ध्रुवमिदं न शिश्रिये मेघनादभुज(1.16)गास्त्रबंधनम् ॥

रामं विष्णुं शेषे शयानं लक्ष्मणं शेषमेव चिन्तयित्वा मेघनादकृतं सर्पास्त्रबंध(1.17)नं गाढतां नाश्रयत् . अहीन्द्रेणाराध्यस्याहिपतेश्च कथं वयं बन्धनं कुर्म इति चिन्तयित्वेव सर्पास्त्र(1.18)बन्धनं सद्यो विगतम् इत्यर्थः ॥ 78.

ज्येष्ठानुवर्तनरसे कथमेतदीये
भाव्यं मयेति तमिवाखिलमुज्जि(1.19)हीर्षुः .
शक्तिं न्यधाद्दशमुखो हृदि लक्ष्मणस्य
वेगादयं पवनभूः प्रतिहन्ति तां च ॥

एतदीये ल(1.20)क्ष्मणसंबन्धिनि ज्येष्ठानुवर्तनरसे रामभक्तिरसे सति मया कथं भाव्यं जीवनीयमित्यतस्तं रामभक्ति(1.21)[रसमु]द्धर्तुकाम इव रावणो लक्ष्मणहृदये शक्तिं न्यधात्ततो हनूमांस्तां शक्तिं प्रति शल्योद्धरण-(1.22)······ ॥ 79.

[अर्धोद्धृ]तेशगिरिपीडितदोर्बलस्य
द्रोणाचले करगतेपि विलंघिताब्धिः .

1 Ms. कपिकपिशी°. 2 i. e., कपिबा°. 3 Ms. °गोष्टी°. 4 Ms. °मुज्झि°.

लंकापतेः कपिर(।23)[यं हृदयं बभ]ञ्ज
पुत्रं पुनर्दशरथस्य सुतस्तृतीयः ॥

अर्धमुद्धृतेनेशगिरिणा कैलासेन पी(।24**77¹)डितभुजबलस्य रावणस्य हृदयं हनुमान्द्रोणाद्रौ हस्तगेपि · · ···(।1)पुत्रमिन्द्रजितं लक्ष्मणो धभञ्जाचेधीत रावणः कैलासं किंचिदु··· ·(।2)हस्ते धारयित्वा समुद्रं तीर्ण इत्यनयोर्महदन्तरमित्यर्थः ॥ 80.

अ—⏑—⏑⏑⏑—⏑⏑—⏑[धूं](।3)मे
घ्राते चितादहनजन्मनि कुम्भकर्णः.
सुग्रीवनिष्फलविकर्तितकर्णनास-
——⏑—[श्रयति विश्र](।4)वसोभिधानम् ॥

इन्द्रजितं हतं श्रुत्वास्येन्द्रजिताश्चिताधूमे घ्राते सुग्रीवेण निष्फलं कृत-कर्ण[नासो](।5)पि एष कुम्भकर्णो विश्रवसः पितुर्नामाद्य धत्ते. अयमर्थः आदावेव यदि कुम्भकर्णस्य क[र्णौ नासां](।6) च सुग्रीवोच्छेत्स्यत्तदा छेदः सफलोभविष्यत् कर्णयोरभावे सतीन्द्रजिन्मरणस्याश्रवणान्न[साया](।7)श्चाभावे धूमस्य घ्राणाभावात्. स्वपितृनामधारणं कर्णरहितत्वादिति भावः ॥ 81.

रामशरकु[म्भ](।8)सम्भवसंरम्भात्कुम्भकर्णविन्ध्यगिरिः.
शशितरणिसरणिरोधी न्यपतदसावपुनरुत्पतनः ॥

राम(।9)शर एवागस्त्यस्तस्य संरम्भेण कुम्भकर्ण एव विन्ध्याद्रिश्चन्द्रार्कमार्गरोधी सन्नपुनरुत्थान. पतितः ॥ 82.

श(।10)तकोटिकोटिशतमिवं
हृतमिव जितस्य वज्रिणः.

---

1 Ms has ए [illegible] ष. on margin. 2 Ms. °अत्र°. 3 Is it सुरेन्द्रजिद्धननमस्य तथा च धू°? 4 Ms °स्क° °विकर्ति° added to suit metre and sense 5 Ms °वगो°, 6 Ms. °धान् 7 Ms.रमि°. 8. Ms. °गस्त°. 9 Ms. °मिष. 10 Ms. °त° lc under l.11

दर्शयति करगतं समरे
निशिताग्रपाणिज(1.11)मिषाद्दशाननः ॥

जितस्येन्द्रस्य हृतमिव वज्रधाराशतं रावणो[1] नखव्याजाद्धस्तगतं दर्शयति ॥(1.12) 83.

हिमकिरणकिरीटकृत्त-
स्त्ववदनवेदनया स्मृतिस्पृशः.
झटिति विघटितान्पितामह(1.13)-
स्समघटयत्प्रपितामहोऽस्य यान् ॥:

हरेण लूनं यस्स्वमुखं तस्य व्यथया स्मर्यमाणयेव हेतु(1.14)भूतया अस्य प्रपितामहो ब्रह्मा यान्विघटितान्सवस्तूर्ण समघटयदयोजयत् ॥. 84.

तत्ताद्दग्रघु(1.15)वीरकैतवशिरस्स्वच्छन्दसन्दर्शनः
क्रीडाप्रञ्चमपातकप्रणयितामत्र्यायसायातवान् .
[तैः कृत्तैः] पुर(1.16)तो विदेहदुहितुस्संदर्शितैर्मूर्धभिः-
प्रायश्चित्तमिदं चकार दशधा तात्कालिकं रावणः ॥.

तै(1.17)र्दशभिश्शिरोभिः कृत्तैस्सीताया दर्शितै रावणो दशप्रकारं प्रायश्चित्तं सद्योऽकरोत् ..प्रायश्चित्ते हेतु(1.18)माह स रामो ताद्दक्त्वांसौ रघुवीरस्य रामस्य कैतवेन मायया शिरसि. स्वच्छन्दस्स्वाच्छन्द्यं भेदस्तस्य(1.19) संदर्शनमेव क्रीडा सैव पंचमं पातकं तत्र प्रणयितां कर्तृत्वं[8] प्राप्तवान् . अन्यश्च पातकी प्रायश्चित्तं करोति ॥ (1.20) 85.

कृत्तेषु मूर्धसु नवस्वपि रावणस्य
यावल्लुलाव दशमं वदनं न रामः .-

1 Ms. °वस्त°. 2 Ms. °त्वार्पि°. 3 Ms. °स्नत्रा°. 4 Ms. प्रायश्चित्र°.
5 Sic. 6 Ms. °दका°. 7 Sic. Is it °स्वेन मे°?. 8 Ms. कत्त्°.

श्रीस्तान्न तावदमुचद्दलिं(1 21)ते तु तस्मि-
स्तुल्यं व्यभज्यत मुखेषु दिशां पतीनाम् ॥

नवसंख्येषु रावणस्य शि·· ···(1 22)सत्सु यावन्न रामो दशमं शिर-
श्छिन्नवांस्तावच्छ्रीशिरांसि नात्यजत् तस्मिन्द ······· ·(1 23*)······
विभागेन गता . अयमर्थः प्राग्वत्पुनस्संधानशंकित्वान्नवसंख्य(1 1)·······-
·ग्रस्ता· ॥ 86.

पत्युर्देवरपुत्रयोश्च वदनैः कल्पान्तभानुप्रभै-
र्लंकातोरणमा(1 2)[लिकां विरचितां दृष्ट्वापि तां वानरैः?]
स्वःस्त्रैणैरपि वीक्षिताश्रुनयनैः कारागृहान्निर्गतैः
प्राणैर्वज्रमयं(1 3)रियं तदपि नो मन्दोदरी मुच्यते ॥

रावणस्य तथा देवरपुत्रयोश्च मुखैर्वानररचितां लङ्कायां तो(1 4)रण-
मालां मन्दोदरी यद्यप्यपश्यत्तथापि सा बन्धनिर्गतैश्शोकाश्रुपूर्णदृष्टिभिस्स्वर्ग-
बन्दीषु(1 5)न्दैर्वीक्षितापि वज्रकठिनैः प्राणैर्न वियुज्यते . अयमर्थः बन्धुसहि-
तस्य भर्तुर्मरणं पश्यन्त्या अपि(1 6) मन्दोदर्याः प्राणा न निर्यान्ति ॥ 87.

इयमपि रघुराजपुत्रपत्नी
कनकमयत्वमिवागता पुरेव .
सम(1 7)धिकसमवेतकान्तिरूपा
प्रमुषितमन्युमला निरेति वह्नेः ॥

इयमपि सीताग्निमध्यान्निरे(1 8)ति अत एव पुरेव परित्यागात्पूर्वमेव
सुवर्णमयत्वमिव प्राप्ता . सीतां त्यक्त्वा हि रामो हेममय्या(1.9) सीतयैव प-
त्न्या सह यज्ञानकरोत् . अधिकं जातकान्ति. तथा प्रमुषितो निवारितः
मन्युमलोपयशो य(1 10)या ॥ 88.

---

1 Ms °दृमिने 2 Ms °ना 3 Ms °यह्न°. 4 Ms. युज्यते.
5 Ms पश्न्या 6 Ms °रेव.

लङ्कादाहप्रसङ्गप्रथमपरिचितेनामुना स्वामिभक्ति-
स्वस्सिन्धुस्नातकेन द्रुतमनिलभुवा(l.11) वन्दिताभ्यां पुरैव .
पद्भयां लङ्केन्द्रचूडामणिगुणितनखश्रेणिमाप्यं(?)त्रपाभ्यां
मातुर्निर्माय पापक्ष(l.12)यमथ विदधे पुष्पकस्यात्र देवी ॥

युद्धात्पूर्वमेव लङ्कादाहप्रसंगपूर्वपरिचितेन रामभक्तिगङ्गायां स्नातकेन ह(l.13)नुमतैव प्रथमं वन्दिताभ्यां ततो विभीपणस्य मुकुटरत्नैः प्राप्तां नखसंपर्केण त्रपा ययोस्ताभ्यां . नखानां(l.14) रत्नाधिकद्युतित्वादिति भावः विभीपणेन प्रणताभ्यामित्यर्थः . पादाभ्यां सीता पापक्षयं भूमेः(l.15) कृत्वा पुष्पकस्य पापक्षयमकरोत्. अयमर्थः रावणस्पर्शदोषात्तयोर्यत्पापमासीत्तत्सीतापा(l.16)दस्पर्शेन शान्तम् ॥ 89.

आरूढे प्रसभापहारनिबिडव्रीडाजडं राक्षसे
मन्दं मन्दमुवाह वा(l.17)हनमिदं दिव्यं धनस्वामिनः .
देवेनेदमधिष्ठितं तु गुरुतायोगेपि तल्लाघवं
धत्ते येन विभे(l.18)ति सोप्यचतुरंमन्यः खगानां पतिः ॥

रावणेन हठापहरणलज्जयेव जडं पुष्पकं रावणे(l.19) आरूढे सति मन्दं मन्दमवहत्तत्पुष्पकं रामेणाधिष्ठितं सद्गौरवे सत्यपि तल्लाघवं धारय(l.20)ति येन लाघवेन हेतुना गरु[डो]मन्दमात्मानं मन्यमानो भयं प्राप्नोति . अयमर्थः मन्दगामि(l.21)[नं मां] त्यक्त्वा नारायणः पुष्पकमेवारोक्ष्यतीति गरुडभयं . गौरवेपि लाघवमिति विरो(l.22)[धः] ॥ 90.

[सु]ग्रीवश्च विभीपणश्च कृतिना रामेण निष्कण्टकी-
कृत्याप्यर्पितया तथा न भजतो रा(l.23)[ज्यश्रिया] निर्वृतिम् .
लङ्काश्लेषणशीतलीकृतमनस्स्वामिभियादृत्तया
दृष्ट्या भाग्यवता(l.24**78)मवैति हनुमानात्मानमात्तं यथा ॥

1 Ms. 'नख°. 2 Sic. Comm. suggests 'अपित्रान' which would be bad metre. 3 Ms. lc. under l. 12. 4 Ms. प्रभि. 5 Ms. साप्य'. 6 Ms. गम°. 7 Sic. Is it 'प्रोष'? 8 Ms. has पृ. रा. on margin.

सुग्रीवविभीषणौ रामे······ ···[य](1 1)था लङ्कादाहसुखितसीता-दत्तया दृष्टया हनुमान्महाभाग्यवन्तमा··············(1 2)सीतादृष्टि-रित्यर्थः ॥ 91.

मृडतनुरनुप्राणद्विश्वा भुजङ्गमजङ्ग[मा-
भरणभरणी शम्भोः(?) प्रिय](1 3)ङ्करणी दृशः ।
अजनयदमुं कौमारेण क्रमेण ततोऽकरो-
त्सुरहितकृत[ो विष्णोस्साहायकं कपिकेसरी?](1 4) ।

अनुप्राणज्जीवज्जगद्विश्वं यया सा मृडस्य तनुरीश्वरमूर्तिर्वायुरूपा हरस्य भुजङ्गमा एव जङ्ग(1 5)मान्यामरणानि तेषां भरणी पोषिका हरस्य ललाटदृष्ट्यग्नेः प्रियंकरणी ज्वालाकरी हनुमन्तम(1 6)जनयत् अयं हनुमान्कौमारेण क्रमेण रामस्य विष्णोस्साहायकमकरोत् केसरी राजा ह··· · ·(1 7)न्कुमारः स्कन्दश्च दैत्यदलनाद्विष्णोरुपकारं कृतवान् । अयमनुमित्यनयोर्मध्यादेकस्य पाठे······(1 8)रस्यार्थलभ्यत्वम् ॥ 92.

वैदेहीकिंवदन्त्या रघुपतिहृदयं लक्ष्मणस्याथ वक्ष-
स्संजीवन्या विशल्यं(1 9) विरचयितुमयं द्विः पयोराशिपारे ।
यातायातं विधाताप्यधिवसति यतो विस्मयस्यानिभूमिं(1 10)
भूमा(?)रंहो निरंहो वहति हनुमतस्संमतं तद्विमानम् ॥

सीतावृत्तान्तेन राम·········(1.11)जीवनौषध्या लक्ष्मणस्य च वक्षो विगतशल्यं कर्तुं द्वौ वारौ समुद्रस्य पारे गता[गत]····· [ह](1.12)नुमान्येनाश्चर्यस्यातिशयं प्राप्तः तद्धनुमतो मनोहरं निरंहो निष्पापं रंहो· ·······(1 13) धारयति ॥ 93.

लङ्कायामपि चन्द्रशेखरधनुर्मौर्वीकिणश्यामिका
क्रान्तां दाशरथे[र्भुजादिव मनो](1 14)राज्योपधानीकृतात् ।

1 Ms. °नाक°. 2 Ms. is mark before 'क' but nothing is written on margin 3 Ms. °जीवि°. 4 Ms. °जव°. 5 Ms. °रय°.

न्यस्तां पत्रलतां दधत्त्रिजटया काकुत्स्थकान्तामुखं
पुष्यत्पुष्पक—⏑—[भ्रकुह](l.15)रे श्वेतांशुतां शंसति ॥

काकुत्स्थस्य कान्तायास्सीताया मुखं कर्तृ श्वेतांशोश्चन्द्रस्य भावं शंस-
[ति](l.16) पुष्पकमेवाभ्रकुहरं तस्मिन्पुष्यद्विकासितम् तथा लङ्कायामपि त्रि-
जटयां राक्षस्या······(l.17)लितां पत्ररचनां दधत् अत्र संभाव्यते सीता-
या मनोराज्येषूपधानीकृताद्रामभुजाद्दी(l.18)श्वरधनुर्गुणश्यामिकां संक्रा-
न्ताम्. नेयं पत्रलता किं तर्हि मौर्वीकिणा इवेत्यर्थः ॥ 94.

एतस्मिन्द(l.19)ष्टमात्रे रघुतिलकयशोहंसवीतंसकल्पे
द्वैगुण्यं दृक्सहस्रं व्रजति सुरपतेर्निर्भरत्वान्मु(l.20)देति .
पौलस्त्यस्य प्रपित्सोस्समरमरणतो देवभूयं शरौघै-
र्द्वेधाक्लृप्ताक्षिमार्गं नयति दिवम(l.21)यं मातलिर्वर्म दिव्यम् ॥

रामयश एव हंसस्तस्य वीतंसकल्पे भूषणसदृशे(l.22) तस्मिन्नावणे
दृश्यमानेन मुदा हर्षेणेन्द्रस्य दृष्टिसहस्रं द्वैगुण्यविकासं·········(l.23*)
······तस्य रावणस्य बाणवर्षैर्द्वेधा द्विसहस्रसंख्यः क्षिप्तोक्षिमार्गो(l.1)
·········· ॥ 95.

तेजोवधं रचयितुं रजनीचराणां
रामाय यत्करसहस्रमिव स्वमर्कः .(l.2)
स्नेह⏑—⏑⏑⏑—⏑⏑—जतश्च
बिभ्रद्रथो हरिसहस्रमनेन निन्ये ॥

रक्षसां तेजोहानिं कर्तुं सूर्यस्स्वं(l.3)रश्मिसहस्रं रामाय यद्विसृष्टवांस्त-
द्वाजिसहस्रं धारयन्रथो मातलिना नीतः ॥ 96.

---

1 Ms. °कुस्थ°. 2 Ms. °स्था. 3 Is it लिखिता°? 4 Ms. °रौघै°. 5 Ms. कल्पस°. °भूषण° crossed out. 6 Ms. दृशे इत्यर्थः crossed after °शे. 7 Ms. ringed with a line. 8 Ms. °स्वर°. 9 Ms. °हस्र.—°वाजिस्यं struck out after °स.

अ(l 4)यं नंदिग्रामस्सुकृतफलभूमिर्नयनयो-
र्जटाभारं यस्मिन्सममवनिभारेण भरतम् ।
क्षिपतं दृष्ट्वा(l 5)अ्रजचरणयोरानतमुखौ
समं जातावेतौ रजनिचरशाखामृगपती ॥

यत्र भूभारेण सह जटा(l 6)[भारं रामपा]दयोरुपरि क्षिपन्तं भरतं । राज्यं प्रत्यर्पयन्तमित्यर्थ. । दृष्ट्वैव सुग्रीवविभीषणौ ए(l.7)तावधोमुखौ संपन्नौ । ताभ्यामग्रजयो रावणवालिनो राज्यहरणाल्लज्जेति[1] भाव: । नेत्रयोः पुण्यफ(l 8)लरसोयं नंदिग्राम: ॥ 97.

अयोध्येयं ध्येयं कथमपि विरिञ्चप्रभृतिभि-
र्जनास्सर्वे यस्यां त(l 9)[मपि नयना]तिथ्यमनयन् ।
न यं दृष्ट्वा पारं न भवजलधेर्यान्ति पशवो
यतस्तं सेवित्वा कपिभि(l.10)[रपि तीर्णो] जलनिधिः ॥

यं दृष्ट्वा पशवोपि संसाराब्धिपारं लभन्ते तं विष्णुमपि ध्यातव्यं सर्वे ज(l 11)····· तिथ्यमनयन्नपश्यन्नित्यर्थ: सेयं अयोध्या भवति पशुप्रा-णानां हरिदर्श(l.12)·········वानरैरपि समुद्रस्तीर्ण: ॥ 98.

निरशेषानुदधीन्नदींश्च निखिलास्तीर्था(l.13)[नि सर्वाणि च?]
भ्रान्त्वा वारिभिराहृतैर्जनकजाचारित्रमित्रैरमी ।
विद्युत्वन्त इवाम्बुदाः कपिचमूमिश्रा(l 14)[स्त्रिया]माचरा-
श्चक्रुः कारणमानुषस्य जलधिक्रीडानिवासस्मृतिम् ॥

विद्युत्सहिता मेघा इ(l 15)व वानरसहिता राक्षसा हेतुमानुषस्य राम-रूपस्य विष्णोस्समुद्रलीलागृहस्मरणं चक्रु. स(l 16)मुद्रादीन्गत्वानीतैर्जलै: अयमर्थ: राज्याभिषेकार्थं तावन्त: कलशा: क्षिप्ता यावद्भिस्तस्य स(l.17)-मुद्रस्मरणं जातम् ॥ 99.

---

1 Ms. °क्षेति. crossed before ना°. 2 Ms. °तिभ्यनयन् 3 Ms. °कानेरे°. 4 Ms. हेतुमाद 5 Ms. °क्रिडा°. 6 Ms तावस्क°.

ध्या देवाद्विवस्वराद्दशरथं यावत्संदेश्ये कुले
सर्वस्मिन्ननरण्यमन्युश(l.18)मने प्रस्ताविते नाटके.
स्वत्र स्वत्र महर्षिरेप भरतः पात्रक्रमे मेनका-
मुख्यानाममरावतीमृग(l.19)दृशां शिक्षागुरुर्लक्ष्यते ॥

सूर्यात्प्रभृति दशरथं यावत्समानदेशे कुले आकाशास्थिते इत्यर्थः(l.20) अनरण्यहन्तुर्दशासनस्य वधादनरण्यमन्युंशमननाम्नि नाटके आरब्धे सति मेनकादीनामप्सर(l.21)[सां स्व]स्मिन्स्वस्मिन्पात्रक्रमे भूमिकारम्भे शिक्षा-गुरुरेपं लक्ष्यते ॥ 100.

सेयं देव तिलोत्तमा स्व(l.22)⏑ ⏑ — — — चमायातथर्चां(?)-
वेतावायतनारविन्दमुकुलौ लावण्यरूपश्रियोः.
अस्थानाभि(l.23**79)निवेशतां न दधतुः सुन्दोपसुन्दौ ⏑ —
स्पृष्टौ तद्यशसोरनाम ⏑ ⏑ — — — ⏑ — — ⏑ — ॥

···(l.1)न्दयोस्संबन्धिनोर्यशसो राम······णार्थं प्रकटावसृतघटा-············(l.2)त्तः स्तनयोस्सौन्दर्यात्सुन्दोपसुन्दयोस्तिलोत्तमायामनु-रागो नास्था[ने]············(l.3)धिका तिलोत्तमा ॥ 101.

अस्याः पश्य विदेहराजतनयानेपथ्यलीलायित-
स्व — — ⏑ ⏑ — ⏑ — ⏑ ⏑ —(l.4)ह्लादं रघुस्वामिनः.
एतस्यां निभृते दृशौ विनिहिते स्मृत्वोज्झितानीतया
देव्या सेर्ष्यतया यथैपं न [पुनः](l.5) स्पृष्टो विशन्त्या भुवम् ॥

तिलोत्तमायास्सीतारूपाभिनयो रामस्य चित्तं तथा रञ्जयति यथेर्ष्या-वशा(l.6)दिव भूमिं प्रविशन्त्या रामेण न्यस्तां दृष्टिं स्मृत्वा त्यक्तानीत-यापि सीतया रामः पुनर्न स्पृष्टः ॥ 102.

1 Ms. °स्मदे°. 2 Ms. °मन्यु° lc. under l. 20. 3 *Scil.* भरतः.
4 Is it °याः स्तनावे° ? 5 Ms. has पृ. रा. नि. on margin. 6 Ms. °र्धप्र°.
7 Ms. °नैप°. 8 Is it °तं स्वान्ते देव तथा परं जनयति ह्दा°?. 9 Ms. °नेप.

श्राव(1 7)र्जितो जनकराजसुताभिनीत्या
नूनं तथायमनयाप्सरसात्र देवः .
वाञ्छन्त्यरोचकितया(?) वरमेतमेव
ज(1 8)न्मान्तरेष्वपि यथा स्ववशं विधाता ॥

सीतारूपाभिनयेन तिलोत्तमया रामस्तथा वशीकृतो यथा(1 9)रोचे-
कितयान्यस्मिन्नभिलापाभावात्सा जन्मान्तरेष्वपि तमेव भर्तारं वाञ्छन्ती
तमेव स्ववशं नय ····· (1 10)पि स्ववशं करिष्यति इत्यर्थः ॥ 103.

स्वरचितमिति माज्यं चित्तस्थितं पृथिवीभटे
भणति पृथिराज[जो जातो](1 11) मुहुर्मुहुरुन्मनाः .
नयनविषय याता चित्रांकृतिस्तु तिलोत्तमा
तमपि विदधे चित्रन्यस्तं⌣—⌣(1 12)विलोकितांम् ॥

पूर्वजन्मचरित्रं पृथिवीभटे वर्णयति सति राजोत्कण्ठितो जातः चित्रे
स्थित[1 दृष्टा](1 13)तिलोत्तमा राजानमपि चित्रस्थितमिव चक्रे अतस्संभा-
व्यते एकत्वमिव राजानं नेतु(1 14)मिच्छु . अत्यनुरागाद्धि द्वयोरैक्यत्वं भ-
वति ॥ 104.

चक्रे राज्याश्रमपदमुनेस्संनिधानेस्य सत्वै-
र्वैरत्यागस्त्वय(1 15)मिति दिशः किंवदन्त्या भ्रमन्त्या .
यस्मिञ्जन्मप्रभृति भगवान्सन्निधत्ते [स्मरारि]-
स्स्थातुं वाञ्छामकृत हृद(1.16)ये तत्र तस्य स्मरोपि ॥

राज्यमेवाश्रमपदं तत्र मुने राजर्षेः पृथ्वीराजस्य संनिधाने सत्वैः प्रा-
णि(1.17)भिर्वैरत्यागः कृत इति वार्तया भ्रमन्त्या हेतुभूतया यत्र चेतसि
स्मरारिस्संनिहितः स्मरोपि तत्र चेत(1.18)सि स्थातुं संनिधानमकरोत्.

1 Ms 'नत'. [illegible] Ms. 'मेडदे'. 3 Ms यदाचर्कि' (?) 4 Ms cross mark above 'न्य'. 5 Ms स्तय सं. cross mark above स'. 6 Ms. Read स्वचरित'. 7 Ms 'मटो 8 Ms चित्त'. 9 Ms Is it निर्नाशुग्दिकताम् ? 10 Ms 'योर'. 11 Ms 'रस्थातु ' 12 Ms 'सक'.

पूर्वोक्तस्य श्लोकस्य हेतुमतोयं श्लोको हेतुत्वेन व्याख्येय इति भद्रम् ॥
(I.19) 105.

श्रीश्रीकण्ठचरित्रकाव्यविवृतौ विश्वस्य निश्वस्य च
च्छायाभाजि किरातकाव्यविवृतौ विश्रम्य रम्य(I.20)श्रियि .
पृथ्वीराजजयाख्यकाव्यविवृतौ संवेशमिच्छाम्यहं
शास्त्रक्षोदजखेद[मेदु]रमतिर्ज्योत्स्ना(I.21)भिधो लावणिः ॥.

श्रीलोलराजसुतपण्डितभट्टनोन-
राजात्मजो विवरणेन स जो[नराजः] .
[स](I.22)र्गे दशान्त्यमकरोत्सुखमत्र पृथ्वी-
राजाख्यराजविजयाभिधकाव्यराजे ॥[1]

---

1 Ms. ॥ ष······(I,23*).

# [ द्वादशः सर्गः ]

⏑⏑–⏑⏑–⏑–⏑–

[निपुणध्यानफ]लं विलोचने ।
नृपतेः [सम]योपयोगिनं
द्विगुणीभावमिवाधि[जग्मतुः] ॥[1]

· · ···निपुणं कृत्वा ध्यानमेव फलं ययोस्ते नेत्रे तत्कालोपयोग्यं द्वै · · · · [2] · ········ कामित्वादिति भावः ॥ 1.

अमृतमपया तया दृशो-
र्विषयं भू[3]मिपतेः प्रयातया ।
यदियाय रुचिर्न मन्दतां-
मनुकूलो विविदं विधिस्ततः ॥

हर्षकारित्वाद[4]मृतपुष्करिण्या तिलोत्तमया राज्ञो नेत्रविषयमागतया रुचिर्मन्दतां यन्न गता दर्शनतृप्तिर्नाभू[5]दित्यर्थः ॥ 2.

नयने श्रवणे मनश्च य-
त्समभेव व्यक्तसन्महीभुजः ।
विपुलीकृतलक्ष्यपञ्चक-
स्सुकृती[6] पंचशरस्ततोभवत् ॥

राज्ञो दृशौ कर्णौ मनश्च युगपदेव यद्विचकासे ततो हेतोः पञ्च लक्ष्याणि[7] गोचरीकुर्वन्पञ्चशरस्सुष्ठु कृतकृत्योभवत् । पंचानां शराणां युगपल्लक्ष्यपंचकप्राप्तेः ॥ 3.

---

1 Ms °शे. 2 Ms °पने. 3 Ms चन्द्र°. 4 Ms °स्मृत°. 5 Incomplete. 6 Ms दर्शे. 7 Sic. Is it सफटी°? or, better, निपर्दो°?, 8 Sic! 9 Ms °श्रु.

प्रविवेश(l.8) [विनिर्य]यौ च य-
न्नयनाग्नेर्मदनः पिनाकिनः .
नृपतिं प्रबलप्रतापम-
प्युपसर्पन्नत एव नात्रसत् ॥

ह(l.9)रस्य नेत्राग्निं कामः प्राविशन्नेत्राग्नेर्यश्च निर्गतस्ततो महाप्रतापमपि राजानं प्रवि(l.10)शन्नात्रसत् . अग्निं सेवमानस्य तापत्रासाभावात् ॥ 4.

मिलितभ्रमरालिकालिकं
बहुभेदैः कुसुमैः(l.11) कृतं धनुः .
स्वकरादिव जिष्णुनार्पितं
क्षितिजिष्णोर्विजिगीपया वहन् ॥

मिलितेत्यारभ्योपकर्(l.12)त्तुमित्यन्तं कामवर्णनपरं कुलकम् ॥

भ्रमरालिरेव कालिका मेघपंक्तिरपि मिलिता यत्र त(l.13)था वर्णवैचित्र्याद्बहुभेदैः पुष्पैः कृतं धनुर्दधत् अतस्संभाव्यते क्षितिजिष्णो राज्ञो विजिगीपया(l.14) हेतुभूतया इन्द्रेण स्वहस्तादिव दत्तम् तद्धि मेघपंक्तिसहितं बहुफलं च भवति . क्षितिजिष्णोरि(l.15)ति साभिप्रायम् ॥ 5.

अलिपंक्तिमयं मुहुर्मुहु-
र्मकरन्दाङ्कितमास्पृशन्गुणम् .
विरलाग्निशि(l.16)खाधिवासितं
प्रतिपक्षेक्षणधूमधूसरम् ॥

भ्रमरमालामयं रजोयुक्तं गुणं पुनः पुनस्स्पृशन् अल्पाभि(l.17)रग्निज्वालाभिस्सहितो यः प्रतिपक्षस्य हरस्य नेत्रधूमस्तेन धूसरम् ॥ 6.

---

1 Ms. °र्दमनः. 2 Is it °यैत्र ?. 3 Ms. तीव्रप्रतापमपि crossed after °नं. 4 Ms. °त्रासवस°. 5 See verse 8, below. 6 Ms. °सिताग्र°. 7 Ms. °यल°.

त्रिदिवोपवने फलन्ति(1 18) ये
तरवः पञ्च यथामनीषितम् -
स्वयमेव समर्पितं नय-
नृजुतां तैः कुसुमेषुपञ्चकम् ॥

ये(1 19) नाके वृक्षाः प्रार्थितं ददति तैरिव पुष्पशरपञ्चकं दत्तं ऋजुतां नयन् ॥ 7.

उपकर्तुमुपेतमप्युमा(1 20)-
मुपनीयाज्वलयद्य एव माम् -
तमसौ वरिवस्यतीत्यभू-
न्मदनो योद्धुमनाः क्षमाभुजम् ॥(1.21)

·········ष्योपकर्तुं प्राप्तमपि मां योदहदेव तं हरमसौ राजा सेवत इतीव राजानं प्रहर्तुका(1 22)[म इव कामोभू]न्. योद्धुमना इति पाठ आर्षः॥ 8.

रजसा कपिशा दिशो बभूवु-
र्धनुराकर्षति कौसुमं(1 23) [मनोजे].
[व]निता इव पत्युरप्सरो-
विषयां वीक्ष्य हठप्रतारणाम् ॥

कामे पुष्पचापं कर्षति र(1 24**80)जसा कपिशा दिशो बभूवुः निजस्य पत्युः पृथ्वीराजस्य तिलोत्तमा················(1 1) 9.

शरगोचरतामनीतयो-
र्नियतं शिक्षितमस्त्रविद्यया.
पुरतो गुह[रामयो]◡—
◡◡——◡◡—◡—◡— ॥(1 2)

---

1 Which is the अन्वयं reading ? 2 Ms. °रुता. 3 Ms. °पयाती°. 4 Ms. °रयन्. 5 Ms. °त्रिर°. 6 Ms. has २ रा. रो on margin.

ब्रह्मचारित्वात्कामेन शरविषयभावं न नीतयोः कुमाररामयोरग्रे का-
··················(1.3)रोपि भूभृतं पर्वतमपि भिन्नवान्. तौ हि क्रौञ्चा-
द्रिं विभिदतुः ॥ शिक्षितयास्त्रविद्यये(1.5)ति पाठस्समीचीनः ॥ 10.

कमलासहजद्रुमाग्रजै-
स्सुधया(14) हालहलेन चोज्झितैः.
कुसुमास्त्रशरैर्वशं ययौ
सममानन्दविमोहयोर्नृपः ॥[4] 11.

चतुरश्चतुरश्शरानधो-
दसमास्त्रः परिवर्ज्य मारणम्.
हृदि तस्य ततस्तिलोत्त(1.6)मा
सचतुर्द्वार इव न्यविक्षत ॥

चतुर आशुकारी कामो मारणनामानं शरं वर्जयित्वा चतुरश्शरान्या-
क्षि(1.7)प्तवांस्ततश्चतुर्द्वारसहिते इव चेतसि तिलोत्तमा प्रविष्टा ॥ 12.

तेषां चतुर्णां शराणां कर्माण्याह ॥(1.8)

सममुह्यदबाधि निद्रया
समतापि प्रललाप चापदे.
इति तस्य चतुर्दशे मनो-
भवने स्वाम्य[मवाप(1.9) साप्सराः?] ॥

राजा संमोहं प्राप्तवान्. निद्रया स बाधितः. राजातप्यत. राजा अ-
स्थाने च प्रलापं कृतवान्(1.10). एवं चतस्रो दशा यस्य तस्मिन्राज्ञो मनोगृहे
स्वाम्यमैश्वर्यं तिलोत्तमा प्रापत्. गृहं च चतुर्भूमिकं भव(1.11)ति ॥ 13.

---

1 Ms. This part of Comm. is given after verse 11. 2 Ms. 'शस्त्र'.
3 Ms. 'चोन्नृ'. 4 Ms. No Comm. on verse 11. 5 Ms. 'न्यथा'.

अणिमानमतिप्रसादिता-
दधुपतेर्जातुचिदाससाद सा ।
मतिमम्बुजनालवद्यत-
श्शुचिसूक्ष्मां(1.12) प्रविवेश भूपतेः ॥

अतिसेवितादिन्द्रात्सा तिलोत्तमा कदाचिदणुत्व प्रसादं प्रापत् यतो हेतोर्मृणा(1.13)लसूत्रवच्छुचि सूक्ष्मां मतिं राज्ञः प्रविष्टा. अणुरेव हि सूक्ष्मं प्रविशति. इन्द्रश्च मृणालनालं······ ··(1.14)अवधे(?) प्राविशदित्यागमः ॥ 14.

सहजस्य तरोश्शरीकृते-
र्हृदि रूद्धे कुसुमैर्मनोभुवा ।
मुमुदे मुखदेव(1.15)ता रमा
नृपतेश्श्वाससमीरसौरभैः ॥

लक्ष्म्यास्सहजस्य तरोः पारिजातस्य पुष्पैश्शरीकृतैः कामेन रु(1.16)द्धे. सति हृदि राज्ञो निश्वाससौगन्ध्यैर्मुखदेवता लक्ष्मीर्मुमुदे तुष्टा ॥ 15.

अमरत्वमु— ‿ — ‿ रं(1.17)
प्रविशन्त्येव हृदि श्रियोपिता ।
नृपतेर्ह्यनिमेषतां दृशा-
वतिमात्रं बिभरांबभूवतुः ॥

·········[प्रवि](1.18)शन्त्या सुरश्रिया देवत्वमिवोपायनीकृतम् यस्माद्राज्ञो दृशौ निर्निमेषमावमवहता[म्. देवा हि निर्नि](1.19)मेषाः ॥ 16.

ध्रुवधूपरिरम्भसाक्षिणः
प्रथमे स्मै वयमेव भूभुजः ।

1 Ms °दम. 2 Is it कुने कृत्रवधे अ°? 3 Ms. रसा 4 Ms. °दमा°.
5 Is it °त्वमुपायनीकृतं ?. 6 Ms. °मेस्मौ.

इति नूनमहर्पि रोमभि-
र्मक(l.20)राङ्काशुगपक्षवात्यया ॥

आद्यास्तिलोत्तमालिङ्गनसाक्षिणो वयमेव स्मो भवामः इत्यतो हेतो-
र्नू(l.21)नं रोमभिरहर्पि हर्षितम् । अत्र हेत्वन्तरं संभाव्यते । कामशरपक्ष-
वातैः । साक्षिण इत्यारोपः वि(l.22)शेषणेन नपुंसकता स्यात् ॥ 17.

कतिचिन्नपतन्कणास्ततो
नयनाभ्याममृतं न्यपायि यत् ।
⏑ ⏑ — ⏑ ⏑ —(l.23?) ⏑ — ⏑ —
⏑ ⏑ —— ⏑ ⏑ [घर्मबिन्दु]वः ॥

राज्ञा तिलोत्तमादर्शनामृतं यत्पीतं ततः कणा एव··········(l.1)
············[ग]ण्डयोर्मध्ये घर्मकणाः पतिताः । नामी घर्मकणाः किन्तु
पीतस्य(l.2) तिलोत्तमामृतस्य कणा एवेत्यर्थः ॥ 18.

ददृशेऽङ्कमिवाधिरोपिता
पुलकाङ्केन मुखेन तस्य सा ।
हरिणं(l.3) शशिमत्सरादिव
मृगुणैर्गीतगुणैर्जिघृक्षया ॥

कामवशादभूतार्थदर्शिना तस्य रोमाञ्चितेन मु(l.4)खेनाङ्कमिवाधिरो-
पिता जनैर्न ददृशे संभाविता । अङ्काधिरोपणे हेतुमाह । तिलोत्तमासंबन्धि-
भिर्गीतगुणैर्हे(l.5)तुभिर्हरि[णं गृही]तुकामेनेव चन्द्रमत्सरात् हरिणीनय-
नार्थमिवाङ्कं तिलोत्तमारोपितेत्यर्थः ॥(l.6) 19,

परिरक्षितव[र्ण]संस्थिति
नृपमेतावति मण्डले भुवः ।

. 1 Ms. °वहसौ. 2 Ms. °वायः. 3 Ms. °न्नपतकै°. 4 Ms. °खेनयङ्काभि°. 5 Ms. °क्लेन lc. under l. 4. 6 Ms. संभाविता lc. under l. 5. 7 Ms. °हि°. 8 Ms. °यन°.

अपदेशमयद्विवर्णतां
प्रथमो विप्लवका(17)रिणां स्मरः ॥

परिरक्षिता वर्णानां ब्राह्मणादीनां संस्थितिर्येन तं राजानमुपद्रवकारिणामाद्यः कामो वि(18)भिन्नो वर्णो मुखरागो यस्य तद्भावमपदेनयत् . वर्णरक्षितुर्वर्णनाशनमनुचितमित्यर्थः ॥ 20.

पदमै(19)न्द्रमुपेत्य दर्शित-
स्सकलेस्मिन्नवनीतले पुरा .
त्रिदिवमदानुरागिणा
स्वरभेदश्चरमन्तु जल्पिते ॥(110)

ऐन्द्रं पदं प्राप्य राज्ञा भूतले स्वरभेदः स्वर्गाभेदः प्रथमं भूतले दर्शितः चरमं पश्चाज्जल्पिते(111) कथासु स्वरभेदस्वरसादो राज्ञा तिलोत्तमानुरक्तेन दर्शितः ॥ 21.

अयमेष्यति दिव्यमूर्त्तिता-
मनुर(112)क्तस्त्रिदिवाङ्गनां प्रति .
इति भूरमणस्य मानुषी
प्रचकम्पे तनुरौपचारिकी ॥

तिलोत्तमाया(113)मनुरक्तोयं मानुषीं मूर्त्तिं त्यक्त्वा दिव्यां मूर्त्तिं पुनर्ग्रहीष्यतीतीव राज्ञ औपचारिकी कार्यसिद्ध्य(114)र्थमभिनीता मानुषी तनुः कम्पते स्म ॥ 22.

अविलम्बितमीयुरुष्णतां
शिशिराः प्राक्प्रमदाश्रुशीकराः .(115)
⏑⏑–⏑⏑–⏑–⏑
शशिनस्स्थान इव त्विषा रवेः ॥

---

1 Ms. 'र्थमु'. 2 Ms. 'ङ्गा श्री'. 3 Ms. 'रः प्र'.

प्रथमं तद्दर्शनजाता हर्षबाष्पकणास्तूर्य(l.16)[मुष्णत्वं] गृहीतुमैच्छन् अतस्संभाव्यते चन्द्रस्य स्थाने कामेन धृतस्य खेस्त्विपेव तापिताः कामेन च(l.17)न्द्रो राजसन्तापनार्थं सूर्यः कृतः तद्दीप्त्यैवोष्णा इत्यर्थः ॥ 23.

हृदये लिखितां पुरः स्थिता-
दपि चित्राद्रु(l.18)चिरां ददर्श यत् .
अविदत्परमार्थतस्तत-
स्स मनोराज्यमनोतिशायिनीम् ॥

अग्रस्थाच्चित्रादप्यति(l.19)रुचिरां हृदि लिखितां तां राजा यद्दृष्टवांस्ततो हेतो राजैनां मनोराज्येषु मनसा तिलोत्तमाभोगे(l.20)ष्वतिशायिनीं परमार्थतो जायामविदत्. उत्तरोत्तरमाधिक्यदर्शनात्कृपाधिक्यमनुचितमित्यर्थः(?).(l.21) [अ]विददिति चिन्त्यम् ॥ 24.

विकसन्मदने हरेः पदे
सुमनश्चिन्तितकल्पपादपे .
इति नित्यविकस्व(l.22)[रेवस]-
त्रिदिवोद्यान इवास्य सा हृदि ॥

विकसन्मदनः. कामो वृक्षविशेषश्च यत्र. तथा हरेर्विष्णो(l.23**81°)-रिन्द्रस्य च स्थाने सुमनसां सज्जन[नां] चिन्तितेषु कल्पपादपे[षु]··· ·········(l.1) नित्यविकसिते नन्दनवन इव तस्य चित्ते. सावसत् ॥ 25.

स⏑––⏑ ⏑––⏑––⏑–
⏑ ⏑–––⏑ ⏑–––⏑––(l.2)ग्रहीत् .
अनुरागरसच्युतोपि य-
न्मिलितः सात्त्विकभावसंप[दा] ॥

1 Ms. °न्द्रा°. 2 Ms. °रस्वि°. 3 Ms. °ष्ट्वां°. 4 Ms. °नं.
5 Ms. °कज्ञ°. 6 Ms. पृ. रा. on margin. 7 Ms. °न.

·· · ··· (1 3)नित्याभ्यां सफलं तत्प्रापत्. यत्सात्विकभावानां कम्पस्वेदादीनां ···· ······[संपन्](1 4)तितोपि मिलितः ॥ 26.

उदभिद्यत घर्मबिन्दुभिः
प्रथमं चित्रकरस्य [कौशलात्?].
⏑⏑–⏑⏑–⏑–⏑—(1 5)
रतु मध्यन्दिनदुन्दुभिध्वनिः ॥

चित्रकरस्य रवेरालेख्यकृतश्च कौ · ·· ·····(1 6) 27.

[Lines 7,8 missing]

शेषं नयने न्यमज्जयत् ॥

चित्रमण्डपे पटहशब्दस्यानुवादिनि संप्रति शब्द इत्य·· ········· (1 9)तसरसि दशो निममे मध्याह्नविध्यनुष्टानार्थमवश्यगमनेन दर्शनविघ्नसंभावन · ·······(1 10) 28.

अनुनन्धमवेक्ष्य तादृशं
क्षितिभर्तुस्सुरसुन्दरीं प्रति.
गणयन्नपराधमात्मनो
मनसीत्थं पृ[थिवीभ](1 11)टोभ्यधात् ॥ 29.

उपमानपदे तिलोत्तमां
यदि मन्त्री विदधे श्रियं प्रति.
अपरीक्ष्य पुनस्तदीदृशं
कथम(1.12)र्थ तदनूदितं मया ॥

लक्ष्मीं प्रत्युपमानत्वे कदम्बवासस्तिलोत्तमां यदि विदधे तत्तदीदृशमर्थम(1 13)विमृश्य तदेव मया कथमनुकथितम्. तिलोत्तमाकथैव कथमारब्धेत्यर्थः ॥ 30.

---

1 Ms का॰. 2 Ms ॰टोभ्य॰. 3 Ms No Comm 4 Ms. ॰नूचि॰.
5 Ms ॰प्रम॰, i.e. mark before ॰म॰ but nothing on margin.

इदमीदृगनर्थसंश(1.14)यं
कथमालेख्यगृहं च दर्शितम्.
अनयन्मदनः शरव्यतां
विशतो यत्र महीपतेर्मनः ॥

ईदृगीदृ(1.15)शोनर्थविषयस्संशयो यत्र तच्चित्रगृहं कथं मया दर्शितम् यत्र विशतो राज्ञश्चित्तं लक्ष्यतां कामो(1.16)नयत् चित्तमभिनदित्यर्थः ॥ 31.

क ललाम तिलोत्तमा दिवः
प्रभुता च क मनुष्यमण्डले.
⏑ ⏑ –[1] (1.17)पुरुषस्य नेदृशी
घटनेयं पुरुषोत्तमं विना ॥

दिवो ललाम भूषणं तिलोत्तमा क भवति [मनुष्यमण्ड](1.18)ले ऐश्वर्यं क भवति पुरुषोत्तमं विष्णुं विना पुरुषस्य नेदृशी घटना भवति ॥ 32.

इयंती ⏑ ⏑ – ⏑[2] (1.19)मानसीं
रुजमाशा मम हन्तुमीश्वरी.
अभवच्च कदम्बवासवा-
न्नृपतेः काचि[दनर्थकारिणी?] ॥

[म](1.20)म मानसीं रुजं चिन्तां हन्तुं सेयमाशा परं केवलमीश्वरी समर्था भवति यत्कदम्ब............(1.21) राज्ञोनर्थकारिणी नाभूत् ॥
.......... ॥ 33.

पुरतः पुरुहूतपत्तन-
प्रमदानाम स– ⏑ – ⏑ –[5].(1.22)
तदवश्यमितोपि सङ्कटा-
दयमेव द्रुतमुद्धरिष्यति ॥

---

1 Ms. °ल. 2 Is it अथवा ? 3 Ms. °यतिसो°. 4 Ms. °तां.
5 Is it परमस्ति ? 6 Is it स एव व्याप्यथात् ?

स एव प्रथमं तिलोत्तमाजा[म]·· ··········(123*)··········रि-
ष्यति ॥ 34.

विदधात्ययमुत्तमं यदि
प्रभुभक्त्या पृथिवीबृहस्पतिः .(1.1)
⏑ ⏑ – ⏑ ⏑ –[तिलोत्तमा
सदनं स्वामि]कृते प्रवेक्ष्यति ॥

पूर्वश्लोकार्थमेव प्रपञ्चयति . स्वामिभक्त्यायं(1 2)··············
[तिलो]त्तमा स्वयमेव स्वामिकृते गृहमेष्यति ॥ 35.

नैतदाश्चर्यमित्याह ॥(1 3)

⏑ ⏑ – ⏑ ⏑ – ⏑ – ⏑ –
⏑ ⏑ – – – ⏑ कचं सुराङ्गना .
अजमिन्दुमतीमयेन वा
वपुषा किं हरिणी न शिश्रि(1.4)ये ॥

···············नाभ्यलपत् इन्दुमतीरूपेण हरिणीनाम्नी नाकस्त्री
किं नाजमश्रयत् ॥(1 5) 36

⏑ ⏑ – ⏑ ⏑ – ⏑ – ⏑ –
⏑ ⏑ – – – ⏑ जितोपि मन्मथः .
इममेकशरीरमत्र किं
हृदयस्थोपि न वेद शूलि(1 6)[नः] .

············काम इमं राजानं हरस्यैक[शरीरं](1.7)[न वेद]. 37.

तदवश्यमसौ तिलोत्तमा
द्युनदीवावततार भूतलम् .

1 See p. 156, note 3. 2 Ms. 'ष'.

अचिरादपि पत्युरेकता-
मु(1.8)[पयाता] ⁀ हवाहिनीपतेः ॥

तत्ततो हेतोर्गङ्गेव तिलोत्तमा निश्चितं भूतलमवतीर्णा सा वा(1.9)-
[हिनीनां से]नानां नदीनां च पत्युर्नृपस्य समुद्रस्य चैक्यमुपयाता गन्ता.
यातेः कर्तरि लुट् ॥ 38.

इति बुद्धि(1.10)बलेन दुस्तरा-
दपि चिन्ताजलधेस्समुद्धृतः.
वदतामिव धर्मनन्दनः
प्रथमस्सत्यवतां व्यजिज्ञ(1.11)पत् ॥

दुस्तरादगाधादपि चिन्तासमुद्रात्पूर्वोक्तबुद्धिबलेनोद्धृतस्स पृथिवीभटो
वदतां वाग्मिनामा(1.12)द्यो व्यजिज्ञपत् यथा सत्यवतां युधिष्ठिर आद्यः ॥ 39.

त्वयि पार्थिव चित्रपुत्रिका-
चिरसंदर्शनबद्धलोच(1.13)ने.
स्मयमान इवादिपूरुषो
रविरन्तर्गगनं विलम्बते ॥

हे राजंस्त्वयि चित्रस्त्रियाश्चिरं संदर्श(1.14)नार्थं कौतुकवति सति सा-
श्चर्य इव तव पूर्वपुरुषस्सूर्यो मध्येगगनं विलम्बं करोति ॥ 40.

क्षणमात्रमिवा(1.15)यमर्यमा
तुरगाणां सुरदीर्घिकातटे.
त्यजति व्यपनेतुमुद्यमं
गगनाग्रक्रमणक्रमक्लमम् ॥(1.16)

......श्वानां नभोलङ्घनखेदं निवारयितुमिव क्षणमादित्य उद्यमं
त्यजति ॥ 41.

---

1 Is it 'बहु'. 2 Ms. 'यान्ता. 3 Ms. 'नाह'. 4 Ms. 'व्यगनं.

नलिनीमभितो(। 17) ⏑—⏑—[1]
करसंस्पर्शवशेन भास्वतः .
अवलोक्य निराशयात्मनि
कृशिमानं जननी शनेरगात् ॥

मू (। 18) ···· ·· ··· [प]द्मिनीं दृष्ट्वा निराशयांशाभावेनेव श-
नेस्सौरस्य जननी छाया ह्रस्वत्वं ग(। 19)[तवती] ······ माशाभावेनेति
हेतूत्प्रेक्षणं . तृतीयासप्तम्योर्बहुलमित्ययम् ॥ 42.

शनिमातरि पा(। 20)⏑—⏑—.
⏑⏑——⏑तिमात्रमल्पताम् .
लिखितैरिव चित्रदर्शिनि
त्वयि पृथ्वीपतिभिः(। 21) [प्रतीक्ष्यते] ॥

·············भिर्नृपसेवकैस्सह शनिमातरि च्छायायामल्पतां म-
ध्याह्नजातं ह्रस्वत्वं(। 22)········ ····· रिव राजभिश्चित्रं पश्यति त्वयि
प्रतीक्ष्यते . मध्याह्ने हि सेवका देवकार्यवशाद्विर(। 23**82)लीभवन्ति ॥ 43.

इति चित्रगतामराङ्गना-
मुखपेयूषमयूखमण्ड[लात्] .
⏑⏑—⏑⏑—⏑—⏑—
⏑⏑——⏑⏑(। 1)राज भारती ॥

चित्रलिखिततिलोत्तमामुखचन्द्रमण्डलाद्राजने·········(1.2) 44.

प्रथमानुचरस्मरेच्छया
प्रतिमोक्तुं नृपसामवायिकान् .

---

1 Is it त्रिकस्तौ ? 2 Ms. "राश्यमात्म". 3 Ms "नरजनी". र crossed out and "न" is under "अ". 4 Ms "शमाशा". 5 Ms "दुग". 6 Pānini, 2. 4. 84. 7 Is it पार्थिवानुगै- सह यान्त्यामति ? 8 Ms. "च्छायाम". 9 Ms. "तम".

पृथिवीम[ट एव]⏑⏑—-
⏑⏑——⏑⏑—⏑—⏑— .(l.3)

. प्रथमोनुचरो यस्स्मरस्तदिच्छयेव नृपान्स्सोमवायिकांश्च प्रतिमोक्तुं··· ·········(l.4)वारचत् यदि राजैतान्प्रत्यमोक्ष्यत्तदा काममोहितत्वात्तेषामुचितां प्रतिपत्तिं नाकरिष्यदतो मागध एव प्र(l.5)तिमुक्तवानित्यर्थः ॥44.

मनसा सह चक्षुरिन्द्रिये
नृपतेश्चित्रमृगीदृशा हृते .
विरहान्धतयेव नेन्द्रियैः
परिशि(l.6)ष्टैः प्रसृतं स्वकर्मणि ॥

तिलोत्तमया राज्ञश्चित्ते नेत्रे च हृते सति शेषैः कर्णादिभिरिन्द्रियैस्स्वकर्मणि [श्रवणा](l.7)दौ न प्रवृत्तम् . अतस्संभाव्यते विरहेणान्ध्यात् ॥45.

अशृणोदमृतस्रुतश्श्रुते-
र्न बहिर्गायत एव [बन्दिनः] .
[ह](l.8)रिचन्दनवारिणोक्षितं
शिशिरं नावजगाम कुट्टिमम् ॥

श्रुतेः कर्णयोरमृतस्रुतो बहिर्गायतो गायनान्स नैवा·········(l.9)
हरिचन्दनसिक्तां शीतलां भुवं च नाचेतयत् ॥ 46.

न रदक्षतभाग्यभागिता-
मनयन्नागरखण्डवीटिकाम् .
घन(l.10)साररसानुसारिणा
न जलार्द्रापवनेन पिप्रिये ॥

1 Ms. 'धारा'. Cf. p. 3, note 3. 2 Ms. 'तोर्वे'. 3 Ms. 'भर'. 4 Ms. 'दी'.

स ताम्बूलवीटिकां दशनच्छेदेन भाग्यवत्त्वं नानयत्. न च(1 11) कर्पूराद्रेंण जल·· · ·वायुनासावतुंप्यत् ॥ 47.

स्थितया सुरसुभ्रुवा मन-
स्युपदिष्टैरिव मन्थरैः पदैः.
त्रि(1 12)दिवादविशिष्टतस्ततो
निरगाच्चित्रगृहात्कथंचन ॥

चित्ररथयाप्सरसोपदिष्टैरिवालसैः पदैः स्वर्ग(1 13)सकाशादभिन्नात्तत-श्चित्रगृहात्स निर्गत ॥ 48.

कृतमाङ्गलिकादिकाह्निकः
प्रतिमुच्य क्षितिपं शनैः शनैः (1 14).
तरणेस्तरुणिम्नि तेजसां
शिथिले वन्दिपतिर्विनिर्ययौ ॥

कृतं माङ्गलिकमाह्निकं मागधोचितं कर्म ये(1.15)न स वन्दी राजानं प्रतिमुच्य सूर्यतेजसि मन्दे सति शनैश्शनैर्निर्गत. ॥ 49.

इयदाधिभराङ्कमुद्वहे-
दधि---(1 16)पि किमेष मामिति.
उपनीतमपि स्वसेवकैः
पुरतो नाधिरुरोह वाजिनम् ॥

इया[नाधि]भरो यस्य(1 17) ताद·· ·· ·· दृशं मामतिसमर्थोऽप्येपो-श्वो मां किं कथ················(1.18)नीतमपि नारोहत् ॥ 50.

भविता तव पालकं प्रति
ध्रुवधूः केन पथानुरागिणी.

---

1 Ms भाग्यत्व 2 Ms °सो तु°. 3 Ms. मिय°. Is it श्रितया ?.
4 Ms. °वृ°.

अवनम्रमुखो मुहुर्मु[हा](1.19)-
निति पृच्छन्पृथिवीमिवागमत् ॥

तत्र भोक्तारं राजानं प्रति तिलोत्तमानुरक्ता केनोपायेन भवि[तेती]-(1.20)व भूमिं पृच्छन्नतमुखस्स गृहं गतवान् ॥ 51.

शतशोपि विकल्पकल्पना-
चतुरे चेतसि या न दि[युते](1.21) ।
उदभावि तया स्फुरत्तया
रभसाद्दक्षिणि तस्य दक्षिणे ॥

शतवारं विकल्पानां कल्पनायां··········(1.22)खे विषये चतुरे तस्य चित्ते या नाद्युतश्चिन्तावशात्तस्य चित्ते जात्वपि नास्फुरदित्यर्थः तया·········(1.23)न तस्य दक्षिणनेत्रे सहसा जातम् । स्फुरत्ता प्रतिभा स्पन्दश्च ॥ 52.

स शरीरगुणोस्य कश्चन
⏑⏑––⏑⏑[द](1.24)र्शनोत्सवम् ।
स्फुरणं स्फुटमेव चक्षुषा
यदवामेन सदानुभूयते ॥

कश्चन वक्तु············(1.25*)············महता लाभः यतो दक्षिणेन नेत्रेण सदा स्पन्दोनु(1.1)[भूयते] । 53.

⏑⏑–⏑⏑–⏑–⏑–
⏑⏑–दर्शनमात्रकं फलम् ।
अपरिश्लथमानसज्वरः
प्रभुभक्त्येकपरोवि(1.2)[शद्गृहम्] ।

1 Ms. °गतम्. 2 Ms. °नापा°. 3 Ms. °तश्चिन्ता°. 4 Ms. °तं.
5 Ms. स्पर्गो°. 6 Ms. °रम°. 7 Ms. °त्यैकपरो°.

.. ......दर्शनमेवं फलं जानन्सोशिथिलचिन्तस्स्वामिभक्तिपरो गृ-
हम(13)विशन् ॥ 54.

अ[चिरेण?] मनोरथः प्रभोः
फलितस्स्यादिति चिन्तयन्नसौ .
प्रथमोपगतेन केनचि-
त्पठितं(14) [श्लोकमिमं तदाशृणोत्?] ॥

राज्ञोभिलाषस्सफलोपि स्यादिति विमृशन्स केनापि नवागतेन पण्डितेनेमं पठि(15) ......शृणोत् ॥ 55.

सलिलादपि निर्ययौ रमा
धरणेरप्युदपादि मैथिली .
दहनादपि याज्ञसे[निका](16)
[किम]लभ्यं पुरुषार्थशालिनाम् ॥

समुद्राल्लक्ष्मीरुद्भूत् भूमे........अग्नेरपि द्रौपदी(17).........
शालिभिः किं न लभ्यते ॥ 56.

समयानुगुणेत्युपश्रुति-
श्श्रुतिपेयूषविलासवापिका .
उपताप(18)⏑⏑⏑⏑⏑
शिथिलीकर्तुमिवोपचक्रमे ॥

श्रुते. कर्णस्यामृतपूर्णक्रीडापुष्करिणी यवन्तत्कालो(19)चित......
स्तादृशं तापं स्वल्पीकर्तुमिव प्रारेभे ॥ 57.

कविपण्डितचक्रमेलकं
प्रणमन्प्राञ्जलिरेप(110) —⏑—[1].

1 Ms. 'नमेरु'. 2 Ms 'कन्नु'. 3 Ms 'मत्या'. 4 Is it सागर. ?

उपहूय स पद्मनाभ इ-
त्यवदद्विग्रहराजमन्त्रिणम् ॥

कविपण्डितानां चक्रेण मेलकं(l.11) नमंत्स[1] पद्मनाभ इत्याहूय विग्रह-
राजामात्यमित्यवदत् ॥  58.

इदमन्यपरं वचो जगौ
कविता कश्च पपा(l.12)ठ चात्र कः.
कतमश्च विपंश्चि[2]देप यो
निविडो[3]प्णीपदुरीत्यकुन्तलः ॥

कः कविरिमं श्लोकं कृतवान् कश्चो(l.13)क्तवान् निविडेनोष्णीपेणादरय-
[केशः]·········कतमः. काश्मीरप्रक्रि[या]·········विध्यम् (?) ॥ 59.

तमुवाच स योय(l.14)—⏑—
प्रथमे प्रश्नयुगे स एव ते.
यदि सत्यमवैपि मद्वच-
श्चरमं पृष्टमहं ब्रवीमि तत् ॥

योयं विपश्चि(l.15)त्स······तव प्रश्नयुगस्योत्तरम्. स एव कविः पा-
ठकश्चेत्यर्थः. यदि मद्वचस्सत्यं जानासि तदा कोयं विप(l.16)·········-
··· ॥  60.

इति वादिनमेन—⏑—
⏑⏑——⏑⏑—[स] वन्दिनाम्.
क्षणम(l.17)[प्यनृत]⏑——⏑—
⏑⏑——⏑⏑—[मुखा]न्मुजे ॥

तव मुखपद्मेऽसत्यजलकणाः क्षणमपि न तिष्ठं(l.18)न्तीति पृथिवी-
भटः पद्मनाभमवदत् ॥  61.

1 Ms. नमत्स. See above, p. 305, note 1. 2 Ms. °भिश्चि°. 3 Ms. निवि°.
4 Ms. °यदु°. 5 Ms. कायं. 6 Ms. °ष्ट°.

पृथिवीभटयुक्तवन्तमि-
त्यवदन्मानधरो महत्तमः .
मिहिरो(l 19)[न्यगुणप्रकाशने]
परदोषावरणे महत्तमः ॥

स मानी महत्तम एवमुक्तवन्तं पृथिवीभटमित्यवदत्(l 20)··········
प्रकाशने सूर्यः परेषां दोषाच्छादने महानन्धकार. . 62.

विबुधश्च कविश्च शारदा-
य ⏑ — — ⏑ ⏑ (l 21)[मण्डला[1]]द्वयम् .
निगमागमतीर्थतापस-
प्रथमोयागतबाज[यान]कः ॥

पण्डितः कविश्च तथा नि(l 22) ·········[ज]यानकश्च [शारदा]चे-
त्यत्कश्मीरमण्डलादागतः ॥ 63.

युगपत्सुमं(l 23)— ⏑ — — ⏑ —
⏑ ⏑ — — ⏑ रुद्देत्यमुष्य धीः .
अमुनैव सुतेन शारदा
गिरिकन्येव गुहेन नन्दति ॥

सुमन(l 24**83) 64.

[Six lines at the beginning of page missing]

शशिखण्डशिखण्डमण्डनं
प्रति निर्वेदनिवेदनं व्यधात् .

·············(l 7)या पूजया हेतुभूतया चन्द्रावचूडाभूषणं हरं प्रति
वन्दी··········· ··· ॥ 65.

1 Ms. 'न्दा'. 2 Ms. 'सुम'.

⏑ ⏑ – ⏑ ⏑ – ⏑ – ⏑ (1.8)धे
प्रभुभक्तिव्यभिचारवन्न चेत् .
परिपूरय तन्मनीषितं
द्रुत – ⏑ ⏑ – ⏑ – ⏑ – .

………[ह्](1.9)दयेनाहं यदि न स्वामिभक्तिव्यभिचारसहितस्त-
दा ममाभिलाषं सद्यः पूरयेतीश्वर………(1.10) ॥　　66.

परिपक्वमिहैत्य तत्क्षणं
भगवत्पूजनकल्पशाखिनः .
कविसूरिसभासभाजनं
फलमास्वा[दयितुं स](1.11) निर्ययौ ॥

हरार्चनकल्पवृक्षस्य तत्क्षणं पक्वं फलं कविपण्डितदर्शनं चर्वयितुं स निर्गतः ॥　　67.

किय(1.12)दाय(?)तिवृत्तवाक्पथ-
स्तमुपश्लोक्य कविर्जयानकः .
स्वपुरीपरिहारकारणं
परिपृष्टो भणितुं प्र[चक्रमे](1.13) .

अतिवृत्तोतिक्रान्तो वाचां पंथो येन . गुणबाहुल्यादिति भावः . तं स्तुत्वा…………(1.14)हेतुं पृष्टः कथयितुमारब्धवान् ॥　　68.

समपादि पुमान्महामुनिः
किल यस्मै शशिमौ[लिनार्पितम्] .(1.15)
शयनीकरणच्छलाद्गुरोः
पयसां राशिमवत्यधोक्षजः ॥

---

1 Ms. °र्चयि°.　　2 Ms. °श्ति°.　　3 Ms. पायो.　　4 Ms. योस्मै.

किल प्रसिद्धौ पुमान्मनुष्य ·····(1.16)रुपमन्युनामा संपन्नस्तस्य महामुनेर्गुरो · ·· · · (1.17)रक्षति. हरेणोपमन्यवे यो दत्तः. उपमन्युर्नारायणस्य दी[क्षागुरुरासीत ?]············ 69.

[उप](1.18)मन्युकुलादपोहितुं
न पटुर्गोत्रपरम्परागतम्.
कलि—◡◡—◡◡—◡—
◡◡——◡◡——◡—(1.19)धनम् ॥

कुलक्रमागतं शिवभक्तिधनमुपमन्युस ··········· ···(1.20)स्य सन्ततिक्रमपर्याप्तत · ·······हरंभक्तिमु ····· ·········(1.21)मेण प्राप्ततमस्य शिवभक्तिधनस्य···· ··············(1.22)स्यां विरोचनस्सूर्ये··· ·· ··· ······(1.23*) 70.

[Six lines at the beginning of page missing]

··················घ निमीलितचक्षु··················(1.7)-
··· ··············तोपिता शारदा सूर्योदये·········चितनेत्रस्य दर्शन(1.8)- 71.

◡◡—◡◡—◡—◡—
[क्षणसास्नातिकरत्नन्]पुरम्.
चरणं च निधा[य]—◡—
◡◡—मि त्रिदिवीकृत(1.9)◡—..

·· ······गङ्गाजलं तत्र स्नानेन हेतुना क्षणं सुस्नातं प्रेच्छद्रत्ननूपुरं यस्य(1.10)········ 72.

कवितां पथि पाद्धये गिरां-
मसि मां पङ्भिरुप◡——◡—(1.11)

1 Ms °त्रिपी 2 Ms किञ्जि° ? 3 Ms. दरि°. 4 Ms °मिति°.
5 Ms °रप्नुम्नाता°. 6 Ms. °र°.

⏑⏑—⏑⏑—⏑—⏑—
⏑⏑—⏑⏑—⏑—⏑नात् ॥

षड्भिर्जन्मभिर्मा सेवित्वा षड्विधे प्राकृतादिष(l.12)·············त-
वांस्तां कवितां मनुष्यरूपस्य हरेर्वक्ष्यमाणदशा पृथ्वीरा(l.13)[ज]·······
······त्यर्थः ॥ 73.

पुरुहूतपुराङ्गना पुरा
परिखिन्ना चिरलास्यलीलया (l.14)
⏑⏑—⏑⏑—⏑—⏑—
⏑⏑—⏑⏑—⏑विग्रहा ॥

[1]चिरं नृत्यक्रीडया श्रान्ता तिलोत्तमाप्सरा गङ्गाया(l.15)······ 74.

⏑⏑—⏑⏑कारविन्दिनी-
हठमेलापधियागतं विदन् ।
पुलिनात्तृपि(l.16)[ता]⏑—⏑—
⏑⏑—⏑⏑—⏑—⏑—॥

पद्मिनी हठेन मेलापे धिया वाञ्छया आगतं चन्द्रं जान(l.17)···
···वनूढवान्. 75.

दलित⏑⏑—⏑—⏑—
⏑⏑—⏑⏑—⏑(l.18)—⏑— ।
⏑⏑—⏑⏑—⏑—⏑—

रमणीं पद्मवनस्थितास्मरत् ॥

दलितानां मुक्तानां······(l.19)·················ली तया भयङ्करं
तथाविधं वीक्ष्य पद्मवने वर्तमा(l.20)[ना]······ 76.

---

1 Ms. °यास्ताक°. 2 Ms. °धिनो. Can it be °भिन्या ? 3 Ms. °न्द्रला°.

⏑⏑–⏑–⏑–⏑–

स्मरणानन्तरमेव दर्शनम्.
यददीयत येन स श्रियो
वश(1.21)——⏑⏑–⏑–⏑–

.. .. [स्मर]णकाले एव तद्दर्शनं दत्तं येन हेतुना जनेन मह
(122) . .......... . 77.

⏑⏑–⏑⏑–⏑–⏑–

⏑करं नाकनदीतटस्थितः.
⏑⏑(1.23)—⏑⏑–⏑–⏑–.
⏑⏑—⏑⏑–⏑–⏑– ॥

.. .. मिव गङ्गायां स्थितः कामो हरिं(1.24**84) 78.

* * * * * * * * * * *

1 Copyist's Remark—अत ऊर्ध्वं ग्रन्थ. त्रुटितः.